र्म्मस्पृक्' इति, 'अरुन्तुदस्तु मर्म्मस्पृक्' इति चामरः। 'विध्वरुषोस्तुदः' इति खश्प्रत्ययः। 'अरुर्द्विषद'—इत्यादिना मुमागमः। आलानं बन्धनस्तम्भमिव। 'आलानं बन्धनस्तम्भे' इत्यमरः। असह्या सोढुमशक्या पीड़ा दुःखं यस्मिन् तत् अविहि, दुःसहदुःखजनकं विद्धीत्यर्थः। 'निर्वाणोत्थानशयनानि त्रीणि गजकर्म्माणि' इति पालकाव्ये। 'ऋणं देवस्य यागेन ऋषीणां पाठकर्म्मणा। सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत्' ॥

११। হে ভগবন্! স্নানবিরহিত হস্তীর পক্ষে তদীয় বন্ধনস্তম্ভ যেরূপ মর্ম্মঘাতিনী যন্ত্রণার কারণ হইয়া থাকে, সেইরূপ পৈতৃক ঋণ আমার দুর্ব্বিষহ পীড়ার কারণ হইয়া উঠিয়াছে ॥

तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२

७२ अः। तात! अहं यथा तस्मात् मुच्ये तथा संविधातुम् अर्हसि, तथाहि दुरापे इक्ष्वाकूणाम् अर्थे सिद्धयः त्वदधीनाः ॥ वाच्य—अर्ह्यते (त्वया) सिद्धिभिः त्वदधीनाभिः।

७२। हे तात, तस्मात् पितृकात् ऋणाद् यथा मुच्ये मुक्तो भवामि कर्म्मकर्त्तरि लट्। तथा संविधातुं कर्त्तुमर्हसि। हि यस्मात् कारणात् इक्ष्वाकूणामिक्ष्वाकुवंश्यानाम्। तद्राजत्वाद् बहुष्वणो लुक्। दुरापे दुष्प्राप्येऽर्थे। सिद्धयस्त्वदधीनास्त्वदायत्ताः। इक्ष्वाकूणामिति शेषे षष्ठी। 'न लोक'—इत्यादिना कृद्योगे षष्ठीनिषेधात् ॥

१२। হে গুরো! যাহাতে আমি সেই ঋণদায়মুক্ত হইতে পারি, আপনি সেইরূপ উপায় করুন। ইক্ষ্বাকুবংশীয়দিগের কোন বিষয় দুষ্প্রাপ্য হইলে তাহার সংঘটন আপনারই ক্ষমতাধীন ॥

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३

७३ अः। राज्ञा इति विज्ञापितः ऋषिः ध्यानस्तिमितलोचनः सन् सुप्तमीनो ह्रदः इव क्षणमात्रं तस्थौ ॥ वाच्य—विज्ञापितेन ऋषिणा स्तिमितलोचनेन सता सुप्तमीनेन ह्रदेन इव तस्थे।

७३। इति राज्ञा विज्ञापितः ऋषिर्ध्यानेन स्तिमिते लोचने यस्य सः ध्यानस्तिमितलोचनो निश्चलाक्षः सन् क्षणमात्रं सुप्तमीनो ह्रद इव तस्थौ ॥

१३। নরনাথ দিলীপ এইরূপে সমস্ত নিবেদন করিলে পর, মহর্ষি বশিষ্ঠদেব ক্ষণকাল ধ্যাননিমীলিতনেত্রে সুপ্তমীন হ্রদের ন্যায় অবস্থান করিতে লাগিলেন।

सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्त्तुरथैनं प्रत्यबोधयत् ॥ ७४

७४ अ: । भावितात्मा स प्रणिधानेन भुवो भर्त्तु: सन्तते: स्तम्भकारणम् अपश्यत्, प्रत्यबोधयत् ॥ वाच्य—भावितात्मना तेन अदृश्यत एष प्रत्यबोध्यत ।

७४ । स मुनि: प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तः भुवो भर्त्तुर्नृपस्य सन्तते: स्तम्भकारणं सन्तानप्रतिबन्धकारणम् अपश्यत् अथानन्तरमेनं नृपं प्रत्यबोधयत्, स्वदृष्टं ज्ञापितवानित्यर्थ: । एनमिति 'गतिबुद्धि'—इत्यादिना अणिकर्त्तु: कर्म्मत्वम् ॥

৭৪। সমাধিনিবন্ধন বিশুদ্ধাত্মা সেই মহর্ষি (স্বীয় তপঃপ্রভাবে) মহী দিলীপের যে কারণবশতঃ সন্তান হইতেছে না, তাহা জানিতে পারিলেন তৎসমস্ত তাঁহাকে অবগত করাইলেন ॥

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यत: ।
आसीत् कल्पतरुच्छायामाश्रिता सुरभि: पथि ॥७५

७५ अ: । पुरा शक्रम् उपस्थाय उर्वीं प्रति यास्यत: तव पथि सुरभि: कल्पतरुच्छायाम् आश्रिता आसीत् ॥ वाच्य—सुरभ्या आश्रितया अभूयत ।

७५ । पुरा पूर्वं शक्रमिन्द्रमुपस्थाय संसेव्य उर्वीं प्रति भुवमुद्दिश्य यास्यतो गमिष्यतस्तव पथि कल्पतरुच्छायामाश्रिता सुरभि: कामधेनुरासीत् । तत्र स्थितेत्यर्थ: ॥

৭৫। (হে বৎস!) একদা যখন তুমি দেবরাজের উপাসনা করিয়া (স্বর্গ হইতে) ভূলোক অভিমুখে আগমন করিতেছিলে, সেই সময়ে পথিমধ্যে (সুরভি সুরভি কল্পতরুচ্ছায়ার আশ্রয় গ্রহণ করিয়া অবস্থান করিতেছিলেন ॥

धर्म्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचर: ॥ ७६

७६ अ: । धर्म्मलोपभयात् इमां राज्ञीम् ऋतुस्नाताम् स्मरन् त्वं प्रदक्षिणक्रियार्हायां तस्यां साधु न आचर: ॥ वाच्य—स्मरता त्वया आचर्य्यत ।

७६ । तत: किमित्यत आह—धर्म्मलोपेति । ऋतु: पुष्पं, इति यावत् । 'ऋतु: स्त्रीकुसुमेऽपि च' इत्यमर: । ऋतुना निमित्तेन स्नातामिमां राज्ञीं सुदक्षिणां धर्म्मस्य ऋत्वभिगमनलक्षणस्य लोपाद् भ्रंशात् यद्भयं तस्मात् स्मरन् ध्यायन् । 'मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथम् प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन् ॥' इति शास्त्रात् प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां त्वं साधु प्रदक्षिणादिसत्कारं आचर: नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भाव: । ऋतु कालाभिगमने मनु:—'ऋतुकालाभिगामी स्यात् स्वदारनिरत:

इति। अकरणे दोषमाह पराशरः—'ऋतुस्नातां तु यो भार्य्यां स्वस्थः सन्नोपगच्छति। बालगोघ्नापराधेन विध्यते नात्र संशयः ॥' इति।

৭৬। তুমি ( সেই সময়ে ) ঋতুস্নাতা এই বধূ সুদক্ষিণাকে, স্মরণ করিয়া, ( ঋতুকালে অভিগমন না করিলে ) স্বামি-ধর্ম্ম লোপ পাইবে এই ভয়ে প্রদক্ষিণাদি সৎকার-যোগ্য সেই সুরধেনুর প্রতি যথোচিত সম্মান প্রদর্শন কর নাই ॥

**अवजानासि मां यस्मादतस्ते न भविष्यति ।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ৭৭**

৭৭ অ:। यस्मात् माम् अवजानासि अतः मत्प्रसूतिम् अनाराध्य ते प्रजा न भविष्यति इति सा त्वां शशाप ॥ वाच्य—अहम् अवज्ञाये, प्रजया भविष्यते ( भाविष्यते ) तया त्वं शेपिषे।

৭৭। यस्मात्कारणान्मामवजानासि तिरस्करोषि, अतः कारणान्मत्प्रसूतिं मम सन्ततिमनाराध्य असेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशाप। 'शप आक्रोशे' ॥

৭৭। এই নিমিত্ত সেই দেবধেনু ( ক্রুদ্ধ হইয়া ) 'আমাকে অবজ্ঞা করিলে বলিয়া আমার সন্ততির আরাধনা না করিলে তোমার সন্ততি হইবে না' এই অভিসম্পাত প্রদান করিয়াছিলেন ॥

**स शापो न त्वया राजन् न च सारथिना श्रुतः ।**
**नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ৭৮**

৭৮ অ:। राजन्! उद्दामदिग्गजे आकाशगङ्गायाः स्रोतसि नदति सति स शापः त्वया न श्रुतः सारथिना च न श्रुतः ॥ वाच्य—तं शापं त्वं न श्रुतवान्। सारथिः च।

৭৮। कथं तदस्माभिर्न श्रुतमित्याह—स शाप इति। हे राजन्! स शापस्त्वया न श्रुतः। सारथिना च न श्रुतः। श्रु श्रवणे। हेतुमाह—क्रीड़ार्थमागता उद्दामानो दाम्न उन्नता दिग्गजा यस्मिंस्तथोक्ते आकाशगङ्गाया मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति ॥

৭৮। হে রাজন্! উচ্ছৃঙ্খলভাবে ক্রীড়োন্মত্ত দিগ্‌গজগণদ্বারা ব্যাহতগতি আকাশ-গঙ্গাপ্রবাহের ( উচ্চ ) নিনাদবশতঃ সেই শাপ তোমার অথবা তোমার সারথির, কর্ণগোচর হয় নাই ॥

**ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।**
**प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ৭৯**

৭৯ অ:। तदवज्ञानात् आत्मनः ईप्सितं सार्गलं विद्धि, हि (यथाहि) पूज्यपूजाव्यतिक्रमः श्रेयः प्रतिबध्नाति ॥ वाच्य—विद्यताम्,...व्यतिक्रमेण प्रतिबध्यते।

७९। अस्तु, प्रस्तुते किमायातमित्यत आह—ईप्सितमिति। तदव-
ज्ञानात्तस्या धेनोरवज्ञानादपमानादात्मनः स्वस्य आप्तुमिष्टमीप्सितं मनो-
रथम्। आप्नोतेः सन्नन्तात् क्तः, ईकारश्च। सार्गलं सप्रतिबन्धं, वि-
जानीहि। तथाहि—पूज्यपूजाया व्यतिक्रमोऽतिक्रमणं श्रेयः प्रतिबध्नाति

৭৯। হে বৎস! সেই সুরভিকে অবজ্ঞা করিয়াছিলে বলিয়া, তোমার অভীষ্টলাভে বিঘ্ন জন্মিয়াছে, জানিও। দেখ, পূজ্য ব্যক্তির পূজার ব্যতিক্রম হইলে ইষ্টসাধনে (এইরূপ) বিঘ্ন সংঘটিত হইয়া থাকে॥

**हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः।**
**भुजङ्गपिहितद्वारं पातालमधितिष्ठति॥ ८०**

८० अः। साच इदानीं दीर्घसत्रस्य प्रचेतसः हविषे भुजङ्गपिहितद्वारं पातालम् अधितिष्ठति।
वाच्य—तया स्थीयते।

८०। तर्हि गत्वा तामाराधयामि, सा वा कथञ्चिदागमिष्यतीत्याश-
न कर्त्तव्येत्याह—हविषे इति। सा च सुरभिरिदानीं दीर्घं सत्रं चिर-
कालसाध्यो यागविशेषो यस्य तस्य प्रचेतसो हविषे दध्याज्यादिहविषे
भुजङ्गपिहितद्वारं भुजङ्गावरुद्धद्वारं ततो दुष्प्रवेशं पातालमधितिष्ठति
पाताले तिष्ठतीत्यर्थः। 'अधिशीङ्स्थासां कर्म्म' इति कर्म्मत्वम्॥

৮০। সেই সুরভি এক্ষণে, প্রচেতা (বরুণ) যে দীর্ঘকালব্যাপী যজ্ঞ করিতেছেন, তাহার ঘৃতাদির অভাব পূরণার্থ ভুজঙ্গরুদ্ধদ্বার পাতালপুরে অবস্থান করিতেছেন॥

**सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः।**
**आराधय सपत्नीकः प्रीता कामदुघा हि सा॥ ८१**

८१ अः। त्वं सपत्नीकः शुचिः सन् तदीयां सुरभेः सुतां प्रतिनिधिं कृत्वा आराधय, हि(यतः सा)
प्रीता (सती) कामदुघा॥ वाच्य—त्वया सपत्नीकेन शुचिना तदीया सुता प्रतिनिधिः आराध्यताम्,
तया प्रीतया कामदुघया (भूयते)

८१। तर्हि का गतिरित्यत आह—सुतामिति। तस्याः सुरभेरि-
तदीया, तां सुतां सुरभेः प्रतिनिधिं कृत्वा, शुचिः शुद्धः। सह पत्न्या
वर्त्तत इति सपत्नीकः सन्। 'नद्यृतश्च' इति कप्प्रत्ययः। आराधय। हि
यस्मात्कारणात् सा प्रीता तुष्टा सती, कामान्दोग्धीति कामदुघा भवति।
'दुहः कप् घश्च' इति कप्रत्ययः, घादेशश्च॥

৮১। তুমি তাঁহার কন্যাকে তাঁহার প্রতিনিধি করিয়া আরাধনা কর; তিনি
প্রসন্না হইলে তোমার মনোরথ পূর্ণ হইবে॥

**इति वादिन एवास्य होतुराहुतिसाधनम् ।**
**अनिन्द्या नन्दिनी नाम धेनुरावबृते वनात् ॥ ८२**

८२ अ: । इति वादिन एव अस्य होतु: आहुतिसाधनं नन्दिनीनाम अनिन्द्या धेनु: वनात् आवबृते ॥ वाच्य...साधनेन नन्दिन्या अनिन्द्या धेन्वा ।

८२ । इति वादिनो वदत एव होतुर्हवनशीलस्य । 'तृन्' इति तृन्प्रत्यय: । अस्य मुनेराहुतीनां साधनं कारणम् । नन्दयतीति व्युत्पत्त्या नन्दिनी नाम, अनिन्द्या अगर्ह्या प्रशस्ता धेनुर्वनादावबृते प्रत्यागता । 'अव्याक्षेपो भविष्यन्त्या: कार्य्यसिद्धेर्हि लक्षणम्' इति भाव: ॥

৮২। এই কথা বলিতে বলিতে হোতা বশিষ্ঠদেবের হোমসাধিনী সুপ্রশস্তা নন্দিনীনাম্নী ধেনু বন হইতে প্রত্যাবৃত্ত হইলেন ॥

**ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।**
**बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥ ८३**

८३ अ: । ( कीदृशी ) पल्लवस्निग्धपाटला ललाटोदयम् आभुग्नं श्वेतरोमाङ्कं बिभ्रती अतएव नवं शशिनं बिभ्रती सन्ध्येव स्थिता ॥ वाच्य—पाटलया बिभ्रत्या सन्ध्यया इव स्थितया । (आवबृते) ।

८३ । सम्प्रति धेनुं विशिनष्टि—ललाटोदयमिति । पल्लववत् स्निग्धा चासौ पाटला च । सन्ध्यायामप्येतद्विशेषणं योज्यम् । ललाटे उदयो यस्य स ललाटोदय: तम्, आभुग्नमीषद्वक्रम् । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमर: । 'ओदितश्च' इति निष्ठातस्य नत्वम् । श्वेतरोमाण्येव अङ्कस्तं बिभ्रती, नवं शशिनं बिभ्रती सन्ध्येव स्थिता ॥

৮৩। নবকিশলয়সদৃশ সুস্নিগ্ধ পাটলবর্ণা সেই নন্দিনী, ললাটসঞ্জাত ঈষদ্বক্র শ্বেতবর্ণ রোমরাজি ধারণ করতঃ, নবোদিত-শশিকলা-ভূষিতা সন্ধ্যাদেবীর ন্যায় শোভা প্রাপ্ত হইয়াছিলেন ॥

**भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।**
**प्रस्रवेनाभिवर्षन्ती वत्सालोकप्रवर्त्तिना ॥ ८४**

८४ अ: । ( पुन: किम्भूता ) कुण्डोध्नी वत्सालोकप्रवर्त्तिना कोष्णेन अवभृथादपि मेध्येन प्रस्रवेन भुवम् अभिवर्षन्ती ॥ वाच्य—कुण्डोध्न्या अभिवर्षन्त्या ( आवबृते ) ।

८४ । कोष्णेन किञ्चिदुष्णेन । 'कवं चोष्णे' इति चकारात्कादेश: । अवभृथादपि अवभृथस्नातादपि मेध्येन पवित्रेण । 'पूतं पवित्रं मेध्यं च' इत्यमर: । वत्सस्यालोकेन प्रदर्शनेन प्रवर्त्तिना प्रवहता प्रस्रवेन क्षीरा-

भिस्यन्दनेन भुवमभिवर्षन्ती सिञ्चन्ती। कुण्डमिव ऊधः आपीनं य[...] सा कुण्डोध्नी। 'ऊधस्तु क्लीवमापीनम्' इत्यमरः। 'ऊधसोऽनङ्' इ[...] नङादेशः। 'बहुव्रीहेरूधसो ङीष्' इति ङीष्।

৮৪। তিনি কুণ্ডতুল্য পীবরস্তন হইতে স্বীয় বৎসদর্শনে ক্ষরিত, যজ্ঞাবভৃ[...]পেক্ষা পবিত্রতর, ঈষদুষ্ণ দুগ্ধ প্রবাহে ধরাতল অভিষিক্ত করিয়াছিলেন॥

**रजःकणैः खुरोद्भूतैः स्पृशद्भिर्गात्रमन्तिकात्।**
**तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः॥ ८५**

८५ अः। खुरोद्भूतैः अन्तिकात् गात्रं स्पृशद्भिः रजःकणैः महीक्षितः तीर्थाभिषेकजां शु[द्धिम्] आदधाना॥ वाच्य—आदधानया ( आवव्रते )।

८५। खुरोद्भूतैरन्तिकात्समीपे गात्रं स्पृशद्भिः। 'दूरान्तिकार्थे[भ्यो] द्वितीया च' इति चकारात्पञ्चमी। रजसां कणैः। महीं क्षियति इ[ति] इति महीक्षित् तस्य। तीर्थाभिषेकेण जातां तीर्थाभिषेकजाम् शुद्धि[म्] आदधाना कुर्वाणा। एतेन वायव्यं स्नानमुक्तम्। उक्तं च मनुना—'आ[ग्नेयं] भस्मना स्नानमवगाह्यं तु वारुणम्। आपो हि ष्ठेति च ब्राह्मं वाय[व्यं] गोरजः स्मृतम्॥' इति॥

৮৫। তাঁহার খুরাঘাতে উদ্গত রজোরাশি, সমীপবর্ত্তী নরপতি দিলীপের শরী[রে] সংলগ্ন হইয়া, তাঁহার তীর্থাভিষেকসম্ভূত পবিত্রতা সম্পাদন করিয়াছিল॥

**तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः।**
**याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत्॥ ८६**

८६ अः। निमित्तज्ञस्तपोनिधिः पुण्यदर्शनां तां दृष्ट्वा आशंसितावन्ध्यप्रार्थनं याज्यं पुनः अब्रवी[त्]॥ वाच्य...निधिना निमित्तज्ञेन...प्रार्थनः याज्यः ऊचात।

८६। निमित्तज्ञः शकुनज्ञस्तपोनिधिर्वशिष्ठः, पुण्यं दर्शनं यस्याः तां धेनुं दृष्ट्वा, आशंसितं मनोरथः। नपुंसके भावे क्तः। तत्रावन्ध्यं सफ[लं] प्रार्थनं यस्य स तम्, अवन्ध्यमनोरथमित्यर्थः। याजयितुं योग्यं याज्यं पार्थिवं, पुनरब्रवीत्॥

৮৬। শুভাশুভকারণবেত্তা তপোধন পুণ্যদর্শনা নন্দিনীকে (সেই সময়ে সমুপস্থি[ত] হইতে) দেখিয়া, অভীষ্টসিদ্ধি অবধারিত জানিয়া, যজমান নরপতি দিলীপকে, বক্ষ্য[মাণ] বাক্যগুলি বলিতে লাগিলেন॥

**अदूरवर्त्तिनीं सिद्धिं राजन् विगणयात्मनः।**
**उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत्॥ ८[७]**

८७ अ:। हे राजन् आत्मनः सिद्धिम् अदूरवर्त्तिनीं विगणय, यत् नाम्नि कीर्त्तिते एव इयं कल्याणी उपस्थिता॥ वाच्य—सिद्धिः अदूरवर्त्तिनी विगण्यताम्। अनया कल्याण्या उपस्थितया (भूयते)।

८७। हे राजन्! आत्मनः कार्य्यस्य सिद्धिम् अदूरवर्त्तिनीं शीघ्रभाविनीं विगणय विद्धि, यद्यस्मात्कारणात् कल्याणी मङ्गलमूर्त्तिः। 'बह्वादिभ्यश्च' इति ङीप्। इयं धेनुः नाम्नि कीर्त्तिते कथिते सति एव उपस्थिता॥

৮৭। যখন এই কল্যাণী (ধেনু) নাম করিতে করিতেই আসিয়া উপস্থিত হইয়া-ছেন, তখন তোমার মনোরথসিদ্ধি নিকটবর্ত্তিনী জানিও॥

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम्।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि॥ ८८

८८ अ:। त्वं वन्यवृत्तिः सन् शश्वत् आत्मानुगमनेन इमां गाम् अभ्यसनेन विद्यामिव प्रसादयितुम् अर्हसि॥ वाच्य—वन्यवृत्तिना त्वया विद्या इयं गौः अर्ह्यते।

८८। वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः सन्, इमां गां, शश्वत् सदा, आ प्रसादादविच्छेदेनेत्यर्थः। आत्मनस्तव कर्तुः, अनुगमनेन अनुसरणेन, अभ्यसनेन अनुष्ठातुरभ्यासेन विद्यामिव, प्रसादयितुं प्रसन्नां कर्तुम् अर्हसि॥

৮৮। তুমি কন্দমূলফলাদি বনজাত সামগ্রী ভক্ষণপূর্ব্বক প্রসাদকাল পর্য্যন্ত অনুক্ষণ এই ধেনুর অনুগমন করিয়া, অভ্যাস দ্বারা বিদ্যার ন্যায়, ইহাঁকে প্রসন্না করিতে চেষ্টা করিবে॥

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः॥ ८९

८९ अ:। अस्यां प्रस्थितायां सत्यां प्रतिष्ठेथाः, स्थितायां स्थितिम् आचरेः, निषण्णायां निषीद, पीताम्भसि सत्याम् अपः पिबेः। वाच्य—प्रस्थीयेत, आचर्य्येत, निषद्यताम्। आपः पीयेरन् (त्वया)।

८९। अस्यां नन्दिन्यां, प्रस्थितायां, प्रतिष्ठेथाः प्रयाहि। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। स्थितायां निवृत्तगतिकायां, स्थितिमाचरेः स्थितिं कुरु तिष्ठेत्यर्थः। निषण्णायामुपविष्टायां, निषीद उपविश। विध्यर्थे लोट्। पीतमम्भो यया तस्यां पीताम्भसि सत्याम्, अपः पिबेः पिब।

৮৯। ইনি গমন করিলে গমন করিবে, দণ্ডায়মান হইলে দণ্ডায়মান থাকিবে, উপবিষ্ট হইলে উপবেশন করিবে এবং জলপান করিলে জলপান করিবে॥

वधूर्भक्तिमती चैनामर्च्चितामा तपोवनात्।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि॥ ९०

९० अ: । बधूः भक्तिमती तथा प्रयता च सती अर्च्चिताम् एनाम् आतपोवनात् प्रातः सायं प्रत्युद्व्रजेदपि ॥ वाच्य—भक्तिमत्या वध्वा प्रयतया एषा अन्वीयताम्, प्रत्युद्व्रज्येत ।

९० । बधूरिति । बधूर्जाया च भक्तिमती प्रयता सती, गन्धादि रर्चितामेनां गां, प्रातः आ तपोवनात् । आङ् मर्य्यादायाम्, पदद्वयं चैत अन्वेतु अनुगच्छतु । सायमपि प्रत्युद्व्रजेत् प्रत्युद्गच्छेत् । विध्यर्थे लिङ् ।

৯০। এই বধূও ভক্তিযুক্তা হইয়া পবিত্রদেহে শুদ্ধান্তঃকরণে ইহাঁর অর্চ করিবেন, এবং তপোবনের সীমাপর্য্যন্ত প্রাতঃকালে অনুগমন ও সায়ংকালে প্র গমন করিবেন ॥

इत्या प्रसादादस्यास्त्वं परिचर्य्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्त्रिणाम् ॥ ९१

९१ अ: । त्वम् अस्याः आप्रसादात् इति परिचर्य्यापरः भव, ते अविघ्नम् अस्तु, पितेव पुत्त्रिणां धुरि स्थेयाः ॥ वाच्य—त्वया...परेण भूयताम् । अविघ्नेन भूयताम् । पित्रा इव स्थीयेत ।

९१ । इति अनेन प्रकारेण, त्वम् आप्रसादात्प्रसादपर्य्यन्तम् । 'आङ्मर्य्यादाभिविध्योः' इत्यस्य वैभाषिकत्वादसमासत्वम् । अस्या धेनोः परिचर्य्यापरः शुश्रूषापरो भव । ते तव, अविघ्नं विघ्नस्याभावः अस्तु । 'अव्ययं विभक्ति—' इत्यादिनार्थाभावेऽव्ययीभावः । पितेव, पुत्त्रिणां सत्पुत्त्रवताम् । प्रशंसायामिन्प्रत्ययः । धुरि अग्रे, स्थेयाः तिष्ठेः । आशिषि लिङ् । 'एर्लिङि' इत्याकारस्यैकारादेशः । त्वत्सदृशो भवत्पुत्त्रोऽस्त्विति भावः ॥

৯১। এইরূপে যতদিন না ইনি সুপ্রসন্না হন, ততদিন ইহাঁর সেবায় নি থাকিবে। তোমার বিঘ্ন দূরীভূত হউক। তুমি স্বীয় পিতার ন্যায় সৎপুত্রবান্ দিগের অগ্রণী হইবে ॥

तथेति प्रतिजग्राह प्रीतिमान् सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥ ९२

९२ अ: । सपरिग्रहः देशकालज्ञः शिष्यः प्रीतिमान् आनतश्च सन् शासितुः आदेशं प्रतिजग्राह ॥ वाच्य—प्रीतिमता...ग्रहेण देशकालज्ञेन शिष्येण आनतेन आदेशः प्रतिजगृहे

९२ । देशकालज्ञः । देशः अग्निसन्निधिः, कालः अग्निहोत्रावसान समयः, विशिष्टदेशकालोत्पन्नमार्षं ज्ञानमव्याहतम् इति जानन्, अत प्रीतिमान् शिष्यः अन्तेवासी राजा, सपरिग्रहः सपत्नीकः । 'पत्नी जनादानमूलशापाः परिग्रहाः' इत्यमरः । आनतः विनयनम्रः शासितुः गुरोः, आदेशम् आज्ञां, तथेति प्रतिजग्राह स्वीचकार ॥

৯২। দেশকালবেত্তা শিষ্য সস্ত্রীক নরপতি, হৃষ্টচিত্তে ও বিনীতভাবে গুরুদেবের আদেশ প্রতিপালনে স্বীকৃত হইলেন ॥

**অথ প্রদোষে দোষজ্ঞঃ সংবেশায় বিশাম্পতিম্।**
**সূনুঃ সূনৃতবাক্ স্রষ্টুর্বিসসর্জ্জোর্জ্জিতশ্রিয়ম্ ॥ ৯৩**

৯৩ অঃ। অথ প্রদোষে দোষজ্ঞঃ সূনৃতবাক্ স্রষ্টুঃ সূনুঃ ঊর্জ্জিতশ্রিয়ং বিশাম্পতিং সংবেশায় বিসসর্জ্জ ॥ বাচ্য—দোষজ্ঞেন...বাচা সূনুনা...শ্রীঃ...পতিঃ সসৃজে।

৯৩। অথ প্রদোষে রাত্রৌ, দোষজ্ঞঃ বিদ্বান্। 'বিদ্বান্ বিপশ্চিদ্ দোষজ্ঞঃ' ইত্যমরঃ। সূনৃতবাক্ সত্যপ্রিয়বাক্। 'প্রিয়ং সত্যঞ্চ সূনৃতম্' ইতি হলায়ুধঃ। স্রষ্টুঃ সূনুঃ ব্রহ্মপুত্রঃ মুনিঃ। অনেন প্রকৃতকার্য্যনির্ব্বাহকত্বং সূচয়তি। ঊর্জ্জিতশ্রিয়ং বিশাম্পতিং মনুজেশ্বরম্। 'দ্বৌ বিশৌ বৈশ্যমনুজৌ' ইত্যমরঃ। সংবেশায় নিদ্রায়ৈ, 'স্যান্নিদ্রা শয়নং স্বাপঃ স্বপ্নঃ সংবেশ ইত্যপি' ইত্যমরঃ। বিসসর্জ্জ আজ্ঞাপয়ামাস ॥

৯৩। অনন্তর সায়ংকাল উপস্থিত হইলে, বিদ্বান্ সত্যবাদী প্রিয়ভাষী ব্রহ্মনন্দন বশিষ্ঠদেব, প্রফুল্লমুখ নরপতি দিলীপকে শয়ন করিবার নিমিত্ত আদেশ প্রদান করিলেন ॥

**সত্যামপি তপঃসিদ্ধৌ নিয়মাপেক্ষয়া মুনিঃ।**
**কল্পবিৎ কল্পয়ামাস বন্যামেবাস্য সংবিধাম্ ॥৯৪**

৯৪ অঃ। কল্পবিৎ মুনিঃ তপঃসিদ্ধৌ সত্যামপি নিয়মাপেক্ষয়া অস্য বন্যামেব সংবিধাং কল্পয়ামাস ॥ বাচ্য—কল্পবিদা মুনিনা বন্যা সংবিধা কল্পয়ামাসে।

৯৪। কল্পবিৎ ব্রতপ্রয়োগাভিজ্ঞো মুনিঃ, তপঃসিদ্ধৌ সত্যামপি তপসা এব রাজযোগ্যাহারসম্পাদনসামর্থ্যে সত্যপি ইত্যর্থঃ। নিয়মাপেক্ষয়া তদাপ্রভৃত্যেব ব্রতচর্য্যাপেক্ষয়া, অস্য রাজ্ঞঃ, বন্যামেব, সংবিধীয়তে অনয়েতি সংবিধাং কুশাদিশয়নসামগ্রীম্। 'আতশ্চোপসর্গে' ইতি কপ্রত্যয়ঃ। 'অকর্ত্তরি চ কারকে সংজ্ঞায়াম্' ইতি কর্ম্মাদ্যর্থত্বম্। কল্পয়ামাস সম্পাদয়ামাস ॥

৯৪। ব্রতনিয়মাদিবেত্তা মুনিবর, তপঃপ্রভাবে রাজভোগ্যবস্তুজাত আহরণ করিবার ক্ষমতা থাকিলেও, নিয়ম-পালনানুরোধে, নরপতি দিলীপের আহার ও শয়নের নিমিত্ত, বনজাত সামগ্রীর আয়োজন করিয়া দিলেন ॥

**निर्द्दिष्टां कुलपतिना स पर्णशाला-**
**मध्यास्य प्रयतपरिग्रहद्वितीयः ।**
**तच्छिष्याध्ययननिवेदितावसानां**
**संविष्टः कुशशयने निशां निनाय ॥ ९५**

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ वशिष्ठाश्रमाभिगमनो
नाम प्रथमः सर्गः ॥ १

९५ अ: । प्रयतपरिग्रहद्वितीयः सः कुलपतिना निर्द्दिष्टां पर्णशालाम् अध्यास्य, कुशशयने
तच्छिष्याध्ययननिवेदितावसानां निशां निनाय ॥ वाच्य—द्वितीयेन तेन संविष्टेन वसाना निशा

९५ । सः राजा, कुलपतिना मुनिकुलेश्वरेण वशिष्ठेन, निर्द्दिष्टां
शालाम् अध्यास्य अधिष्ठानं कृत्वा इत्यर्थः । 'अधिशीङ्' इत्यां
आधारस्य कर्म्मत्वं, कर्म्मणि द्वितीया । प्रयतः नियतः परिग्रहः
द्वितीयः यस्येति सः तथोक्तः, कुशानां शयने संविष्टः सुप्तः सन्,
वशिष्ठस्य शिष्याणाम् अध्ययनेन अपररात्रे वेदपाठेन निवेदितम् अव
यस्याः तां निशां, निनाय गमयामास । अपररात्रे अध्ययने म
'निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्' । 'न चापररात्रम
पुनः स्वपेत्' इति गौतमस्य । प्रहर्षिणीवृत्तमेतत् । तदुक्तम्—'म्नौ
गस्त्रिदशयतिः प्रहर्षिणीयम् ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जी
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये वशिष्ठाश्रमाभिगमनो नाम प्रथमः सर्गः ॥ १

৯৫। অনন্তর মহারাজ দিলীপ, পবিত্রচারিণী সহধর্ম্মিণীর সমভিব্যাহারে, ঋ
নির্দ্দিষ্টপর্ণশালায় অবস্থান ও কুশময় শয্যায় শয়ন করিয়া রজনী যাপন করতঃ মু
দিগের পাঠাধ্যয়নশব্দ শ্রবণে রাত্রি শেষ হইয়াছে, জানিতে পারিলেন ॥

প্রথম সর্গ সমাপ্ত ॥

---

# द्वितीय: सर्ग: ।

—∞✧∞—

अथ प्रजानामधिप: प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १

१ अन्वय: । अथ यशोधन: प्रजानाम् अधिप: प्रभाते जायाप्रतिग्राहितगन्धमाल्यां पीतप्रतिबद्धवत्सां ऋषेर्धेनुं वनाय मुमोच ॥ वाच्य—अधिपेन यशोधनेन, प्रतिग्राहितगन्धमाल्या पीतप्रतिबद्धवत्सा धेनुर्मुमुचे ।

आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दाननसुन्दरि ! त्वाम् ॥

१। अथ निशानयनानन्तरं यशोधन: प्रजानाम् अधिप: प्रजेश्वर: प्रभाते प्रात:काले, जायया सुदक्षिणया प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या तथोक्तां, पीतं पानम् अस्यास्तीति पीत: पीतवानित्यर्थ: । 'अर्श आदिभ्योऽच्' इति अच्प्रत्यय: । 'पीता गावो भुक्ता ब्राह्मणा:' इति महाभाष्ये दर्शनात् । पीत: प्रतिबद्ध: वत्स: यस्या: ताम् ऋषेर्धेनुं, वनाय वनं गन्तुम् । 'क्रियार्थोपपद' इत्यादिना चतुर्थी । मुमोच मुक्तवान् । जायापदसामर्थ्यात् सुदक्षिणाया: पुत्रजननयोग्यत्वमनुसन्धेयम् । तथाहि श्रुति:—'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुन:' इति । यशोधन इत्यनेन पुत्रवतां कीर्त्तिलोभात् राजानर्हे गोरक्षणे प्रवृत्त इति गम्यते । अस्मिन् सर्गे वृत्तमुपजाति:—'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता:' इति ॥

১। অনন্তর প্রাতঃকালে রাজ্ঞী সুদক্ষিণা গন্ধমাল্য দ্বারা ঋষিধেনু নন্দিনীর অর্চ্চনা করিলে, এবং দুগ্ধপানে তদীয় বৎস সন্তুষ্ট হইলে, প্রজারক্ষক যশোধন দিলীপ বনগমনের নিমিত্ত সেই ধেনুকে বন্ধন হইতে মুক্ত করিয়া দিলেন।

तस्या: खुरन्यासपवित्रपांशुमपांशुलानां धुरि कीर्त्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥२

२ अ: । अपांशुलानां धुरि कीर्त्तनीया मनुष्येश्वरधर्मपत्नी खुरन्यासपवित्रपांशुं तस्या: मार्गं

स्मृतिः श्रुतेः अर्थमिव अन्वगच्छत्॥ वाच्य—कीर्त्तनीयया...धर्म्मपत्न्या...पवित्रपांशुः मार्गः अर्थः अन्वगम्यत।

२। पांशवः दोषाः आसां सन्तीति पांशुलाः स्वैरिण्यः। 'स्वैरिणी पांशुला' इत्यमरः। 'सिध्मादिभ्यश्च' इति लच्प्रत्ययः। अपांशुलानां पतिव्रतानां धुरि अग्रे कीर्त्तनीया परिगणनीया मनुष्येश्वरधर्म्मपत्नी, न्यासैः पवित्राः पांशवः यस्य तम्। 'रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः' इत्यमरः। तस्याः धेनोः मार्गं, स्मृतिः मन्वादिवाक्यं श्रुतेः वाक्यस्य अर्थम् अभिधेयमिव, अन्वगच्छत् अनुसृतवती। यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति, तथा सापि गोखुरक्षुण्णमेव मार्गमनुससार इत्यर्थः। धर्म्मपत्नीत्यत्र अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः प्रकृतिविकाराभावात्। पांशुलपथप्रवृत्तावप्यपांशुलानामिति विरोधालङ्कारो ध्वन्यते॥

২। স্মৃতি যেরূপ শ্রুতির অর্থের অনুগামিনী, সেইরূপ পতিব্রতাদিগের অগ্রগণ্যা মহারাজ দিলীপের পত্নী রাজ্ঞী সুদক্ষিণা, নন্দিনীর খুরস্পর্শোৎপন্ন পবিত্র ধূলিময় পথের অনুগমন করিয়াছিলেন॥

**निवर्त्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः।**
**पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्व्वीम्॥**

२ अः। दयालुः यशोभिः सुरभिः राजा तां दयितां निवर्त्त्य सौरभेयीं पयोधरीभूतचतुःसमुद्रां गोरूपधराम् उर्व्वीमिव जुगोप। वाच्य—दयालुना सुरभिणा राज्ञा सौरभेयी...चतुःसमुद्रा गोरूपधरा उर्व्वी जुगुपे।

२। दयालुः कारुणिकः। 'स्याद् दयालुः कारुणिकः' इत्यमरः। 'स्पृहिगृहि' इत्यादिना आलुच्प्रत्ययः। यशोभिः सुरभिः मनोज्ञः। 'सुरभिः स्यान्मनोज्ञेऽपि' इति विश्वः। राजा तां दयितां निवर्त्त्य सौरभेयीं कामधेनुसुतां नन्दिनीम्। धरन्तीति धराः, पचाद्यच्। पयसां धराः पयोधराः स्तनाः। 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः। अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः। अभूततद्भावे च्विः, 'कुगतिप्रादयः' इति समासः। पयोधरीभूताश्चत्वारः समुद्रा यस्याः ताम्। 'अनेकमन्यपदार्थे' इत्यनेकपदार्थग्रहणसामर्थ्यात् त्रिपदो बहुव्रीहिः। गोरूपधरामुर्व्वीमिव जुगोप ररक्ष, भूरक्षणप्रयत्नेनैव ररक्ष इति भावः। धेनुपक्षे पयसा दुग्धेन अधरीभूताश्चत्वारः समुद्रा यस्याः सा तथोक्तां, दुग्धेन तिरस्कृतसागरामित्यर्थः॥

৩। যশঃসৌরভমণ্ডিত কৃপাপরবশ রাজা দিলীপ, স্বীয় পত্নী সুদক্ষিণাকে
তিনিবৃত্ত করিয়া চতুঃসমুদ্রপয়োধরা গোরূপধারিণী পৃথিবীর ন্যায় সেই সুরভি-
ন্দিনী নন্দিনী ধেনুকে ( নিজে ) রক্ষা করিতে লাগিলেন ॥

**ताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।**
**चान्यतस्तस्य शरीररक्षा स्ववीर्य्यगुप्ता हि मनोः प्रसूतिः॥४**

४ अः। व्रताय धेनोः अनुचरेण तेन शेषोऽपि अनुयायिवर्गः न्यषेधि, तस्य शरीररक्षा अन्यतः
च, मनोः प्रसूतिः स्ववीर्य्यगुप्ता हि ॥ वाच्य—अनुचरः सः शेषं अनुयायिवर्गं न्यषेधीत्, शरीर-
क्षा,···गुप्तया प्रसूत्या ( भूयते )।

४। व्रताय धेनोरनुचरेण न तु जीवनाय इति भावः। तेन दिलीपेन,
षः अवशिष्टोऽपि अनुयायिवर्गः, अनुचरवर्गः न्यषेधि निवर्त्तितः। शेषत्वं
दक्षिणापेक्षया। कथं तर्हि आत्मरक्षणम्? अत आह—न चेति।
स्य दिलीपस्य शरीररक्षा च अन्यतः पुरुषान्तरात् न। कुतः? हि
स्मात् कारणात्, मनोः। प्रसूयते इति प्रसूतिः सन्ततिः स्ववीर्य्यगुप्ता
वीर्य्येणैव रक्षिता। नहि स्वनिर्वाहकस्य परापेक्षा इति भावः॥

৪। ব্রতের নিমিত্ত নন্দিনীর অনুগমনকারী রাজা দিলীপ, অবশিষ্ট অনু-
গণকেও বিদায় করিয়া দিলেন। তাহার শরীররক্ষার্থ অপরের সাহায্য প্রয়োজন
ইত না, কারণ মনুবংশীয়েরা স্বীয় পরাক্রমেই আত্মরক্ষা করিতে সমর্থ।

**स्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।**
**व्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत्॥५**

५ अः। सम्राट् सः आस्वादवद्भिः तृणानां कवलैः कण्डूयनैः दंशनिवारणैः अव्याहतैः स्वैर-
तैश्च तस्याः समाराधनतत्परः अभूत्॥ वाच्य—सम्राजा तेन···तत्परेण अभावि।

५। सम्राट् मण्डलेश्वरः। 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः।
ास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः। सः राजा आस्वादवद्भिः
सवद्भिः स्वादयुक्तैरित्यर्थः, तृणानां कवलैः ग्रासैः। 'ग्रासस्तु कवलार्थकः'
त्यमरः। कण्डूयनैः खर्जनैः दंशानां वनमक्षिकाणां निवारणैः। 'दंशस्तु
नमक्षिका' इत्यमरः। अव्याहतैः अप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च
स्याः धेन्वाः समाराधनतत्परः शुश्रूषासक्तः अभूत्। तदेव परं प्रधानं
स्य इति तत्परः। 'तत्परौ प्रसितासक्तौ' इत्यमरः॥

৫। সম্রাট্ দিলীপ সুস্বাদু তৃণ কবল (গ্রাস) প্রদান, শরীরকণ্ডূয়ন ও
রীরোপবিষ্ট মশকাদি নিবারণ করতঃ নন্দিনীর স্বেচ্ছাগমনে কোন প্রকার বাধা
প্রদান না করিয়া তাহার সেবা করিয়াছিলেন।

**स्थित: स्थितामुच्चलित: प्रयातां निषेदुषीमासनबन्धधी**
**जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छ**

६ अ:। भूपतिस्तां स्थितां सतीं स्थित: सन्, प्रयातां सतीम् उच्चलित: सन्, निषेदु आसनबन्धधीर: सन्, जलम् आददानां सतीं जलाभिलाषी सन्, इत्थं छायेव अन्व वाच्य--भूपतिना स्थितेन, उच्चलितेन,...धीरेण,...अभिलाषिना, छायया सा अन्वगम्यत।

६। भूपति: तां गां स्थितां सतीं स्थित: सन्, स्थिति: ऊर्द्ध्वावस्था प्रयातां प्रस्थितां सतीम् उच्चलित: प्रस्थित: सन्, निषेदुषीं निषण्णां उपविष्टामित्यर्थ:। 'भाषायां सदवसश्रुव:' इति क्वसुप्रत्यय: 'उगि इति ङीप्। आसनबन्धे उपवेशने धीर: स्थित: उपविष्ट: सन् इत्य जलम् आददानां पिबन्तीं जलाभिलाषी पिबन् इत्यर्थ: इत्थं छाया अन्वगच्छत् अनुसृतवान्॥

৬। নরপতি দিলীপ, সেই ধেনু দাঁড়াইলে দাঁড়াইতেন, চলিলে চলিতেন, বসিতেন, জলপান করিলে জলপান করিতেন, তিনি এইরূপে ছায়ার ন্যায় অনুসরণ করিয়াছিলেন।

**स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधा**
**आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्र:।**

७ अ:। न्यस्तचिह्नामपि तेजोविशेषानुमितां राजलक्ष्मीं दधान: स: (राजा) अना दानराजि: अन्तर्मदावस्थ: द्विपेन्द्र इव आसीत्॥ वाच्य—दधानेन तेन...दानराजिना...मद द्विपेन्द्रेन अभूयत।

७। न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्या तथाभूतामपि तेजोविशेषेण प्रभावातिशयेन अनुमितां 'सर्व्वथा एवायं भवेत्' इति ज्ञहितां राजलक्ष्मीं दधान: स: राजा, अनाविष्कृत राजि: वहिरप्रकटितमदरेख: अन्तर्गता मदावस्था यस्य स: र्मदावस्थ:, तथाभूत: द्विपेन्द्र इव आसीत्॥

৭। নরপতি, রাজকীয় ছত্র চামরাদি চিহ্ন রহিত হইয়াও অতিশয় তেজঃ রাজলক্ষ্মীসম্পন্ন বলিয়া অনুমিত হইয়া অপ্রকটিতমদরাজি অন্তর্ম্মদাবস্থ হস্তীর শোভা পাইতে ছিলেন।

**लताप्रतानोद्ग्रथितै: स केशैरधिज्यधन्वा विचचार दा**
**रक्षापदेशान्मुनिहोमधेनोर्वन्यान् विनेष्यन्निव दुष्टसत्त्वा**

८ अ: । लताप्रतानोद्ग्रथितैः केशैः ( उपलक्षितः ) अधिज्यधन्वा सः, मुनिहोमधेनोः रक्षापदेशात् वन्यान् दुष्टसत्त्वान् विनेष्यन् इव दावं विचचार ॥ वाच्य—अधिज्यधन्वना तेन विनेष्यता दावः विचेरे ।

८ । लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिः उदग्रथिताः उन्नमय्य ग्रथिताः ये केशाः तैरुपलक्षितः । 'इत्थम्भूतलक्षणे इति तृतीया । सः राजा अधिज्यम् आरोपितमौर्वीकं धनुर्यस्य सः अधिज्यधन्वा सन् । धनुषश्च' इत्यनङादेशः । मुनिहोमधेनोः रक्षापदेशात् रक्षणव्याजात् वन्यान् वने भवान् दुष्टसत्त्वान् दुष्टजन्तून् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । विनेष्यन् शिक्षयिष्यन् इव दावं वनम् । 'वने च वनवह्नौ च दवो दाव इहेष्यते' इति यादवः । विचचार वने चचार इत्यर्थः । 'देशकालाध्वगन्तव्याः कर्म्मसंज्ञा ह्यकर्म्मणाम्' इति दावस्य कर्म्मत्वम् ॥

৮। ভূমিপতি দিলীপ লতাসমূহে কেশ সকল আবদ্ধ করিয়া শরাসনে শরসংযোগ করতঃ মুনি হোমধেনু রক্ষার ছলে হিংস্র বন্য জন্তুদিগকে শিক্ষা দিবার নিমিত্তই যেন বনে বনে ভ্রমণ করিতেছিলেন।

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥९

९ अ: । विसृष्टपार्श्वानुचरस्य पाशभृता समस्य तस्य पार्श्वद्रुमाः उन्मदानां वयसां विरावैः आलोकशब्दम् उदीरयामासुरिव ॥ वाच्य—पार्श्वद्रुमैः आलोकशब्दः उदीरयामासे ।

९ । विसृष्टेत्यादिभिः षड्भिः श्लोकैः तस्य महामहिमतया द्रुमादयोऽपि राजोपचारं चक्रुरित्याह विसृष्टेति । विसृष्टाः पार्श्वानुचराः पार्श्ववर्त्तिनो जना येन तस्य, पाशभृता वरुणेन समस्य तुल्यस्य । 'प्रचेता वरुणः पाशी' इत्यमरः । अनुभावोऽनेन सूचितः । तस्य राज्ञः पार्श्वयोर्द्रुमाः, उन्मदानाम् उत्कटमदानाम् वयसां खगानाम् । 'खगबाल्यादिनोर्वयः' इत्यमरः । विरावैः शब्दैः, आलोकस्य शब्दं वाचकम् आलोकयेति शब्दं जयशब्दमित्यर्थः । 'आलोको जयशब्दः स्यात्' इति विश्वः । उदीरयामासुरिव अवदन्निव इत्युत्प्रेक्षा ॥

৯। অনুযাত্রগণরহিত বরুণসদৃশ মহারাজ দিলীপের পার্শ্বস্থিত বৃক্ষসকল, স্বীয় শাখাস্থ মদোন্মত্ত পক্ষিগণের কূজনচ্ছলে যেন তাঁহার জয় ঘোষণা করিতেছিল।

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्त्तमानम् ।
अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥१०

१० अ:। मरुत्प्रयुक्ताः बाललताः आरात् अभिवर्त्तमानं मरुत्सखाभम् अर्च्यं त पौरकन्या आचारलाजैरिव अवाकिरन्॥ वाच्य—प्रयुक्ताभिः...लताभिः...कन्याभिः...सखाभः, अभिवर्त्तमानः स अवाकीर्य्यत।

मरुत्प्रयुक्ताः वायुना प्रेरिताः बाललताः, आरात् समीपे अभि मानम्। 'आरात् दूरसमीपयोः' इत्यमरः। मरुतः वायोः सखा मरु अग्निः स इव आभातीति मरुत्सखाभम्। 'आतश्चोपसर्गे' इति कप्र अर्च्यं पूज्यं, तं दिलीपं, प्रसूनैः पुष्पैः, पौरकन्याः पौराश्च ताः क आचारार्थैः लाजैः आचारलाजैः इव अवाकिरन्, तस्योपरि विचि इत्यर्थः। सखा हि सखायमागतमुपचरति इति भावः॥

১০। রাজধানীতে ভ্রমণকালে পৌরকন্যারা যেরূপ মহারাজ দি মস্তকে লাজ (খৈ) বর্ষণ করিয়া মঙ্গলাচরণ করিত, বন ভ্রমণকালেও ত তেজস্বী পূজ্য সেই দিলীপ, পবনচালিতলতাসমূহ হইতে পতিত পুষ্পরাজি শোভিত হইয়া মঙ্গলাচার পূত হইতেছিলেন। (যেন পবন চালিত বন তাঁহার মঙ্গলবিধানের জন্যই অনবরত পুষ্পত্যাগ করিতেছিল)।

**धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः।**
**विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः॥**

११ अ:। धनुर्भृतोपि अस्य विशङ्कैः अन्तःकरणैः दयार्द्रभावम् आख्यातं वपुः विलो हरिण्यः अक्ष्णां प्रकामविस्तारफलम् आपुः॥ वाच्य—विलोकयन्तीभिः हरिणीभिः आपे।

११। धनुर्भृतोऽपि अस्य राज्ञः, एतेन भयसम्भावना दर्शिता। तथ विशङ्कैः निर्भीकैः अन्तःकरणैः कर्त्तृभिः, दयया कृपारसेन आर्द्रः अभिप्रायः यस्य तत् दयार्द्रभावं तत् आख्यातं दयार्द्रभावमेतदित्याख्या इत्यर्थः। भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः। तथा वपुः विलोकयन्त्यः हरिण्यः अक्ष्णां प्रकामविस्तारस्य अत्यन्तविशाल फलम् आपुः। 'विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रि इति न्यायेन स्वान्तःकरणवृत्तिप्रामाण्यादेव विश्रब्धं द्रष्टुमित्यर्थः॥

১১। মহারাজ দিলীপ ধনুর্দ্ধারী হইলেও তাঁহার বিশুদ্ধ অন্তঃ সূচিত দয়ার্দ্র ভাবযুক্ত শরীর অবলোকন করিয়া হরিণীগণ স্বীয় নেত্রের বিশা ফল অনুভব করিয়াছিল।

**स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्।**
**शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः॥**

१२ अः। सः मारुतपूर्णरन्ध्रैः कूजद्भिः कीचकैः आपादितवंशकृत्यं कुञ्जेषु वनदेवताभिः उद्गीयमानम् उच्चैः स्वं यशः शुश्राव॥ वाच्य—तेन शुश्रुवे।

१२। सः दिलीपः मारुतैः पवनैः पूर्णानि रन्ध्राणि कीटपतङ्गादिकृतानि गर्त्ताः येषां तैः मारुतपूर्णरन्ध्रैः अतएव कूजद्भिः स्वनद्भिः कीचकैः वेणुविशेषैः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। वंशः शुषिरवाद्यविशेषः। 'वंशादिकं तु शुषिरम्' इत्यमरः। आपादितं सम्पादितं वंशस्य कृत्यं कार्य्यं यस्मिन् कर्मणि तत् तथा, कुञ्जेषु लतागृहेषु। 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। वनदेवताभिः उद्गीयमानम् उच्चैर्गीयमानं स्वं यशः शुश्राव श्रुतवान्॥

১২। মহারাজ দিলীপ, বেণুবংশনিচয়ের রন্ধ্রপ্রবিষ্ট বায়ুশব্দে বংশীবাদনক্রিয়া নিষ্পন্ন হইতে থাকিলে, লতাগৃহবাসিনী বনদেবতাগণ কর্ত্তৃক উচ্চৈঃস্বরে গীত স্বীয় যশোগাথা শ্রবণ করিলেন।

**पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी।**
**तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे॥ १३**

१३ अः। गिरिनिर्झराणां तुषारैः पृक्तः अनोकहाकम्पितपुष्पगन्धी पवनः आचारपूतम् अनातपत्रम् आतपक्लान्तं तं सिषेवे॥ वाच्य—पृक्तेन...पुष्पगन्धिना पवनेन,...पूतः अनातपत्रः आतपक्लान्तः स सिषेवे।

१३। गिरिषु निर्झराणां वारिप्रवाहाणां 'वारिप्रवाहो निर्झरो झरः' इत्यमरः। तुषारैः सीकरैः। 'तुषारौ हिमसीकरौ' इति शाश्वतः। पृक्तः सम्पृक्तः अनोकहानां वृक्षाणाम् आकम्पितानि ईषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीति अनोकहाकम्पितपुष्पगन्धी ईषत्कम्पितपुष्पगन्धवान्, एवं शीतः मन्दः सुरभिः पवनः वायुः अनातपत्रं व्रतार्थं परिहृतच्छत्रम् अतएव आतपक्लान्तम् आचारेण पूतं शुद्धं तं नृपं सिषेवे। आचारपूतत्वात् स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः॥

১৩। গিরিনির্ঝরিণী-সমুদ্ভূত জলকণাপরিব্যাপ্ত, বৃক্ষসমূহকম্পনকারী পুষ্পগন্ধপূর্ণ বায়ু (ব্রতানুরোধে) ছত্র বিরহিত রৌদ্রক্লিষ্ট বিশুদ্ধচিত্ত নরপতির সেবা করিতেছিল।

**शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः।**
**ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने॥ १४**

१४ अः। गोप्तरि तस्मिन् वनं गाहमाने वृष्ट्या विनापि दवाग्निः शशाम, फलपुष्पवृद्धिः विशेषा आसीत्, सत्त्वेषु अधिकः ऊनं न बबाधे॥ वाच्य—दवाग्निना शेमे, वृद्ध्या विशेषया अभूयत, अधिकेन ऊनः बबाधे।

१४। गोप्तरि तस्मिन् राज्ञि, वनं गाहमाने प्रविशति सति, वृष्टिं विना अपि दवाग्निः वनाग्निः। 'दवदावौ वनानले' इति हैमः। शशाम। फलानां पुष्पाणाञ्च वृद्धिः, विशिष्यते इति विशेषा अतिशयिता आसीत्। कर्मार्थे घञ्प्रत्ययः। सत्त्वेषु जन्तुषु मध्ये। 'यतश्च निर्द्धारणम्' इति सप्तमी। अधिकः प्रबलः व्याघ्रादिः, ऊनं दुर्बलं हरिणादिकं न बबाधे॥

১৪। রক্ষাকর্ত্তা নরপতি দিলীপ, সেই অরণ্যে প্রবিষ্ট হইলে, বর্ষণ ভিন্ন দাবানল (বনমধ্যস্থ অগ্নি) প্রশমিত হইয়াছিল, ফল, পুষ্প প্রভৃতি অতিশয় বৃদ্ধিপ্রাপ্ত হইয়াছিল এবং বনস্থ প্রবল জন্তুগণ দুর্ব্বল জন্তুগণের উৎপীড়নে বিরত হইয়াছিল॥

**सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।**
**प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः॥ १५॥**

१५ अः। पल्लवरागताम्रा पतङ्गस्य प्रभा मुनेर्धेनुश्च दिगन्तराणि सञ्चारपूतानि कृत्वा दिनान्ते निलयाय गन्तुं प्रचक्रमे॥ वाच्य—पल्लवरागताम्रया प्रभया धेन्वा प्रचक्रमे।

१५। पल्लवस्य रागो वर्णः पल्लवरागः। 'रागोऽनुरक्तौ मात्सर्य्ये क्लेशादौ लोहितादिषु' इति शाश्वतः। स एव ताम्रा पल्लवरागताम्रा पतङ्गस्य सूर्य्यस्य प्रभा कान्तिः। 'पतङ्गः पक्षिसूर्य्ययोः' इति शाश्वतः। मुनेर्धेनुः दिगन्तराणि दिशामवकाशान्। 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' इत्यमरः। सञ्चारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयाय अस्तमयाय, धेनुपक्षे आलयाय च, गन्तुं प्रचक्रमे॥

১৫। নূতন পল্লবের ন্যায় তাম্রবর্ণ সূর্য্যের প্রভা এবং ঋষিধেনু নন্দিনী (উভয়ে) ইতস্তত বিচরণপূর্ব্বক দিক্‌সমস্ত পবিত্র করিয়া সায়ংসময়ে স্বীয় স্বীয় গৃহাভিমুখে গমনে প্রবৃত্ত হইয়াছিল।

**तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः।**
**बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना॥ १६॥**

१६ अः। मध्यमलोकपालः देवतापित्रतिथिक्रियार्थां ताम् अन्वग्ययौ, स च सतां मतेन (राज्ञा) उपपन्ना सती, सतां मतेन विधिना उपपन्ना साक्षात् श्रद्धेव बभौ॥ वाच्य—पालेन ... क्रियार्था सा अन्वगयिये, तया उपपन्नया...श्रद्धया बभे।

१६। मध्यमलोकपालः भूपालः, देवतापित्रतिथीनां क्रियाः यागश्राद्धदानानि ता एव अर्थः प्रयोजनं यस्याः तां धेनुम्, अन्वक् अनुपदं ययौ। 'अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्' इत्यमरः। सतां मतेन सद्भिर्मान्येन। 'गतिबुद्धि' इत्यादिना वर्त्तमाने क्तः, 'क्तस्य च वर्त्तमाने'

इति षष्ठी। तेन राजा उपपन्ना, युक्ता सा धेनुः, सतां मतेन विधिना अनुष्ठानेन, उपपन्ना युक्ता, साक्षात् प्रत्यक्षा श्रद्धा आस्तिक्यबुद्धिरिव, बभौ च॥

১৬। মর্ত্ত্যলোকাধিপতি দিলীপ, যজ্ঞ, পিতৃকৃত্য ও আতিথ্য ক্রিয়ার সাধনভূতা নন্দিনীর অনুগমন করিলেন এবং সেই ধেনু সাধুজনার্চ্চিত মহারাজ কর্তৃক অনুসৃত হইয়া বিধিযুক্তা মূর্ত্তিমতী শ্রদ্ধার ন্যায় শোভা পাইতে লাগিল।

स पल्वलोत्तीर्णवराहयूथा-
न्यावासवृक्षोन्मुखबर्हिणानि।
ययौ मृगाध्यासितशाद्वलानि
श्यामायमानानि वनानि पश्यन्॥ १७

१७ अः। सः पल्वलोत्तीर्णवराहयूथानि आवासवृक्षोन्मुखबर्हिणानि मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ययौ॥ वाच्य—तेन पश्यता ययौ।

१७। सः राजा पल्वलेभ्यः अल्पजलाशयेभ्यः उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि, बर्हाणि एषां सन्तीति बर्हिणः मयूराः। 'मयूरो बर्हिणो बर्ही इत्यमरः। फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः। आवासवृक्षाणाम् उन्मुखाः बर्हिणः येषु तानि, श्यामायमानानि वराहबर्हिणादिमलिनिम्ना अश्यामानि श्यामानि भवन्तीति श्यामायमानानि। 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्प्रत्ययः'। ततः 'वा क्यषः' इत्यात्मनेपदे शानच्। मृगैः अध्यासिताः अधिष्ठिताः शाद्वलाः येषु तानि, शादाः शष्पाणि एषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः। 'शाद्वलः शादहरिते' इत्यमरः। 'शादः कर्द्दमशष्पयोः' इति विश्वः। 'नड्शादा-ड्ड्वलच्' इति ड्वलच्प्रत्ययः। वनानि पश्यन् ययौ॥

১৭। তিনি অল্পজলাশয় হইতে উত্থিত বরাহসমূহে ব্যাপ্ত, আবাসগৃহোন্মুখ ময়ূর সকলে সমাকীর্ণ, শ্যামায়মান, মৃগপূর্ণ শষ্পপ্রদেশ শোভিত বনরাজি দেখিতে দেখিতে যাইতে লাগিলেন।

आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः।
उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम्॥ १८

१८ अः। गृष्टिः नरेन्द्रश्च उभौ आपीनभारोद्वहनप्रयत्नात् वपुषो गुरुत्वाच्च अञ्चिताभ्यां गताभ्यां तपोवनावृत्तिपथम् अलञ्चक्रतुः॥ वाच्य—गृष्ट्या नरेन्द्रेण च उभाभ्यां वृत्तिपथः अलञ्चक्रे।

१८। गृष्टिः सकृत् प्रसूता गौः। 'गृष्टिः सकृत्प्रसूता गौः' हलायुधः। नरेन्द्रस्य, उभौ यथाक्रमम्, आपीनमूधः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। आपीनस्य भारोद्वहने प्रयत्नात् प्रयासात् वपुषः [गुरु]त्वात् आधिक्याच्च, अञ्चिताभ्यां चारुभ्यां गताभ्यां गमनाभ्यां, तपोव[न] आवृत्तेः पन्थाः तं तपोवनावृत्तिपथम्। 'ऋक्पूः' इत्यादिना समास[ान्त] अप्रत्ययः। अलञ्चक्रतुः भूषितवन्तौ॥

১৮। একবার মাত্র প্রসূতা নন্দিনী ধেনু স্তনভার বহননিবন্ধন প্রয়াসবশতঃ [এবং] নরনাথ দিলীপ, স্বীয় শরীরের গুরুত্বপ্রযুক্ত, মন্দ স্ব স্ব মনোহর গতি দ্বারা যে প্রত্যাবৃত্ত হইতেছিলেন সেইপথ অতি শোভাপূর্ণ করিয়াছিলেন।

**वशिष्ठधेनोरनुयायिनन्त-**
**मावर्त्तमानं वनिता वनान्तात्।**
**पपौ निमेषालसपक्ष्मपङ्क्ति-**
**रुपोषिताभ्यामिव लोचनाभ्याम्॥ १९**

१९ अ:। वशिष्ठधेनोः अनुयायिनं वनान्तात् आवर्त्तमानं तं वनिता निमेषालसपक्ष्मपङ्क्तिः उपोषिताभ्यामिव लोचनाभ्यां पपौ॥ वाच्य—आवर्त्तमानः स वनितया...पङ्क्त्या पपे।

१९। वशिष्ठधेनोरनुयायिनम् अनुचरं वनान्तात् आवर्त्तमानं प्र[त्या]गतं तं दिलीपं, वनिता सुदक्षिणा, निमिषेषु अलसा मन्दा पक्ष्मणां पङ्[क्तिः] यस्याः सा निर्निमेषा सती इत्यर्थः। लोचनाभ्यां करणाभ्याम् उ[पो]षिताभ्यामिव उपवासः भोजननिवृत्तिः तद्वद्भ्यामिव। वसतेः क[र्तरि] क्तः। पपौ। यथोपोषितः अतितृष्णया जलमधिकं पिबति तद्व[त्] तृष्णया अधिकं व्यलोकयदित्यर्थः॥

১৯। রাজ্ঞী সুদক্ষিণা, বশিষ্ঠ ধেনুর অনুসরণকারী বন হইতে প্রতিনিবৃত্ত র[াজা] দিলীপকে অনিমেষলোচনে নিরীক্ষণ করিতে লাগিলেন। বোধ হইল— সুদক্ষিণার নয়নযুগল, যেন বহুকালের উপবাসের পর অত্যন্ত তৃষ্ণার সহিত রা[জার] সৌন্দর্য্য-সুধা পান করিতেছে।

**पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्म्मपत्न्या।**
**तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥२[०]**

२० अ:। वर्त्मनि पार्थिवेन पुरस्कृता पार्थिवधर्म्मपत्न्या प्रत्युद्गता सा धेनुः तदन्तरे दिन[क्षपा]मध्यगता सन्ध्येव विरराज॥ वाच्य—पुरस्कृतया प्रत्युद्गतया तया धेन्वा...गतया सन्ध्यया विरेजे।

२०। वर्त्मनि पार्थिवेन पृथिव्या ईश्वरेण। 'तस्येश्वरः' इत्य

प्रत्ययः । पुरस्कृता अग्रतः कृता धर्म्मस्य पत्नी धर्मार्थपत्नीत्यर्थः । अश्व-घासादिवत् तादर्थ्ये षष्ठीसमासः । पार्थिवस्य धर्म्मपत्नीतया प्रत्युद्गता सा धेनुः, तदन्तरे तयोर्दम्पत्योर्मध्ये, दिनक्षपयोः दिनरात्र्योः मध्यगता सन्ध्या इव रराज ॥

২০। সেই নন্দিনী ধেনু তপোবনে প্রত্যাগমনকালে পশ্চাদনুসরণকারী রাজার এবং অগ্রগামিনী রাজ্ঞী সুদক্ষিণার মধ্যগতা হইয়া দিন এবং রাত্রির মধ্যগতা সন্ধ্যার ন্যায় শোভা পাইতেছিলেন।

**प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।**
**प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः॥२१**

२१ अ: । साक्षतपात्रहस्ता सुदक्षिणा पयस्विनीं तां प्रदक्षिणीकृत्य प्रणम्य च अर्थसिद्धेः द्वारमिव अस्याः विशालं शृङ्गान्तरम् आनर्च ॥ वाच्य—हस्तया सुदक्षिणया आनर्च ।

२१ । अक्षतानां पात्रेण सह वर्त्तेते इति साक्षतपात्रौ तौ हस्तौ यस्याः सा सुदक्षिणा, पयस्विनीं प्रशस्तक्षीरां तां धेनुं प्रदक्षिणीकृत्य प्रणम्य च तस्याः धेन्वाः विशालं शृङ्गान्तरं शृङ्गमध्यम्, अर्थसिद्धेः कार्य्य-सिद्धेः द्वारं प्रवेशमार्गमिव. आनर्च अर्चयामास । अर्चतेर्भौवादिकाल्लिट् ॥

২১। রাজ্ঞী সুদক্ষিণা অর্ঘপাত্রহস্তে পয়স্বিনী-নন্দিনীকে প্রদক্ষিণ ও প্রণাম করিয়া কার্যসিদ্ধির দ্বারস্বরূপ তাহার বিশাল শৃঙ্গদ্বয়ের মধ্যস্থানে অর্চনা করিয়াছিলেন।

**वत्सोत्सुकापि स्तिमिता सपर्य्यां प्रत्यग्रहीत् सेति ननन्दतुस्तौ ।**
**भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि॥२२**

२२ अ: । सा वत्सोत्सुकापि स्तिमिता (सती) सपर्य्यां प्रत्यग्रहीत् इति (हेतोः) तौ ननन्दतुः, (यथाहि) भक्त्या उपपन्नेषु तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ वाच्य—तया वत्सोत्सुकया स्तिमितया सपर्य्या प्रत्यग्राहि, ताभ्यां ननन्दे । प्रसादचिह्नैः पुरःफलैः ( भूयते )।

२२ । सा धेनुः वत्सोत्सुकापि वत्से उत्कण्ठितापि स्तिमिता निश्चला सती, सपर्य्यां पूजां प्रत्यग्रहीत् इति हेतोः तौ दम्पती ननन्दतुः । पूजा-स्वीकारस्य आनन्दहेतुत्वमाह—भक्त्येति पूज्येषु अनुरागः भक्तिः, तया उपपन्नेषु युक्तेषु विषये, तद्विधानां तस्या धेन्वा विधा इव विधा प्रकारः येषां तेषां महतामित्यर्थः । प्रसादस्य चिह्नानि लिङ्गानि पूजास्वीकारादीनि, पुरः फलानि पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि हि । अविलम्बित-फलसूचकलिङ्गदर्शनादानन्दो युज्यते इत्यर्थः ॥

২২। নন্দিনী বৎসের নিমিত্ত উৎসুকা হইয়াও স্থিরভাবে রাজ্ঞীর পূজাগ্রহণ

করিলেন দেখিয়া রাজা ও রাজ্ঞী উভয়েই আহ্লাদিত হইয়াছিলেন, যেহেতু অ
জনগণের নিকট, মহাত্মাদিগের অনুগ্রহচিহ্নও কার্য্যসিদ্ধির অদূরবর্ত্তিত্ব প্রকাশ ক

গুরোঃ সদারস্য নিপীড্য পাদৌ
সমাপ্য সান্ধ্যঞ্চ বিধিং দিলীপঃ ।
দোহাবসানে পুনরেব দোগ্ধ্রীং
ভেজে ভুজোচ্ছিন্নরিপুর্নিষণ্ণাম্ ॥ ২৩

২৩ অঃ। ভুজোচ্ছিন্নরিপুঃ দিলীপঃ সদারস্য গুরোঃ পাদৌ নিপীড্য সান্ধ্যং বিধিং সমা
দোহাবসানে নিষণ্ণাং দোগ্ধ্রীং পুনরেব ভেজে ॥ বাচ্য—...রিপুণা দিলীপেন...নিষণ্ণা দোগ্ধ্রী ভেজে।

২৩। ভুজোচ্ছিন্নরিপুর্দিলীপঃ, সদারস্য দারৈঃ অরুন্ধত্যা সহ বর
মানস্য গুরোঃ, উভয়োরপীত্যর্থঃ। 'ভার্য্যা জায়াথ পুং ভূম্নি দারাঃ' ই
মরঃ। পাদৌ নিপীড্য অভিবন্দ্য, সান্ধ্যং সন্ধ্যায়াং বিহিতং বিধিমনু
চ সমাপ্য দোহাবসানে নিষণ্ণাম্ আসীনাং দোগ্ধ্রীং দোহনশীলাম্। '
ইতি তৃন্প্রত্যয়ঃ। ধেনুমেব পুনঃ ভেজে সেবিতবান্। দোগ্ধ্রীমিতি নির
পদপ্রয়োগাৎ কামধেনুত্বং গম্যতে ॥

২৩। ভুজবলবিজিত নরপতিরিপু দিলীপ, গুরুদেব বশিষ্ঠ ও তদীয় পত্নীর চরণব
এবং সায়ংকালীন কৃত্য সমাপন করিয়া, দোহনের পরে শয়ানা পয়স্বিনী নন্দি
সেবায় পুনর্ব্বার নিযুক্ত হইয়াছিলেন।

তামন্তিকন্যস্তবলিপ্রদীপামন্বাস্য গোপ্তা গৃহিণীসহায়
ক্রমেণ সুপ্তামনু সংবিবেশ সুপ্তোত্থিতাং প্রাতরনূদতিষ্ঠৎ ॥

২৪ অঃ। গোপ্তা গৃহিণীসহায়ঃ অন্তিকন্যস্তবলিপ্রদীপাং তাম্ অন্বাস্য ক্রমেণ সুপ্তাম্
সংবিবেশ, প্রাতঃ সুপ্তোত্থিতাম্ অনু উদতিষ্ঠৎ ॥ বাচ্য—গোপ্তা...সহায়েন, অনুসংবিবিশে, উদস্থী

২৪। গোপ্তা রক্ষকঃ, গৃহিণীসহায়ঃ পত্নীদ্বিতীয়ঃ সন্, উভাব
ইত্যর্থঃ। অন্তিকে ন্যস্তা বলয়ঃ প্রদীপাশ্চ যস্যাঃ তাং তথোক্তাং, তাং নিব
ধেনুম্, অন্বাস্য অনুপবিশ্য ক্রমেণ সুপ্তাম্ অনু অনন্তরং সংবিবেশ সুপ্ত
প্রাতঃ সুপ্তোত্থিতামনু উদতিষ্ঠৎ উত্থিতবান্। অত্র অনুশব্দেন ধেনুরা
ব্যাপারয়োঃ পৌর্ব্বাপর্য্যমুচ্যতে, ক্রমশব্দেন ধেনুব্যাপারাণামিতি অপৌনরুক্ত্য
'কর্ম্মপ্রবচনীয়যুক্তে' ইতি দ্বিতীয়া ॥

২৪। রক্ষাকর্ত্তা (রাখাল) রাজা দিলীপ ও রাজ্ঞী সুদক্ষিণা নন্দিনীর নিকট প্র
এবং উপচার দ্রব্য স্থাপন করিলেন। নন্দিনী নিদ্রিতা হইলে তাঁহারাও নিদ্রিত হই
এবং প্রাতঃসময়ে নন্দিনী নিদ্রা হইতে উত্থিতা হইলে, তাঁহারাও উত্থিত হইলেন।

**इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्त्तेः ।**
**सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥ २५**

२५ अः । इत्थं प्रजार्थं महिष्या समं व्रतं धारयतः महनीयकीर्त्तेः दीनोद्धरणोचितस्य तस्य त्रिगुणानि सप्त दिनानि व्यतीयुः ॥ वाच्य—त्रिगुणैः सप्तभिः दिनैः व्यतीये ।

२५ । इत्थमनेन प्रकारेण, प्रजार्थं सन्तानाय महिष्या समम् अभिषिक्तपत्न्या सह । 'कृताभिषेका महिषी' इत्यमरः । व्रतं धारयतः, महनीया पूज्या कीर्त्तिर्यस्य तस्य, दीनानाम् उद्धरणं दैन्यविमोचनं तत्र उचितस्य परिचितस्य तस्य नृपस्य, त्रयः गुणाः आवृत्तयः येषां तानि त्रिगुणानि त्रिरावृत्तानि सप्त दिनानि एकविंशतिदिनानि व्यतीयुः (अतीतानि) ॥

২৫। দীনগণের বিপদ্ বারণে অভ্যস্ত প্রশংসনীয়যশাঃ নরপতি, মহিষীর সহিত সন্তানের নিমিত্ত এইরূপ ব্রতাচরণ করিয়া একবিংশতি (একুশ) দিন অতিবাহিত করিলেন।

**अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।**
**गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ २६**

२६ अः । अन्येद्युः मुनिहोमधेनुः आत्मानुचरस्य भावं जिज्ञासमाना सती गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोः गह्वरम् आविवेश ॥ वाच्य—धेन्वा...मानया...शष्पं गह्वरम् आविविशे ।

२६ । अन्येद्युः अन्यस्मिन् दिने द्वाविंशे दिने । 'सद्यः परुत्परारि' इत्यादिना निपातनादव्ययम् । 'अद्यात्राह्नाय पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् । तथाधरान्यान्यतरेतरात् पूर्वेद्युरादयः' इत्यमरः । मुनिहोमधेनुः आत्मानुचरस्य भावम् अभिप्रायं दृढभक्तित्वम् । 'भावोऽभिप्राय आशयः' इति यादवः । जिज्ञासमाना ज्ञातुमिच्छन्ती । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदे शानच् । प्रपतति अस्मिन् इति प्रपातः पतनप्रदेशः, गङ्गायाः प्रपातः, तस्य अन्ते समीपे विरूढानि जातानि शष्पाणि बालतृणानि यस्मिन् तत् । 'शष्पं बालतृणं घासः' इत्यमरः । गौरीगुरोः पार्व्वतीपितुः, गह्वरं गुहाम् आविवेश ॥

২৬। অনন্তর দ্বাবিংশদিবসে মুনির হোমধেনু নন্দিনী, আপনার প্রতি অনুচর মহারাজ দিলীপের কিরূপ ভক্তি, তাহা অবগত হইবার নিমিত্ত, গঙ্গা হইতে পতিত জলধারার সমীপবর্ত্তি বালতৃণপূর্ণপ্রদেশ-শোভিত হিমালয়ের এক গহ্বরে প্রবেশ করিলেন।

**सा दुष्प्रधर्षा मनसापि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।**
**अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष २७**

२७ अ:। सा हिंस्रैः मनसापि दुष्प्रधर्षा इति हेतोः अद्रिशोभाप्रहितेक्षणेन नृपेण अलक्षि- भ्युत्पतनः सिंहः प्रसह्य तां चकर्ष किल॥ वाच्य—तया दुष्प्रधर्षया (भूयते)...पतनेन सिं- सा चकृषे।

२७। सा धेनुः हिंस्रैः व्याघ्रादिभिः मनसा अपि दुष्प्रधर्षा दुर्धर्षा इ- हेतोः अद्रिशोभायां प्रहितेक्षणेन दत्तदृष्टिना नृपेण, अलक्षितम् अभ्यु- पतनम् आभिमुख्येन उत्पतनं यस्य सः सिंहः, तां धेनुं प्रसह्य हठात् 'प्रसह्य तु हठार्थकम्' इत्यमरः। चकर्ष आचक्राम, किलेत्यलीके॥

২৭। হিংস্র জন্তুরা আক্রমণ করা দূরের কথা, মনেও সেই নন্দিনীর অনিষ্টচি- করিতে পারে না, ইহা মনে করিয়া, রাজা বিশ্বস্ত হৃদয়ে হিমালয়ের শোভা দর্শন করিতে- ছিলেন, এমন সময়ে এক সিংহ তাহার অজ্ঞাতসারে নন্দিনীর উপর পতিত হই- তাহাকে আক্রমণ করিল।

**तदीयमाक्रन्दितमार्त्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम्।**
**रश्मिष्विवादाय नगेन्द्रसक्तां निवर्त्तयामास नृपस्य दृष्टिम्॥**

२८ अ:। गुहानिबद्धप्रतिशब्ददीर्घं तदीयम् आक्रन्दितम् आर्त्तसाधोर्नृपस्य नगेन्द्रसक्तां दृ- रश्मिषु आदायेव निवर्त्तयामास॥ वाच्य—दीर्घेण तदीयेन आक्रन्दितेन...सक्ता दृष्टिः निवर्त्तयामा-

२८। गुहानिबद्धेन प्रतिशब्देन प्रतिध्वनिना दीर्घं, तस्या इदं तदीय- आक्रन्दितम् आर्त्तघोषणम्, आर्त्तेषु आपन्नेषु साधोः हितकारिणः नृपस्य नगेन्द्रसक्तां दृष्टिं रश्मिषु प्रग्रहेषु। 'किरणप्रग्रहौ रश्मी' इत्यमरः आदाय इव गृहीत्वा इव निवर्त्तयामास॥

২৮। [যেরূপ সারথি, ভিন্নপথগামী অশ্বের মুখরশ্মি আকর্ষণ করিয়া বলপূর্ব- তাহাকে গন্তব্যপথে আনয়ন করে; সেইরূপ] সেই ধেনুর গিরিগুহাব্যাপ্ত অতি- গম্ভীর আর্ত্তনাদ, আর্ত্তত্রাণপরায়ণ ক্ষিতিপতি দিলীপের পর্ব্বতসৌন্দর্য্য দর্শ- নিবিষ্ট দৃষ্টিকে বলপূর্ব্বক যেন রজ্জুতে আকর্ষণ করিয়া সেই দিকে ফিরাইয়াছিল।

**स पाटलायां गवि तस्थिवांसं धनुर्धरः केशरिणं ददर्श।**
**अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम्॥**

२९ अ:। धनुर्धरः सः पाटलायां गवि तस्थिवांसं केशरिणं सानुमतः धातुमय्याम् अधित्यका- तस्थिवांसं प्रफुल्लं लोध्रद्रुममिव ददर्श॥ वाच्य—धनुर्धरेण तेन...तस्थिवान् केशरी प्रफुल्लः लोध्र- इव ददृशे।

२९। धनुर्धरः सः नृपः पाटलायां रक्तवर्णायां गवि, तस्थिवां- स्थितम्। 'क्वसुश्च' इति क्वसुप्रत्ययः। केशरिणं सिंहं, सानुमतः अद्रे- धातोः गैरिकस्य विकारः धातुमयी तस्याम् अधित्यकायाम् ऊर्द्ध्वभूमौ

'उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका' इत्यमरः। 'उपाधिभ्यां त्यकन्नासन्नारूढ़योः' इति त्यकन्प्रत्ययः। प्रफुल्लः विकसितः तम्। फुल्ल विकसने इति धातोः पचाद्यच्। लोध्राख्यं द्रुममिव ददर्श। प्रफुल्तमिति तकारपाठे ञि फला विशरणे इति धातोः कर्त्तरि क्तः 'उत्परस्यातः' इत्युकारादेशः ॥

২৯। ধনুর্দ্ধারী দিলীপ, পাটলবর্ণা সেই ধেনুর উপরি পতিত লম্বমান কেশরশোভিত মৃগেন্দ্রকে পর্ব্বতের গৈরিকময়ী অধিত্যকায় সমুদ্ভূত প্রস্ফুটিত পুষ্পশোভিত লোধ্র বৃক্ষের ন্যায় দেখিয়াছিলেন।

**ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः।**
**जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्त्तुमैच्छत् प्रसभोद्धृतारिः ३०**

३० अः। ततो मृगेन्द्रगामी शरण्यः प्रसभोद्धृतारिः नृपतिः जाताभिषङ्गः सन् वध्यस्य मृगेन्द्रस्य वधाय निषङ्गात् शरम् उद्धर्त्तुम् ऐच्छत्॥ वाच्य—मृगेन्द्रगामिना शरण्येन जाताभिषङ्गेन नृपतिना प्रसभोद्धृतारिणा ऐष्यत।

३०। ततः सिंहदर्शनानन्तरं, मृगेन्द्रगामी सिंहगामी, शरणं रक्षणम्। 'शरणं रक्षणे गृहे' इति यादवः। 'शरणं गृहरक्षित्रोः' इत्यमरः। शरणे साधुः शरण्यः। 'तत्र साधुः' इति यत्प्रत्ययः। प्रसभेन बलात्कारेण उद्धृताः अरयः येन सः, नृपतिः राजा, जाताभिषङ्गः जातपराभवः सन्। 'अभिषङ्गः पराभवः' इत्यमरः। वध्यस्य वधार्हस्य। 'दण्डादिभ्यो यत्' इति यत्प्रत्ययः। मृगेन्द्रस्य वधाय निषङ्गात् तूणीरात्। 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः। शरमुद्धर्त्तुमैच्छत्॥

৩০। অনন্তর সিংহবৎ শীঘ্রগামী, ভুজবলবিজিতরিপু, শরণাগত-প্রতিপালক ভূপতি, নন্দিনী ধেনুকে এইরূপে আক্রান্ত হইতে দেখিয়া, আপনাকে অবমানিত মনে করিয়া, সেই সিংহের বিনাশার্থ তূণীর হইতে বাণ উত্তোলন করিতে প্রবৃত্ত হইলেন।

**वामेतरस्तस्य करः प्रहर्त्तुर्नखप्रभाभूषितकङ्कपत्रे।**
**सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे॥३१**

३१ अः। प्रहर्त्तुस्तस्य वामेतरः करः नखप्रभाभूषितकङ्कपत्रे सायकपुङ्खे एव सक्ताङ्गुलिः सन् चित्रार्पितारम्भ इव अवतस्थे॥ वाच्य—वामेतरेण करेण सक्ताङ्गुलिना, चित्रार्पितारम्भेण इव, अवतस्थे।

३१। प्रहर्त्तुस्तस्य वामेतरः दक्षिणः करः, नखप्रभाभिर्भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि यस्य तस्मिन्। 'कङ्कः पक्षि-

विशेषे स्यात् गुम्ताकारे युधिष्ठिरे' इति विश्वः । 'कङ्कस्तु कर्कटः' यादवः । सायकस्य पुङ्खे एव कर्त्तर्य्याख्ये मूलप्रदेशे । 'कर्त्तरी पुङ्ख' इति यादवः । सक्ताङ्गुलिः सन् चित्रार्पितारम्भः चित्रलिखितशरोद्धार-द्योगः इव अवतस्थे ॥

৩১। নরপতি, বাণক্ষেপণ—মানসে যেমন তূণীর হইতে বাণ উত্তোলন করিতে প্রবৃত্ত হইলেন, অমনি তাহার দক্ষিণ হস্তের অঙ্গুলি, বাণের মূলদেশে সংলগ্ন হইয়া গেল, দক্ষিণ হস্ত, চিত্রলিখিত বাণোত্তোলনে প্রবৃত্ত হস্তের ন্যায় অচলাবস্থায় রহিল; কঙ্কপত্র তাহার নখকিরণে ভূষিত হইল মাত্র।

**बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।**
**राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्य्यः ॥**

३२ अः । बाहुप्रतिष्टम्भविवृद्धमन्युः राजा मन्त्रौषधिरुद्धवीर्य्यः भोगीव अभ्यर्णम् आगस्कृतम् अस्पृशद्भिः स्वतेजोभिः अन्तः अदह्यत ॥ वाच्य—...मन्युं राजानं...वीर्य्यं भोगिनमिव अस्पृशन्ति स्वतेजांसि अदहन् ।

३२ । बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन । 'प्रतिबन्धः प्रतिष्टम्भः' इत्यमरः । विवृद्धमन्युः प्रवृद्धरोषः राजा, मन्त्रौषधिभ्यां रुद्धवीर्य्यः प्रतिवद्धशक्तिः भोगी सर्पः इव । 'भोगी राजभुजङ्गयोः' इति शाश्वतः । अभ्यर्णम् अन्तिकम् । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः । आगस्कृतम् अपराधकारिणम् अस्पृशद्भिः स्वतेजोभिः अन्तः अदह्यत । 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि' इति यादवः ॥

৩২। মহারাজ (এইরূপে) বাহু-প্রতিবদ্ধ হওয়ায় অত্যন্ত ক্রুদ্ধ হইয়া উঠিলেন এবং সমীপাগত অপরাধীর গাত্র পর্য্যন্ত স্পর্শ করিতে পারিলেন না বলিয়া, মন্ত্রৌষধি-রুদ্ধবীর্য্য সর্পের ন্যায় স্বীয় বিক্রমরূপ অগ্নিতে দগ্ধ হইতে লাগিলেন।

**तमार्य्यगृह्यं निगृहीतधेनु-**
**र्मनुष्यवाचा मनुवंशकेतुम् ।**
**विस्माययन् विस्मितमात्मवृत्तौ**
**सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३**

३३ अः । निगृहीतधेनुः सिंहः आर्य्यगृह्यम् मनुवंशकेतुं सिंहोरुसत्त्वम् आत्मवृत्तौ विस्मितं मनुष्यवाचा विस्माययन् निजगाद ॥ वाच्य—निगृहीतधेनुना सिंहेन विस्माययता सः...केतुः विस्मितः ...सत्त्वः...गृह्यः निजगदे ।

३३ । निगृहीता पीड़िता धेनुर्येन सः सिंहः आर्य्याणां सतां गृह्यं पक्ष्यम् । 'पदास्वैरिबाह्यापक्ष्येषु च' इति क्यप् । मनुवंशस्य केतुं चिह्नम्

तुवत् व्यावर्त्तकम्। सिंह इव उरुसत्त्वं महाबलम् तम्, आत्मन: वृत्तौ बाहुस्तम्भरूपे व्यापारे, अभूतपूर्वत्वात् विस्मितम्। कर्त्तरि क्त:। तं लोपं, मनुष्यवाचा करणेन पुन: विस्माययन् विस्मयमाश्चर्य्यं प्रापयन् जगाद। 'स्मिङ् ईषद्धसने' इति धातोर्णिनि वृद्धौ आयादेशे शतृप्रत्यये सति विस्माययन्निति रूपं सिद्धम्। 'विस्मापयन्' इति पाठे पुगागमवं वक्तव्यं तच्च 'नित्यं स्मयते:' इति हेतुभयविवक्षायामेवेति। 'भीस्म्योर्हेतुभये' इत्यात्मनेपदे विस्मापयमान इति स्यात् तस्मात् मनुष्यवाचा विस्माययन्निति रूपं सिद्धम्, करणविवक्षायां न कश्चिद्दोष:॥ ३३॥

৩৩। নন্দিনীর নিগ্রহকারী সেই কেশরী, বাহুপ্রতিষ্টম্ভরূপ অভূতপূর্ব্ব ব্যাপার দর্শনে বিস্মিতচিত্ত সাধুজনপূজিত সিংহবিক্রম মনুবংশকেতু মহীপতি দিলীপকে, মনুষ্যবাক্যে অধিকতর বিস্মিত করিয়া বলিতে লাগিল।

**अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।**
**न पादपोन्मूलनशक्ति रंह: शिलोच्चये मूर्च्छति मारुतस्य॥२४**

२४ अ:। हे महीपाल! तव श्रमेण अलम्, इत: प्रयुक्तमपि अस्त्रं वृथा स्यात्, मारुतस्य पादपोन्मूलनशक्ति रंह: शिलोच्चये न मूर्च्छति॥ वाच्य—प्रयुक्तेनापि अस्त्रेण भूयेत,…शक्तिना रंहसा न मूर्च्छ्यते।

हे महीपाल! तव श्रमेण अलं, साध्याभावात् श्रमो न कर्त्तव्य इत्यर्थ:। अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात् तृतीया। उक्तञ्च—'न्यासोद्द्योते न केवलं श्रूयमाणैव क्रियानिमित्तं करणभावस्य, अपि तर्हि गम्यमानापि' इति। 'अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम्' इत्यमर:। इत: अस्मिन् मयि। सार्वविभक्तिकस्तसि:। प्रयुक्तमपि अस्त्रं वृथा स्यात्। तथाहि, पादपोन्मूलने शक्ति र्यस्य तत् तथोक्तं मारुतस्य रंह: वेग: शिलोच्चये पर्व्वते न मूर्च्छति न प्रसरति॥ ३४॥

৩৪। সিংহ মনুষ্যের মত বলিল, হে মহীপাল! বৃথা কেন ক্লেশ স্বীকার কর! আমার উপর অস্ত্র নিক্ষেপ করিলেও তাহা ব্যর্থ হইবে, কেন না, বায়ু বৃক্ষ উন্মূলনে সমর্থ হয় বটে, কিন্তু, পর্ব্বত উৎপাটনে কৃতকার্য্য হয় না।

**कैलासगौरं वृषमारुरुक्षो:**
**पादार्पणानुग्रहपूतपृष्ठम्।**
**अवेहि मां किङ्करमष्टमूर्त्ते:**
**कुम्भोदरं नाम निकुम्भमित्रम्॥ ३५**

अजस्रदीक्षाप्रयतः स मद्गुरुः
क्रतोरशेषेण फलेन युज्यताम् ॥ ६५

६५ अ: । हे प्रभो ! यदि अश्वम् अमोच्यं मन्यसे ततः अजस्रदीक्षाप्रयतः सः मद्गुरुः विधिनैव णि समाप्ते क्रतोः अशेषेण फलेन युज्यताम् ॥ वाच्य—अश्वः अमोच्यः मन्यते (त्वया)...प्रयतं तं णं युंक्ष्व ।

६५ । हे प्रभो ! इन्द्र ! अश्वम् अमोच्यं मन्यसे यदि, ततः तर्हि स्रदीक्षायां प्रयतः सः मद्गुरुः मम पिता विधिना एव कर्म्मणि समाप्ते क्रतोः यत् फलं तेन फलेन अशेषेण कृत्स्नेन युज्यतां युक्तः अस्तु । अमेधफललाभे किमश्वेन इति भावः ॥

৬৫। হে প্রভো! যদি যজ্ঞীয় অশ্বটী একান্তই আপনার পরিত্যাজ্য না হয়, তাহা অজস্রযজ্ঞকার্য্যে দীক্ষিত মদীয় পিতৃদেব যথাবিধি এই যজ্ঞ সমাপন করিলে ম্পূর্ণ ফল পাইতেন, তাঁহাকে সেই ফল প্রদান করুন।

यथा च वृत्तान्तमिमं सदोगत-
स्त्रिलोचनैकांशतया दुरासदः ।
तवैव सन्देशहराद्विशाम्पतिः
शृणोति लोकेश ! तथा विधीयताम् ॥ ६६

६६ अ: । सदोगतः त्रिलोचनैकांशतया दुरासदः सः विशांपतिः यथा इमं वृत्तान्तं तव एव सन्देश-त् शृणोति च, हे लोकेश ! तथा विधीयताम् ॥ वाच्य—सदोगतेन दुरासदेन तेन विशाम्पतिना एषः वृत्तान्तः श्रूयते, तथा विदधातु ।

६६ । सदोगतः सदोगृहं गतः त्रिलोचनस्य ईश्वरस्य एकांशतया नाम् अन्यतममूर्त्तित्वात् दुरासदः अस्मादृशैः दुष्प्रापः विशाम्पतिः, ा इमं वृत्तान्तं तव सन्देशहरात् वार्त्ताहरात् एव शृणोति च, लोकेश ! इन्द्र ! तथा विधीयताम् ॥ ६६

৬৬। পরিষৎ পরিবেষ্টিত মদীয় পিতৃদেব যজ্ঞে ব্রতী হওয়ায় অষ্টমূর্ত্তির অন্যতম মূর্ত্তি করাতে সাধারণ লোকের অনভিগম্য হইয়াছেন, আপনার নিজের বার্ত্তাবহ-যাহাতে তিনি এই সংবাদ জানিতে পারেন, তাহারও উপায় বিধান করুন।

थेति कामं प्रतिशुश्रुवान् रघोर्यथागतं मातलिसारथिर्ययौ ॥
पस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्त्तत ६७

६७ अ: । मातलिसारथिः रघोः कामं तथेति प्रतिशुश्रुवान् यथागतं ययौ, सुदक्षिणासूनुरपि

नातिप्रमना: सन् नृपस्य सदोगृहं (प्रति) न्यवर्त्तत ॥ वाच्य—मातलिसारथिना प्रतिशुश्रुवे … नातिप्रमनसा सुदक्षिणासूनुना न्यवर्त्यत ।

६७। मातलिसारथि: इन्द्र: रघो: सम्बन्धिनं कामं मनोरथं … तथास्त्विति प्रतिशुश्रुवान् । 'भाषायां सदवसश्रुव:' इति क्वसुप्रत्यय: … गतं ययौ, सुदक्षिणासूनु: रघु: अपि नातिप्रमना: विजयलाभे अपि … नाशात् न अतीव तुष्ट: सन् । नञर्थस्य नशब्दस्य सुपसुपेति … नृपस्य सदो गृहं प्रति न्यवर्त्तत ॥

৬৭। মাতলি-সারথি সেই ইন্দ্র 'তথাস্তু' বলিয়া রঘুর প্রার্থনায় প্রতিশ্রুত … যথাস্থানে প্রস্থান করিলেন; এদিকে সুদক্ষিণার পুত্র রঘুও অনতিপ্রফুল্লচিত্তে … সভায় প্রত্যাগমন করিলেন।

तमभ्यनन्दत् प्रथमं प्रबोधित:
प्रजेश्वर: शासनहारिणा हरे: ।
परामृशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८

६८ अ: । हरे: शासनहारिणा प्रथमं बोधित: प्रजेश्वर: हर्षजडेन पाणिना कुलिशव्रणाङ्कितं … तदीयम् अङ्गं परामृशन् तम् अभ्यनन्दत् ॥ वाच्य—बोधितेन प्रजेश्वरेण परामृशता स: …

६८। हरेरिन्द्रस्य शासनहारिणा पुरुषेण प्रथमं प्रबोधित: … वृत्तान्तमिति शेष: । प्रजेश्वर: दिलीप: हर्षजडेन हर्षशिथिलेण पाणिना … कुलिशव्रणाङ्कितं तस्य रघो: इदं तदीयम् अङ्गं शरीरं, परामृशन् … रघुम् अभ्यनन्दत् ॥

৬৮। প্রজানাথ দিলীপ ইতিপূর্ব্বেই ইন্দ্রপ্রেরিত বার্ত্তাবহের মুখে সমস্ত … অবগত হইয়াছিলেন; তিনি পুত্রকে অভিনন্দিত করিয়া তাহার বজ্রক্ষত … বুলাইতে লাগিলেন, আনন্দে তদীয় হস্ত অবশ হইল।

इति क्षितीशो नवतिं नवाधिकां
महाक्रतूनां महनीयशासन: ।
समारुरुक्षुर्दिवमायुष: क्षये
ततान सोपानपरम्परामिव ॥ ६९

६९ अ: । महनीयशासन: क्षितीश: आयुष: क्षये दिवम् आरुरुक्षु: सन् इति नवाधिकां महाक्रतूनां नवतिं सोपानपरम्परामिव ततान ॥ वाच्य—…शासनेन क्षितीशेन आरुरुक्षुणा … नवति:…परम्परा इव तेने ।

६९। महनीयशासनः पूजनीयाज्ञः क्षितीशः, इति अनेन प्रकारेण। इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु' इत्यमरः, महाक्रतूनाम् अश्वमेधानां नवभिरधिकां नवतिम् एकोनशतम्, आयुषः क्षये सति, दिवं स्वर्गम् समारुरुक्षुः आरोढुमिच्छुः, सोपानानां परम्परां पङ्क्तिम् इव ततान॥

৬৯। যাঁহার আজ্ঞা সর্ব্বত্রই পূজিত, সেই পৃথ্বীশ্বর দিলীপ, এইরূপে নবনবতি যজ্ঞ সম্পাদন করিলেন, যেন তিনি জীবনান্তে স্বর্গে আরোহণ করিবার জন্য (সেই যজ্ঞপরম্পরারূপ) সোপানপঙ্ক্তি নির্ম্মাণ করিয়াছিলেন।

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्॥ ७०

श्रीरघुवंशे महाकाव्ये कालिदासकृतौ रघुराज्याभिषेकोनाम तृतीयःसर्गः॥

७० अ:। अथ विषयव्यावृत्तात्मा सः यूने सूनवे नृपतिककुदं सितातपवारणं यथाविधि दत्त्वा देव्या सह मुनिवनतरुच्छायां शिश्रिये, तथाहि गलितवयसाम् इक्ष्वाकूणाम् इदं कुलव्रतम्॥ वा—विषयव्यावृत्तात्मना तेन...तरुच्छाया शिश्रिये, अनेन कुलव्रतेन (भूयते)।

७०। अथ विषयेभ्यः व्यावृत्तात्मा निवृत्तचित्तः सः दिलीपः, यथाविधि यथाशास्त्रं यूने सूनवे नृपतिककुदं राजचिह्नम्। 'ककुद्वत् ककुदं च वृषाङ्गे राजलक्ष्मणि' इति विश्वः। सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोः छायां शिश्रिये श्रितवान्, वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः। तथाहि गलितवयसां वृद्धानाम्, इक्ष्वाकूणाम् इक्ष्वाकोर्गोत्रापत्यानाम् तद्राजसंज्ञकत्वादणो लुक्। इदं वनगमनं कुलव्रतम्। देव्या सहेत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः। तथाच याज्ञवल्क्यः—'सुतविन्यस्तपत्नीको तया वानुगतो वनम्। वाणप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्॥' इति। हरिणीवृत्तमेतत्। तदुक्तम्—'नसमरसला गः षड्वेदैर्हयैर्हरिणी मता' इति॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रघुराज्याभिषेको नाम तृतीयः सर्गः॥ १

৭০। অনন্তর তিনি সাংসারিক বিষয় হইতে সম্পূর্ণরূপে নিবৃত্ত হইয়া, যুবা রঘুকে যথাবিধি রাজচিহ্ন শ্বেতচ্ছত্র প্রদান করিয়া, মহিষীর সহিত তপোবন-তরুর ছায়া আশ্রয় করিলেন; কেননা, ইক্ষ্বাকুবংশীয় বৃদ্ধ নৃপতিগণের ইহাই কুলব্রত।

তৃতীয় সর্গ সমাপ্ত॥

# चतुर्थः सर्गः ।

—०၀፨၀፨၀၀—

**स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।**
**दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १**

१ अः । स गुरुणा दत्तं राज्यं प्रतिपद्य दिनान्ते सवित्रा निहितं तेजः ( प्रतिपद्य ) हुताशन इव अधिकं बभौ ॥ वाच्य—तेन हुताशनेन इव बभे ।

शारदा शारदाम्भोज-वदना वदनाम्बुजे ।
सर्व्वदा सर्व्वदास्माकं सन्निधिं सन्निधिं क्रियात् ॥

१ । सः रघुः, गुरुणा पित्रा दत्तं राज्यं राज्ञः कर्म्म प्रजा-परिपाल-नात्मकम् । पुरोहितादित्वाद्यक् । प्रतिपद्य प्राप्य, दिनान्ते सा... सवित्रा सूर्य्येण निहितं तेजः प्रतिपद्य, हुताशनः अग्निः इव अधिकं... 'सौरं तेजः सायमग्निं संक्रमते । आदित्यो वा अस्तं यन् अग्निं प्रविशति । अग्निं वा आदित्यः सायं प्रविशति' इत्यादिश्रुतिः प्रमा...

১। অগ্নি যেমন সায়ংকালে সূর্য্য কর্ত্তৃক স্থাপিত তেজঃ প্রাপ্ত হইয়া ... প্রদীপ্ত হয়, তেমনি রঘুও পিতা কর্ত্তৃক প্রদত্ত সাম্রাজ্য প্রাপ্ত হইয়া অধিকত... হইলেন। (শাস্ত্রে কথিত আছে যে,—সূর্য্যদেব অস্তে যাইবার সময় নিজ তে... মধ্যে রাখিয়া যান)।

**दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।**
**पूर्व्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २**

२ अः । दिलीपानन्तरं तं राज्ये प्रतिष्ठितं निशम्य राज्ञां हृदये पूर्व्वं प्रधूमितः अग्नि... इव ॥ वाच्य—प्रधूमितेन अग्निना उत्थितम् ।

२ । दिलीपानन्तरं, राज्ये प्रतिष्ठितम् अवस्थितं तं रघुं नि... आकर्ण्य पूर्वं दिलीपशासनकाले राज्ञां हृदये प्रकर्षेण धूमोऽस्य ... प्रधूमितः अग्निः सन्तापाग्निः उत्थितः इव प्रज्वलितः इव पूर्वेष्वो... सन्तापोऽभूत् इत्यर्थः । राजकर्त्तृकस्यापि निशमनस्याग्नौ उप... समानकर्त्तृकत्वविरोध इति ॥

২। পূর্ব্ব হইতে বিপক্ষ রাজমণ্ডলের হৃদয়ে যে সন্তাপাগ্নি ধূমরাশি ... করিতেছিল, দিলীপের পর রঘু সিংহাসনে বসিয়াছেন শুনিয়া, সেই ... ধূ ধূ করিয়া জ্বলিয়া উঠিল।

**पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।**
**नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३**

३ अः । पुरुहूतध्वजस्येव तस्य नवाभ्युत्थानदर्शिन्यः उन्नयनपङ्क्तयः सप्रजाः प्रजाः ननन्दुः ॥
वा—...दर्शिनीभिः उन्नयनपङ्क्तिभिः सप्रजाभिः प्रजाभिः ननन्दे ।

३ । पुरुहूतध्वजः इन्द्रध्वजः । स किल राजभिर्वृद्ध्यर्थं पूज्यते यथोक्तं भविष्योत्तरे—"एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर । पर्ज्जन्यः कामवर्षी स्यात् तस्य राज्ये न संशयः ॥" इति । "चतुरस्रं ध्वजाकारं राजद्वारि प्रतिष्ठितम् । आहुः शक्रध्वजं नाम पौरलोकसुखावहम् ॥" पुरुहूतध्वजस्य इव तस्य रघोः नवम् अभ्युत्थानम् अभ्युन्नतिम् अभ्युदयञ्च पश्यन्तीति नवाभ्युत्थानदर्शिन्यः उत् ऊर्द्ध्वं प्रस्थिताः उल्लसिताश्च नयनपङ्क्तयः यासां ताः सप्रजाः ससन्ताना: प्रजाः जनाः । 'प्रजा स्यात् सन्ततौ जने' इत्युभयत्र अप्यमरः । ननन्दुः ॥

৩। যেমন লোক সকল উর্দ্ধনেত্রে ইন্দ্রধ্বজের অভ্যুত্থান দর্শন করিয়া পুলকিত হয়, তেমনি প্রজাগণ সন্তান সন্ততির সহিত রঘুর অভিনব অভ্যুদয় দর্শন করিয়া আহ্লাদে পুলকিত হইল।

**सममेव समाक्रान्तं द्वयं द्विरदगामिना ।**
**तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम् ॥ ४**

४ अः । द्विरदगामिना तेन सममेव द्वयं समाक्रान्तम्, पित्र्यं सिंहासनम् अखिलम् अरिमण्डलञ्च ॥
वा—द्विरदगामी सः समाक्रान्तवान् ।

४ । द्विरद इव द्विरदैश्च वा गच्छतीति द्विरदगामिना । 'कर्त्तर्य्युपमाने' इति 'सुप्यजातौ' इति च णिनिः । तेन रघुणा समं युगपत् एव द्वयं समाक्रान्तम् अधिष्ठितम् । किं तत् द्वयम् ? पितुरागतं पित्र्यम् । 'पितुर्यत्' इति यत्प्रत्ययः । सिंहासनम्, अखिलम् अरीणाम् मण्डलं राष्ट्रञ्च ॥

৪। গজগামী (হস্তীর ন্যায় ধীর ও উদ্ধত পদক্ষেপপূর্ব্বক যিনি গমন করেন; অথবা অভিষেককালে গজে আরোহণ করিয়া যিনি নগর প্রদক্ষিণ করিয়াছেন) সেই রঘু, এক সময়েই পৈতৃক সিংহাসন ও রিপুমণ্ডল আক্রমণ করিলেন।

**छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।**
**पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५**

५ अः । पद्मा स्वयम् अदृश्या किल छायामण्डललक्ष्येण पद्मातपत्रेण साम्राज्यदीक्षितं तं भेजे ॥
वा—अदृश्यया...दीक्षितः सः भेजे ।

५। सिंहासनारोहणानन्तरं तस्य लक्ष्मीसन्निधानमाह, छा
अत्र रघोस्तेजोविशेषेण स्वयं सन्निहितया लक्ष्म्या छत्रधारणं कृतमि
प्रेच्यते। पद्मा लक्ष्मीः। 'लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरि
इत्यमरः। स्वयम् अदृश्या किल। किलेति सम्भावनायाम्।
छायामण्डललक्ष्येण कान्तिपुञ्जानुमेयेन न तु स्वरूपतो दृश्येन।
मण्डलमित्यनेन अनातपत्नानं लक्ष्यते। 'छाया सूर्य्यप्रिया कान्तिः
विम्बमनातपः' इत्युभयत्राप्यमरः। पद्मातपत्रेण पद्ममेव आतपत्रं
करणभूतेन, साम्राजदीक्षितं साम्राजेत्र साम्राजत्रकर्म्मणि मण्डला
दीक्षितम्, अभिषिक्तं तं भेजे। अन्यथा कथमेतादृशी कान्तिस
रिति भावः॥

৫। সিংহাসনারূঢ় রঘুর প্রভাপুঞ্জ দেখিয়া জ্ঞান হইতে লাগিল, যেন ল
স্বয়ং অদৃশ্যভাবে থাকিয়া সার্ব্বভৌমপদে অভিষিক্ত সেই রঘুর মস্তকে পদ্ম ছত্র
করিয়া তাঁহার ভজনা করিতেছেন।

परिकल्पितसान्निध्या काले काले च वन्दिषु।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती॥ ६

६ अः। सरस्वती च काले काले वन्दिषु परिकल्पितसान्निध्या सती अर्थ्याभिः स्तुति
तम् उपतस्थे। वाच्य—सरस्वत्या...सान्निध्यया स्तुत्यः सः उपतस्थे।

६। सम्प्रति सरस्वतीसान्निध्यमाह—परिकल्पितेति। सरस्व
काले काले सर्वेषु अपि योग्यकालेषु। 'नित्यवीप्सयोः' इति वी
द्विर्वचनम्। वन्दिषु परिकल्पितसान्निध्या कृतसन्निधाना सती,
स्तोत्रार्हं तं रघुम् अर्थ्याभिः अर्थात् अनपेताभिः। 'धर्मपथ्यर्थन्याय
पेते' इति यत्प्रत्ययः। स्तुतिभिः स्तोत्रैः उपतस्थे देवताबुद्धा पूजि
इत्यर्थः। देवतात्वञ्च 'ना विष्णुः पृथिवीपतिः' इति वा लोकपाला
त्वादित्यनुसन्धेयम्। एवञ्च सति 'उपाद्देवपूजासङ्गतिकरणमित्र
पथिषु' इति वक्तव्यादात्मनेपदं सिध्यति॥

৬। সরস্বতীও যথাসময়ে বৈতালিকগণের কণ্ঠে আবির্ভূতা হইয়া সদর্থযুক্ত
সেই প্রশংসনীয় রাজা রঘুর গুণগান করিতেন।

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः।
तथाप्यनन्यपूर्व्वेव तस्मिन्नासीद्वसुन्धरा॥ ७

७ अः। वसुन्धरा मान्यैः मनुप्रभृतिभिः राजभिः भुक्ता यद्यपि, तथापि तस्मिन्
आसीत॥ वाच्य—वसुन्धरया भुक्तया अनन्यपूर्व्वया अभूयत।

७। वसुन्धरा, मनुप्रभृतिभिः मन्वादिभिः मान्यैः पूज्यैः राजभिः भुक्ता यद्यपि भुक्तैव इत्यर्थः। यद्यपि इत्यवधारणे। 'अप्यर्थे यदि वार्थे स्यात् यद्यपीति केशवः। तथापि तस्मिन् राज्ञि, अन्यः पूर्व्वः यस्याः सा अन्यपूर्व्वा, अन्यपूर्व्वा न भवतीति अनन्यपूर्व्वा अनन्योपभुक्तेव आसीत् तत्प्रथमपतिकेवानुरक्तवतीत्यर्थः॥

৭। যদিও বসুমতী, মনুপ্রভৃতি माननीয় রাজগণকর্তৃক উপভুক্ত হইয়াছিলেন, তথাপি এক্ষণ অনন্যোপভুক্তার ন্যায় অনুরক্তা হইয়া ঐকান্তিক মনে রঘুর সেবায় প্রবৃত্ত হইলেন।

## स हि सर्वस्य लोकस्य युक्तदण्डतया मनः।
## आददे नातिशीतोष्णो नभस्वानिव दक्षिणः॥ ८

८ अः। हि (यस्मात्) स युक्तदण्डतया सर्वस्य लोकस्य मनः आददे, कथमिव नातिशीतोष्णः दक्षिणः नभस्वानिव॥ वाच्य—तेन आददे,...शीतोष्णेन दक्षिणेन नभस्वता इव।

८। अत्र कारणमाह—स हीति। हि यस्मात् कारणात् सः रघुः युक्तदण्डतया यथापराधदण्डतया सर्व्वस्य लोकस्य मन आददे जहार। क इव? अतिशीतः अत्युष्णो वा न भवतीति नातिशीतोष्णः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। दक्षिणः दक्षिणदिग्भवः नभस्वान् वायुः इव मलयानिलः इव इत्यर्थः। युक्तदण्डतयेत्यत्र कामन्दकः,—'उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेण नृपतिस्तस्मात् युक्तदण्डः प्रशस्यते।' इति॥

৮। যেমন বসন্তের বায়ু, অত্যন্ত শীতল বা অত্যন্ত উষ্ণ না হওয়ায়, সকলের চিত্ত হরণ করে, তেমনি তিনিও অত্যন্ত উগ্র বা অত্যন্ত মৃদু না হইয়া যথাযোগ্য দণ্ডদান করায়, সকলের চিত্ত হরণ করিলেন।

## मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ।
## फलेन सहकारस्य पुष्पोद्गम इव प्रजाः॥ ९

९ अः। तेन प्रजाः गुरौ सहकारस्य फलेन पुष्पोद्गमे इव ततो गुणाधिकतया मन्दोत्कण्ठाः कृताः॥ वाच्य—सः प्रजाः फलं...कृतवान्।

९। तेन रघुणा, प्रजाः, गुरौ दिलीपविषये, सहकारः अतिसौरभः चूतः। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः। तस्य फलेन पुष्पोद्गमे पुष्पोदये इव, ततोऽपि गुणाधिकतया हेतुना मन्दोत्कण्ठाः अल्पौत्सुक्याः कृताः। गुणोत्तरस्य उत्तरो विषयः पूर्वं विस्मारयतीति भावः॥

৯। চূততরুর ফল উৎপন্ন হইয়া যেমন লোকের মন হইতে মুকুলের জনিত দুঃখের লাঘব করে, তেমনি রঘু, পিতা হইতেও অধিকতর গুণশালী প্রজাবৃন্দের হৃদয় হইতে দিলীপের অদর্শন জনিত শোকের লাঘব করিলেন।

**नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम्।**
**पूर्व्व एवाभवत् पक्षस्तस्मिन्नाभवदुत्तरः॥ १०**

१० अः। नयविद्भिः नवे राज्ञि सत् असच्च उपदर्शितम्, तस्मिन् पूर्व एव पक्षः उत्तरो न अभवत्॥ वाच्य—नयविदः सत् असच्च उपदर्शितवन्तः, पूर्वेण पक्षेण अभूयत, उ अभूयत।

१०। नयविद्भिः नीतिशास्त्रज्ञैः नवे तस्मिन् राज्ञि विषये तस्मि इत्यर्थः, सत् धर्म्मयुद्धादिकम् असत् कूटयुद्धादिकञ्च उपदर्शितं त राज्ञि पूर्व्वः पक्षः एव अभवत् संक्रान्त इत्यर्थः। उत्तरः पक्षः न अभ न संक्रान्त इत्यर्थः। तत्र सदसतोर्मध्ये सदेवाभिमतं, नासत्, तदुप ज्ञानार्थमेव इत्यर्थः। पक्षः साधनयोग्यार्थः। 'पक्षः पार्श्वगरुत् सहायबलभित्तिषु' इति केशवः॥

১০। নীতিজ্ঞ সচিবগণ সেই নূতন নৃপতিকে, সরল ও কুটিল এই উভয়বি নীতিরই উপদেশ দিতেন, কিন্তু তিনি প্রথম পক্ষই অবলম্বন করিতেন, দ্বিতী অবলম্বন করিতেন না।

**पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः।**
**नवे तस्मिन्महीपाले सर्वं नवमिवाभवत्॥ ११**

११ अः। पञ्चानामपि भूतानां गुणाः पुपुषुः तस्मिन् नवे महीपाले सति सर्वं नवमिव अ वाच्य—गुणैः पुपुषे, सर्वेण नवेन इव अभूयत।

११। पृथिव्यादीनां पञ्चानां भूतानाम् अपि गुणाः गन्धादयः उ अतिशयं पुपुषुः। अतोऽत्प्रेक्ष्यते—तस्मिन् रघौ नाम नवे मही सति, सर्वं वस्तुजातं नवम् इव अभवत्। तदेव भूतजातमिदानीम गुणयोगादपूर्वमिवाभवदिति भावः॥

১১। রঘু রাজ্যে অভিষিক্ত হইলে পৃথিব্যাদি পঞ্চভূতের গুণসমূহ উৎক করিয়াছিল, অতএব নূতন রাজার সময়ে সকল বস্তুই অভিনব বলিয়া বোধ লাগিল।

**यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा।**
**तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥ १२**

१२ अ:। यथा चन्द्रः प्रह्लादनात् अन्वर्थः, यथा तपनः प्रतापात् अन्वर्थः, तथैव स राजा [प्रकृ]तिरञ्जनात् अन्वर्थः अभूत्॥ वाच्य—यथा चन्द्रेण, तपनेन तथैव तेन राज्ञा अन्वर्थेन अभावि।

१२। यथा चन्दयति आह्लादयतीति चन्द्रः इन्दुः। चदिधातोरौणा[दि]को रप्रत्ययः। प्रह्लादनात् आह्लादकरणात् अन्वर्थः अनुगतार्थनामकः [अ]भूत्। यथा च तपतीति तपनः सूर्य्यः। नद्यादित्वात् ल्युप्रत्ययः। [प्र]तापात् सन्तापजननादित्यर्थः। तथैव सः राजा प्रकृतिरञ्जनात्[1] अन्वर्थः [अन्व]र्थकराजशब्दः अभूत्। यद्यपि राजशब्दो राजतेर्दीप्त्यर्थात् कनिन्-[प्र]त्ययान्तो न तु रञ्जेः, तथापि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं [इति]विना॥

১২। আহ্লাদ বিতরণ করায় চন্দ্রের যেমন 'চন্দ্র' নাম সার্থক হইয়াছে; প্রখর [তা]প বিতরণ করায় যেরূপ তপনের 'তপন' নাম সার্থক হইয়াছে, তেমনি প্রজারঞ্জন [হে]তু তাঁহার 'রাজা' এই নাম সার্থক হইল।

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्य्यार्थदर्शिना॥ १३

१३ अ:। तस्य विशाले लोचने कामं कर्णान्तविश्रान्ते, चक्षुष्मत्ता तु सूक्ष्मकार्य्यार्थदर्शिना शास्त्रेण [अ]भूत्)॥ वाच्य—विशालाभ्यां लोचनाभ्यां कर्णान्तविश्रान्ताभ्यां भूयते, चक्षुष्मत्तया अभावि।

१३। विशाले तस्य रघोः लोचने, कामं कर्णान्तयोः विश्रान्ते कर्ण-[प्रा]न्तगते। चक्षुष्मत्ता तु चक्षुःफलं तु इत्यर्थः, सूक्ष्मान् कार्य्यार्थान् कर्त्तव्या-[र्था]न् दर्शयति प्रकाशयतीति सूक्ष्मकार्य्यार्थदर्शिना शास्त्रेण एव। शास्त्रं [दृ]ष्टिर्विवेकिनामिति भावः॥

১৩। তাঁহার আকর্ণবিস্তৃত সুবিশাল লোচনযুগল ছিল বটে, কিন্তু সূক্ষ্মকার্য্যার্থদর্শী [শা]স্ত্রজ্ঞান দ্বারাই তাঁহার প্রকৃত দর্শনেন্দ্রিয়ের কার্য্য সম্পন্ন হইত।

लब्धप्रशमनस्वस्थमथैनं समुपस्थिता।
पार्थिवश्रीर्द्वितीयेव शरत् पङ्कजलक्षणा॥ १४

१४ अ:। अथ लब्धप्रशमनस्वस्थम् एनं पङ्कजलक्षणा शरत् (पङ्कजलक्षणा) द्वितीया पार्थिव-[श्र]ीरिव समुपस्थिता॥ वाच्य—पङ्कजलक्षणया शरदा...स्वस्थः एष द्वितीयया पार्थिवश्रिया इव [स]मुपस्थितः।

१४। अथ लब्धस्य राजस्य प्रशमनेन परिपन्थिनाम् अनुरञ्जनप्रती-[का]राभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तम् एनं रघुं पङ्कजलक्षणा [प]द्मचिह्ना। श्रियोऽपि विशेषणमेतत्। शरत्, द्वितीया पार्थिवश्रीः राज-[ल]क्ष्मीः इव, समुपस्थिता प्राप्ता। 'रक्षा पौरजनस्य देशनगरग्रामेषु गुप्ति-

स्तुया योधानामपि संग्रहोऽपि तुलया मानव्यवस्थापनम् । साम्यं दानवृत्तिकरणं त्यागः समानेऽर्च्चनं कार्य्याख्ये व महीभुजां प्रथमनाराजीव नवे' ॥

১৪। সর্ব্বত্র শান্তি বিরাজমান থাকায় তিনি সুস্থচিত্তে অবস্থান করি এমন সময় শরৎকাল, পদ্মশোভায় সজ্জিত হইয়া দ্বিতীয় রাজলক্ষ্মীর ন্যায় তাঁহার জন্য উপস্থিত হইল।

**निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।**
**प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५**

१५ अः । निर्वृष्टलघुभिर्मेघैः मुक्तवर्त्मा सुदुःसहः तस्य भानोश्च प्रतापः युगपत् दिशः व्यानशे। वाच्य—मुक्तवर्त्मना सुदुःसहेन प्रतापेन व्यानशिरे ।

१५। निःशेषं वृष्टाः निर्वृष्टाः, कर्त्तरि क्तः । अतएव लघवः तैः मुक्तवर्त्मा त्यक्तमार्गः अतएव सुदुःसहः तस्य रघोः भानोश्च प्रतापः पौ आतपश्च। 'प्रतापौ पौरुषातपौ' इति यादवः। युगपत् दिशः व्यानशे व्या

১৫। তৎকালে নিঃশেষিতবৃষ্টি সুতরাং একান্ত লঘু জলদজাল কর্ত্তৃক পথ হওয়াতে, সূর্য্যের এবং রঘুর অপ্রতিহত প্রখর সুদুঃসহ প্রতাপ দিঙ্মণ্ডলে পরি হইল।

**वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।**
**प्रजार्थसाधने तौ हि पर्य्यायोद्यतकार्मुकौ ॥ १६**

१६ अः । इन्द्रः वार्षिकं धनुः संजहार, रघुः जैत्रं धनुः दधौ, हि (यस्मात्) तौ प्रजार्थ पर्य्यायोद्यतकार्मुकौ (बभूवतुः) ॥ वाच्य—इन्द्रेण संजह्रे रघुणा दधे, ताभ्यां...कार्मुकाभ्यां (बभू

१६। इन्द्रः वर्षासु भवं वार्षिकं वर्षानिमित्तमित्यर्थः । 'वर्षाभ्य इति ठक् प्रत्ययः । धनुः संजहार । रघुः, जैत्रं जयशीलम् । जेतृश तृन्नन्तात् 'प्रज्ञादिभ्यश्च' इति स्वार्थे अण्प्रत्ययः । धनुः दधौ, हि य तौ इन्द्ररघू प्रजानाम् अर्थस्य प्रयोजनस्य वृष्टिविजयलक्षणस्य साधने पर्य्यायेण उद्यते कार्मुके याभ्यां तौ पर्य्यायोद्यतकार्मुकौ । पर्य्याय विश्रमौ इति पाठान्तरे पर्य्यायेण उद्यमः विश्रमश्च ययोः तौ पर्य्याय विश्रमौ । द्वयोः पर्य्यायकरणादक्लेश इति भावः ॥

১৬। ইন্দ্রদেব, বর্ষাকালীন নিজ ধনু অপসারিত করিলেন, এদিকে রঘুও ধনু ধারণ করিলেন; কেননা, তাঁহারা উভয়েই প্রজাগণের হিতসাধনের পর্য্যায়ক্রমে নিজ নিজ ধনু ধারণ করিয়া থাকেন।

पुण्डरीकातपत्रस्तं विकसत्काशचामरः।
ऋतुर्विड़म्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७

१७ अः। पुण्डरीकातपत्रः विकसत्काशचामरः ऋतुः (पुण्डरीकातपत्रं विकसत्काशचामरं) विड़म्बयामास, तच्छ्रियं पुनः न प्राप॥ वाच्य...पत्रेण...चामरेण ऋतुना स विड़म्बयामासे, च्छ्रीः न प्रापे।

१७। पुण्डरीकं सिताम्भोजम् एव आतपत्रं यस्य सः तथोक्तः। विकसन्ति काशानि काशाख्यतृणकुसुमानि एव चामराणि यस्य सः। तथोक्तः ऋतुः शरदृतुः. पुण्डरीकनिभातपत्रं काशनिभचामरं तं रघुं विड़म्बयामास अनुचकार, तस्य रघोः श्रियं पुनः शोभां तु न प्राप। 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते' इति शाश्वतः॥

১৭। শ্বেতপদ্মরূপ ছত্র এবং প্রফুল্ল কাশপুষ্পরূপ চামর দ্বারা সুশোভিত শরৎ ঋতু, শ্বেতপদ্মের ন্যায় রাজচ্ছত্রে এবং প্রফুল্ল কাশপুষ্পসদৃশ চামরে সুশোভিত রঘুর অনুকরণ করিল বটে, কিন্তু তাঁহার রাজলক্ষ্মী লাভ করিতে পারিল না।

प्रसादसुमुखे तस्मिन् चन्द्रे च विशदप्रभे।
तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः॥ १८

१८ अः। प्रसादसुमुखे तस्मिन् (रघौ) विशदप्रभे चन्द्रे च द्वयोः तदा चक्षुष्मतां प्रीतिः समरसा आसीत्॥ वाच्य—प्रीत्या समरसया अभूयत।

१८। प्रसादेन सुमुखे तस्मिन् रघौ, विशदप्रभे निर्म्मलकान्तौ चन्द्रे च, द्वयोर्विषये तदा चक्षुष्मतां प्रीतिः अनुरागः समरसा समस्वादा तुल्यभोगा इति यावत्। 'रसो गन्धे रसः स्वादे' इति विश्वः। आसीत्॥

১৮। প্রশস্তনয়নবিশিষ্ট ব্যক্তিমাত্রেই তৎকালে রঘুর সুপ্রসন্ন মুখকান্তি ও শারদীয় শশাঙ্কের সুনির্ম্মল শোভা দর্শন করিয়া তুল্যরূপ আনন্দরস উপভোগ করিয়াছিল।

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु।
विभूतयस्तदीयानां पर्य्यस्ता यशसामिव॥ १९

१९ अः। हंसश्रेणीषु तारासु कुमुद्वत्सु वारिषु च तदीयानां यशसां विभूतयः पर्य्यस्ता इव॥ वाच्य—विभूतिभिः पर्य्यास्ताभिः इव (भूयते)।

१९। हंसानां श्रेणीषु पङ्क्तिषु तारासु नक्षत्रेषु, कुमुदानि सन्ति येषु इति कुमुद्वन्ति। 'कुमुद्वान् कुमुदप्रायः' इत्यमरः। 'कुमुदनड़वेतसेभ्यो ड्मतुप्' इति मतुप्। तेषु कुमुदप्रायेषु इत्यर्थः, वारिषु च तदीयानां रघुसम्बन्धिनां यशसां विभूतयः सम्पदः पर्य्यस्ता इव प्रसारिताः किम्? इति उत्प्रेक्षा। अन्यथा कथमेषां धवलिमेति भावः॥

১৯। তাঁহার যশঃপ্রভা হংসমালায়, নক্ষত্রপুঞ্জে ও কুমুদশোভিত সলিলে বিস্তৃত হইয়া পড়িল।

इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ २०

२० अ: । इक्षुच्छायनिषादिन्यः शालिगोप्यः गोप्तुस्तस्य गुणोदयम् आकुमारकथोद्घातं यशः जगुः। वाच्य—इक्षुच्छायानिषादिनीभिः शालिगोपीभिः जगे ।

२०। इक्षूणां छाया इक्षुच्छायम् । 'छाया बाहुल्ये' इति नपुंसकत्वम् । तत्र निषण्णाः इक्षुच्छायनिषादिन्यः । स्त्रीलिङ्गपाठे इक्षोः इति विग्रहः, अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गात् । शालीन् गोपायन्ति रक्षन्तीति शालिगोप्यः शस्यपालिकाः स्त्रियः । कर्म्मण्यण् 'टिड्ढाणञ्' इत्यादिना ङीप् । गोप्तुः रक्षकस्य तस्य रघोः गुणेभ्यः उदयः यस्य तत् गुणोदयम् गुणोत्पन्नम् आकुमारं कुमारात् आरभ्य कथोद्घातः कथारम्भः यस्य कुमारैरपि स्तूयमानमित्यर्थः यशः जगुः गायन्ति स्म । अथवा कुमारस्य सतः रघोः याः कथाः इन्द्रविजयादयः तत आरभ्य आकुमारकथम् तत्र अपि अभिविधौ अव्ययीभावः । आकुमारकथम् उद्घातः यस्मिन् कर्म्मणि, गानक्रियाविशेषणमेतत् । 'स्यादभ्यादानमुद्घात आरम्भः' इत्यमरः । आकुमारकथोद्भूतमिति पाठे कुमारस्य सतः तस्य कथाभिः चरितैः उद्भूतं यत् यशः तत् यशः आरभ्य यशो जगुरिति व्याख्येयम् ॥

२०। শালিধান্যরক্ষণে নিযুক্ত কৃষককামিনীরা ইক্ষুবৃক্ষ সকলের ছায়ায় বসিয়া সেই প্রজাপালক রঘুর বাল্যকাল হইতে কৃত ইন্দ্রবিজয়াদি কার্য্য সমূহের গান করিতে লাগিল।

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१

२१ अ: । महौजसः कुम्भयोनेः उदयात् अम्भः प्रससाद, महौजसो रघोः उदयात् अभिभवाशङ्कि द्विषतां मनः चुक्षुभे ॥ वाच्य—अम्भसा प्रसेदे, अभिभवाशङ्किना मनसा चुक्षुभे।

२१। महौजसः कुम्भयोनेः अगस्त्यस्य । 'अगस्त्यः कुम्भसम्भवः' इत्यमरः । उदयात् अम्भः प्रससाद प्रसन्नं बभूव, महौजसः रघोः उदयात् अभिभवाशङ्कि द्विषतां मनः चुक्षुभे कालुष्यं प्राप । 'अगस्त्योदये जलानि प्रसीदन्ति' इत्यागमः ॥

पौराणिकी वार्त्ता—कदाचिदुर्वशीं पश्यतोर्भगवन्मित्रावरुणयोर्निषिक्तं तेजः कुम्भे न्यपतत्, अगस्त्यः समुत्पन्न इत्यस्य कुम्भयोनित्वम् । इति

২১। মহাপ্রভাব অগস্ত্য নক্ষত্রের উদয় হওয়ায় জল সকল নির্ম্মল হইল ; এদিকে প্রবলপ্রতাপশালী রঘুর নিকট পরাভবাশঙ্কায় তদীয় শত্রুগণের মন কলুষিত হইল।

**मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ।**
**लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२**

२२ अ: । मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः महोक्षाः तस्य लीलाखेलं विक्रमम् अनुप्रापुः ॥ वाच्य—मदोदग्रैः ककुद्मद्भिः कूलमुद्रुजैः महोक्षैः लीलाखेलः विक्रमः अनुप्रापे ।

२२ । मदोदग्राः मदोद्धताः ककुदेषामस्तीति ककुद्मन्तः महाककुद इत्यर्थः । यवादित्वात् मकारस्य वत्वाभावः । सरितां कूलानि उद्रुजन्तीति कूलमुद्रुजाः । 'उदि कूले रुजिवहोः' इति खश्प्रत्ययः 'अरुर्द्विष—' इत्यादिना मुमागमः । महान्तः उक्षाणः महोक्षाः । 'अचतुर—'इत्यादिना निपातनात् अकारान्तः ; लीलाखेलं विलाससुभगं तस्य रघोः उत्साहवतः वपुष्मतः परमञ्जकस्य विक्रमं शौर्य्यम् अनुप्रापुः अनुचक्रुः ॥

২২। মদোদ্ধত প্রশস্ত-ককুদ্‌শালী প্রকাণ্ড বৃষসকল, নদীতট উৎপাটিত করিয়া রঘুর চিত্তাকর্ষক বিক্রমলীলার অনুকরণ করিতে লাগিল।

**प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।**
**असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३**

२३ अ: । मदगन्धिभिः सप्तपर्णानां प्रसवैः आहतास्तन्नागाः असूययेव सप्तधैव प्रसुस्रुवुः ॥ वाच्य—आहतैः तन्नागैः प्रसुस्रुवे ।

२३ । मदस्येव गन्धो येषां तैः मदगन्धिभिः । 'उपमानाच्च' इतीकारः समासान्तः । सप्तपर्णानां वृक्षविशेषाणाम् । 'सप्तपर्णो विशालत्वक् शारदो विषमच्छदः' इत्यमरः । प्रसवैः पुष्पैः आहताः तस्य रघोः नागाः गजाः । 'गजेऽपि नागमातङ्गौ' इत्यमरः । असूयया इव आहतिनिमित्तया स्पर्द्धया इव सप्तधा एव प्रसुस्रुवुः मदं ववृषुः, प्रतिगजगन्धाभिमानादिति भावः । 'करात् कटाभ्यां मेढ्राच्च नेत्राभ्याच्च मदस्रुतिः' इति पालकाप्ये । करात् नासारन्ध्राभ्यामित्यर्थः ॥

২৩। মদের ন্যায় উগ্র গন্ধবিশিষ্ট সপ্তপর্ণপুষ্পের ( ছাতিম ফুলের ) গন্ধে (অন্য কোনও মদস্রাবী বন্য গজ হইতে সেই গন্ধ বাহির হইতেছে ভাবিয়া ) রঘুর হস্তী সকল মাতিয়া উঠিয়া, যেন অসূয়াপ্রযুক্তই শরীরের সাতটী ( দুই নাসারন্ধ্র, দুই গণ্ড, দুই নেত্র এবং মেঢ্র ) স্থান হইতে মদধারা ক্ষরণ করিতে লাগিল।

**सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।**
**यात्रायै नोदयामास तं शक्तेः प्रथमं शरत् ॥ २४**

२४ अ:। सरित: गाधा: पथश्च आश्यानकर्द्दमान् कुर्व्वती शरत् शक्तेः प्रथमं तं यात्रायै नोदयामास ॥ वाच्य—कुर्व्वत्या शरदा स: नोदयामासे।

२४। सरित: गाधा: सुप्रतरा: कुर्व्वती। पथ: मार्गान् च आश्यानकर्द्दमान् शुष्कपङ्कान् कुर्व्वती। 'संयोगादेरातो धातोर्यण्वत:' इति निष्ठातस्य नत्वम्। शरत् शरदृतु: तं रघुं शक्तेः उत्साहशक्तेः प्रथमं यात्रायै दण्डयात्रायै नोदयामास प्रेरयामास। प्रभावमन्त्रशक्तिसम्पन्नस्य रघोः शरत् स्वयमुत्साहमुत्पादयामास इत्यर्थ: ॥

২৪। শরৎকাল, নদী সকলকে অল্প জল-বিশিষ্ট ও পথ সকলকে কর্দ্দমশূন্য করিয়া উৎসাহশক্তি দ্বারা উত্তেজিত হইবার পূর্ব্বেই রঘুকে যুদ্ধযাত্রায় প্রবৃত্ত করিল।

**तस्मै सम्यक् हुतो वह्निर्वाजिनीराजनाविधौ।**
**प्रदक्षिणार्च्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५**

२५ अ:। वाजिनीराजनाविधौ सम्यक् हुतो वह्नि: प्रदक्षिणार्च्चिर्व्याजेन हस्तेनेव तस्मै जयं ददौ ॥ हुतेन वह्निना जय: ददे।

२५। वाजिनाम् अश्वानां नीराजनाविधौ नीराजनाख्ये शान्तिकर्म्मणि, सम्यक् विधिवत् हुत: होमसमिद्ध: वह्नि: प्रगता दक्षिणं प्रदक्षिणम्। तिष्ठद्गुप्रभृतित्वादव्ययीभाव:। प्रदक्षिणं या अर्च्चि: ज्वाला तस्या व्याजेन छलेन हस्तेन इव तस्मै जयं ददौ। उक्तमाहवयात्रायाम् 'इद्ध: प्रदक्षिणगतो हुतभुङ्नृपस्य धात्रीं समुद्ररशनां वशगां करोति' इति। वाजिग्रहणं गजादीनामपि उपलक्षणं तेषामपि नीराजनाविधानात्।

২৫। তিনি অশ্বগণের নীরাজনারূপ মাঙ্গলিক কার্য্যে বিধিপূর্ব্বক অগ্নিতে আহুতি প্রদান করিলে হোমাগ্নি দক্ষিণাভিমুখী শিখাবিস্তারপূর্ব্বক ঐ আহুতি গ্রহণ করায় বোধ হইল যেন অগ্নিদেব শিখারূপ হস্তদ্বারাই তাঁহাকে জয় প্রদান করিলেন।

**स गुप्तमूलप्रत्यन्त: शुद्धपार्ष्णिरयान्वित:।**
**षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २६**

२६ अ:। गुप्तमूलप्रत्यन्त: शुद्धपार्ष्णि: अयान्वित: स: षड्विधं बलम् आदाय दिग्जिगीषया प्रतस्थे ॥ वाच्य—गुप्तमूलप्रत्यन्तेन शुद्धपार्ष्णिना अयान्वितेन तेन प्रतस्थे।

२६। गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्त: प्रान्तदुर्गञ्च येन स: गुप्तमूलप्रत्यन्त:। शुद्धपार्ष्णि: उद्धृतपृष्ठशत्रु:, सेनया रक्षितपृष्ठदेशो वा। अयान्वित: शुभदैवान्वित:। 'अय: शुभावहो विधि:' इत्यमर:। स: षड्विधं मौलभृत्यादिरूपं बलं सैन्यम्। 'मौलं भृत्य: सुहृच्छ्रेणी द्विषदाटविकं बलम्' इति कोष:। आदाय, दिशां जिगीषया जेतुमिच्छया प्रतस्थे चचाल ॥

২৬। রাজা রঘু, নিবাসদুর্গ ও প্রান্তদুর্গ সকল রক্ষা করিয়া পৃষ্ঠ শত্রু হইতে আপনাকে নিরাপদ্ করতঃ অনুকূল দৈবযুক্ত হইয়া ষড়্বিধ সৈন্য সমভিব্যাহারে দিগ্বিজয় বাসনায় প্রস্থান করিলেন।

**अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः ।**
**पृषतैर्मन्दरोद्धूतैः क्षीरोर्म्मय इवाच्युतम् ॥ २७**

२७ अः । वयोवृद्धाः पौरयोषितः लाजैः तं क्षीरोर्म्मयः मन्दरोद्धूतैः पृषतैः अच्युतमिव अवाकिरन् ॥ वाच्य—वयोवृद्धाभिः पौरयोषिद्भिः क्षीरोर्म्मिभिः अच्युत इव सः अवाकीर्यत ।

२७। वयोवृद्धाः पौरयोषितः तं रघुं प्रयान्तम्, लाजैः आचारलाजैः, मन्दरोद्धूतैः पृषतैः विन्दुभिः क्षीरोर्म्मयः क्षीरसमुद्रोर्म्मयः अच्युतं विष्णुम् इव, अवाकिरन् पर्य्यक्षिपन् ॥

২৭। প্রবীণা পৌরকামিনীরা, (যাত্রাকালে) তাঁহার উপর লাজ (খৈ) বর্ষণ করিতে লাগিলেন, তখন বোধ হইল—যেন ক্ষীরসাগরের তরঙ্গমালা, মন্দরগিরির ঘর্ষণদ্বারা উৎক্ষিপ্ত জলকণাসকল বিষ্ণুর উপর বর্ষণ করিতেছে।

**स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।**
**अहिताननिलोद्धूतैस्तर्ज्जयन्निव केतुभिः ॥ २८**

२८। प्राचीनबर्हिषा तुल्यः सः अनिलोद्धूतैः केतुभिः अहितान् तर्जयन्निव प्रथमं प्राचीं ययौ ॥ वाच्य—तुल्येन तेन तर्ज्जयता प्राची ययै ।

२८। प्राचीनबर्हिर्नाम कश्चिन्महाराज इति केचित् । प्राचीनबर्हिः इन्द्रः 'पर्ज्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिस्तथा' इति इन्द्रपर्य्यायेषु हलायुधाभिधानात् । तेन तुल्यः सः रघुः अनिलेन अनुकूलवातेन उद्धूतैः केतुभिः ध्वजैः अहितान् रिपून् तर्जयन् इव भर्त्सयन् इव । 'तर्जिभर्त्सयोरनुदात्तेत्त्वेऽपि चक्षिङो ङित्करणेनानुदात्तेत्त्वनिमित्तस्यात्मनेपदस्य अनित्यत्वज्ञापनात् परस्मैपद'मिति वामनः । प्रथमं प्राचीं दिशं ययौ ॥

২৮। শক্রতুল্য বিক্রমশালী রঘু প্রথমেই পূর্ব্বদিকে যাত্রা করিলেন; অনুকূল বায়ুভরে তাঁহার রণ-পতাকা সকল কম্পিত হওয়ায় বোধ হইল—যেন তিনি সেই পতাকাদ্বারা শত্রুগণকে তর্জ্জন করিতে করিতে চলিয়াছেন।

**रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।**
**भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥ २९**

२९ अः । (किं कुर्वन् ?) स्यन्दनोद्धूतैः रजोभिः घनसन्निभैः गजैश्च (यथाक्रमम्) व्योम भूतलमिव भूतलञ्च व्योमेव कुर्वन् ॥ वाच्य—कुर्वता ।

२९। किं कुर्व्वन्? स्यन्दनोद्धूतैः रजोभिः घनसन्निभैः वर्णतः परिमाणतश्च मेघतुल्यैः गजैश्च यथाक्रमं व्योम आकाशं भुवः तलं भूतलञ्च व्योम इव कुर्वन् ययौ इति पूर्व्वेण सम्बन्धः॥

২৯। তিনি রথসঞ্চালনে উত্থিত ধূলিরাশি দ্বারা আকাশমণ্ডল সমাচ্ছন্ন যেন আকাশকে ভূতলে এবং মেঘমালার ন্যায় গজবৃন্দে ভূতল সমাবৃত যেন ভূতলকে আকাশে পরিণত করিলেন।

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम्।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः॥ ३०

३० अः। अग्रे प्रतापः, ततः शब्दः, तदनन्तरं परागः, पश्चात् रथादि इति सा चमूः ययौ॥ वाच्य—प्रतापेन, शब्देन, परागेण रथादिना, तया चम्वा चतुःस्कन्धया इव ययौ।

३०। अग्रे प्रतापः तेजोविशेषः। 'स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम्' इत्यमरः। ततः शब्दः सेनाकलकलः, तदनन्तरं परागः धूलिः 'परागः पुष्परजसि धूलिस्नानीययोरपि' इति विश्वः। पश्चात् रथाश्वादिकं चतुरङ्गबलम्। रथानीकमिति पाठे इतिशब्दाध्याहारो योज्यमिति इत्थं चतुःस्कन्धा इव चतुर्व्यूहा इव। 'स्कन्धः प्रकाण्डे काये विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च' इति हैमः। सा चमूः ययौ।

৩০। সর্ব্বাগ্রে প্রতাপ, তৎপশ্চাৎ সৈন্যকোলাহল, তদনন্তর ধূলিরাশি তৎপশ্চাৎ রথাদি চতুরঙ্গ বল; এইরূপে তাঁহার সেই সেনা যেন চারিভাগে বিভক্ত হইয়াই চলিল।

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः॥ ३१

३१ अः। सः शक्तिमत्त्वात् मरुपृष्ठानि उदम्भांसि, नाव्याः नदीः सुप्रतराः, विपिनानि प्रकाशानि चकार॥ वाच्य—तेन नद्यः चक्रिरे।

३१। सः रघुः शक्तिमत्त्वात् समर्थत्वात् मरुपृष्ठानि निर्जलस्थानानि 'समानौ मरुधन्वानौ' इत्यमरः। उदम्भांसि उद्गतजलानि चकार। नाव्याः नौभिस्तार्य्याः नदीः। 'नाव्यं त्रिलिङ्गं नौतार्य्ये' इत्यमरः। 'नौवयो-धर्म्मविषमूल' इत्यादिना यत्प्रत्ययः। सुप्रतराः सुखेन तार्य्याश्चकार। विपिनानि अरण्यानि। 'अटव्यरण्यं विपिनम्' इत्यमरः। प्रकाशानि निर्वृक्षाणि चकार। शक्त्युत्कर्षात् तस्यागम्यं किमपि नासीदिति भावः।

৩১। তিনি স্বীয় শক্তিপ্রভাবে, মরুভূমি হইতে জল উত্থিত করিলেন

নৌকা ভিন্ন যে সকল নদী পার হওয়া যাইত না, সে সকল সুখে তরণযোগ্য এবং
রণ্য সকল বৃক্ষশূন্য করিলেন।

**स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ।**
**बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३२**

३२ अ:। महतीं सेनां पूर्वसागरगामिनीं कर्षन् सः हरजटाभ्रष्टां गङ्गां (पूर्वसागरगामिनीं
न्) भगीरथ इव बभौ ॥ वाच्य—कर्षता तेन भगीरथेन इव बभे ।

३२। महतीं सेनां पूर्वसागरगामिनीं कर्षन् सः रघुः, हरस्य जटाभ्यः
ष्टां गङ्गां कर्षन्। सापि पूर्वसागरगामिनी। भगीरथः इव बभौ।
गीरथो नाम कश्चित् कपिलदग्धानां सागराणां नप्ता तत्पावनाय हर-
रीटात् गङ्गां प्रवर्त्तयिता राजा, यत्सम्बन्धाद् गङ्गा च भागीरथीति
यते ॥

৩২। তিনি সেই বিশাল সৈন্যপ্রবাহ পূর্ব্বসাগরের দিকে পরিচালিত করায়
ধ হইতে লাগিল যেন, হর-জটা হইতে পতিত গঙ্গাকে লইয়া ভগীরথ পূর্ব্ব
গরের অভিমুখে চলিয়াছেন।

**त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।**
**तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३३**

३३ अ:। फलं त्याजितैः उत्खातैः बहुधा भग्नैश्च नृपैः पादपैः दन्तिन इव तस्य मार्गः उल्बण
सीत् ॥ वाच्य—मार्गेण उल्बणेन अभूयत ।

३३। 'फलं फले धने वीजे निष्पत्तौ भोगलाभयोः' इति केशवः।
लं लाभं वृक्षपक्षे प्रसवञ्च, त्याजितैः। त्यजेर्ण्यन्तात् द्विकर्म्मकात्
प्रधाने कर्म्मणि क्तः। उत्खातैः स्वपदात् त्याजितैः, अन्यत्र उत्पाटितैः।
हुधा भग्नैः रणे जितैः अन्यत्र छिन्नैः। नृपैः, पादपैः दन्तिनः गजस्य
, तस्य रघोः, मार्गः उल्बणः प्रकाशः आसीत्। 'प्रकाशं प्रकटं स्पष्टम्
ल्बणं विशदं स्फुटम्' इति यादवः ॥

৩৩। যেমন হস্তী কোন বৃক্ষকে ফলহীন, কোনটীকে উন্মূলিত এবং কোনও
কে ছিন্ন ভিন্ন করায় তাহার গমনপথ নিষ্কণ্টক হয়, তেমনি রঘু কোনও রাজাকে
হীন, কাহাকেও রাজ্যচ্যুত এবং কাহাকেও ছিন্ন ভিন্ন করায়, তাঁহার গমন পথ
কণ্টক হইল।

**पौरस्त्यानेवमाक्रामन् तांस्तान् जनपदान् जयी ।**
**प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४**

३४ अ:। जयी (स:) पौरस्त्यान् तांस्तान् जनपदान् एवम् आक्रामन् तालीवनश्यामं उपकण्ठं प्राप॥ वाच्य—जयिना आक्रामता प्रापे।

३४। जयी जयनशील:। 'जिदृक्षिविश्रि' इत्यादिना इनिप्र स: रघु: एवं पुरो भवान् पौरस्त्यान् प्राच्यान्। 'दक्षिणापश्चात्पुर इति त्यक्प्रत्यय:। तान् तान् सर्वानित्यर्थ:। वीप्सायां द्विरुक्ति:। पदान् देशान् आक्रामन् तालीवनै: श्यामं महोदधे: उप अन्तिकं प्राप॥

৩৪। রণজয়ী রঘু, এইরূপে পূর্ব্বদিকের সমস্ত রাজাকে পরাজিত মহাসমুদ্রের তালবন-শ্যামল উপকূলে আসিয়া উপস্থিত হইলেন।

**अनम्राणां समुद्धर्त्तुस्तस्मात् सिन्धुरयादिव।**
**आत्मा संरक्षित: सुह्मैर्वृत्तिमाश्रित्य वैतसीम्॥**

३५ अ.। अनम्राणां समुद्धर्त्तु: तस्मात् सिन्धुरयादिव सुह्मै: वैतसीं वृत्तिम् आश्रित्य संरक्षित:॥ वाच्य—सुह्मा आत्मानं संरक्षितवन्त:।

३५। अनम्राणाम्। कर्म्मणि षष्ठी। समुद्धर्त्तु: उन्मूलयितु: रघो: सकाशात्। 'भीत्रार्थानां भयहेतु:' इत्यपादानत्वात् पञ्चमी। रयात् नदीवेगात् इव सुह्मै: सुह्मदेशीयै:। सुह्मादय: शब्दा: जनपद क्षत्रियमाचक्षते। वैतसीं वेतससम्बन्धिनीं वृत्तिं प्रणतिमित्यर्थ:। आ आत्मा संरक्षित:। अत्र कौटिल्य:—'बलीयसाभियुक्तो दुर्बल: स प्रणतो वेतसधर्म्ममातिष्ठेत्' इति॥

৩৫। যেমন বেতসলতা সকল অবনত হইয়া নদীর বেগ হইতে আত্মরক্ষা সেইরূপ সুহ্মদেশীয় রাজারা অবনত হইয়া উদ্ধত রাজগণের উচ্ছেদকারী হস্ত হইতে আত্মরক্ষা করিল।

**वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान्।**
**निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु स:॥**

३६ अ:। नेता स: नौसाधनोद्यतान् वङ्गान् तरसा उत्खाय गङ्गास्रोतोऽन्तरेषु निचखान॥ वाच्य—नेत्रा तेन जयस्तम्भा: निचख्निरे।

३६। नेता नायक: स: रघु:, नौभि: साधनै: उद्यतान् वङ्गान् राज्ञ:, तरसा बलेन। 'तरसी बलरंहसी' इति यादव:। उन्मूल्य गङ्गाया: स्रोतसां प्रवाहाणाम् अन्तरेषु द्वीपेषु जयस्तम्भान् खान स्थापितवानित्यर्थ:॥

৩৬। বঙ্গীয় রাজগণ রণতরী সজ্জিত করিয়া যুদ্ধে প্রবৃত্ত হইলে, সেনানায়ক রঘু ... বলে তাহাদিগকে উন্মূলিত করিয়া গঙ্গাপ্রবাহমধ্যবর্ত্তী দ্বীপ সকলে জয়স্তম্ভ-সমূহ স্থাপিত করিলেন।

**आपादपद्मप्रणताः कलमा इव ते रघुम्।**
**फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः॥ ३७**

३७ अः। उत्खातप्रतिरोपिताः आपादपद्मप्रणतास्ते कलमा इव रघुं फलैः संवर्द्धयामासुः॥ ...—प्रतिरोपितैः...प्रणतैः तैः कलमैरिव रघुः संवर्द्धयामासे।

३७। आपादपद्मम् अङ्घ्रिपद्मपर्य्यन्तं प्रणताः अत एव उत्खाताः समुद्धृता अपि प्रतिरोपिताः पश्चात् स्थापिताः ते वङ्गाः, कलमा इव शालिविशेषा इव। 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' इत्य-...। तेऽपि आपादपद्मं पादपद्ममूलपर्य्यन्तं प्रणताः। 'पादो ब्रध्न-...र्यांशशैलप्रत्यन्तपर्वताः' इति विश्वः। उत्खातप्रतिरोपिताश्च। रघुं, फलैः धनैः, अन्यत्र शस्यैः, संवर्द्धयामासुः। 'फलं फले धने बीजे निष्पत्तौ ...गलाभयोः। शस्ये' इति केशवः॥

৩৭। ধান্যের চারাগুলিকে উঠাইয়া পুনরায় রোপণ করিলে, সেগুলি যেমন ...ভরে মূলদেশ পর্য্যন্ত নত হইয়া শস্যদান করে, তেমনি বঙ্গীয় রাজারা রঘু ...র্ত্তৃক প্রথমে উন্মূলিত এবং পশ্চাৎ স্ব স্ব পদে স্থাপিত হওয়ায়, রঘুর পাদপদ্মে নত ...ইয়া প্রচুর ধনদানে তাঁহার সংবর্দ্ধনা করিল।

**स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः।**
**उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ॥ ३८**

३८ अः। सः बद्धद्विरदसेतुभिः सैन्यैः कपिशां तीर्त्वा उत्कलादर्शितपथः कलिङ्गाभिमुखः सन् ...॥ वाच्य—तेन...दर्शितपथेन कलिङ्गाभिमुखेन ययै।

३८। सः रघुः, बद्धा द्विरदा एव सेतवो यैः तैः सैन्यैः, कपिशां नाम नदीम् 'करभाम्' इति केचित् पठन्ति। तीर्त्वा, उत्कलैः राजभिः आदर्शित-पथः सन्दर्शितमार्गः सन् कलिङ्गाभिमुखः ययौ॥

৩৮। সসৈন্য রঘু, সেতুর আকারে স্থাপিত নিজ হস্তিশ্রেণীর উপর দিয়া কপিশা নদী পার হইয়া উৎকলবাসীদিগের দর্শিতপথে কলিঙ্গদেশাভিমুখে চলিলেন।

**स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत्।**
**अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः॥ ३९**

३९ अः। सः महेन्द्रस्य मूर्ध्नि तीक्ष्णं प्रतापं यन्ता गम्भीरवेदिनो द्विरदस्य मूर्ध्नि तीक्ष्णमङ्कुशमिव न्यवेशयत्॥ वाच्य—तेन तीक्ष्णः प्रतापः यन्त्रा अङ्कुश इव न्यवेश्यत।

३९। सः रघुः, महेन्द्रस्य कुलपर्वतविशेषस्य। 'महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥' इति विष्णुपुराणात्। मूर्ध्नि तीक्ष्णं दुःसहं प्रतापं यन्ता सारथिः गम्भीरवेदिनः द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितम् अङ्कुशम् इव, न्यवेशयत् निक्षिप्तवान्। 'त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि। आत्मानं यो न जानाति तस्य गम्भीरवेदिता।' इति राजपुत्रीये। 'चिरकालेन यो वेत्ति शिक्षां परिचितामपि। गम्भीरवेदी विज्ञेयः स गजवेदिभिः॥' इति मृगचर्म्मीये॥

३९। মাহুত যেমন গম্ভীরভেদী হস্তীর মস্তকে অঙ্কুশ (লোহার ডাঙ্গশ) প্র... করে, সেইরূপ তিনিও মহেন্দ্র পর্ব্বতের মস্তকে নিজ সুতীক্ষ্ণ প্রতাপ নি... করিলেন।

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः॥ ४०

४० अः। गजसाधनः सन् कालिङ्गः अस्त्रैः तं पक्षच्छेदोद्यतं शक्रं शिलावर्षी पर्वत इव प्रतिजग्राह॥ वाच्य—गजसाधनेन कालिङ्गेन सः पक्षच्छेदोद्यतः शक्रः शिलावर्षिणा पर्वतेन इव प्रतिजगृहे।

४०। गजसाधनः सन् कालिङ्गः कलिङ्गानां राजा। 'द्व्यञ्मगधकलिङ्ग' इत्यादिना अण्प्रत्ययः। अस्त्रैः आयुधैः तं रघुं, पक्षच्छेदे उद्यतम् उद्युक्तं शक्रम् शिलावर्षी पर्वत इव प्रतिजग्राह प्रत्यभियुक्तवान्॥

४०। কলিঙ্গরাজ গজারোহী সৈন্য লইয়া অস্ত্রবর্ষণপূর্ব্বক তদীয় আক্রমণ প্রতিরোধ করিলেন, তখন বোধ হইল যেন পর্ব্বত প্রস্তরবর্ষণপূর্ব্বক, পক্ষচ্ছেদে সমুদ্যত ইন্দ্রের প্রতিরোধ করিল।

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम्।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम्॥ ४१

४१ अः। काकुत्स्थः तत्र द्विषां नाराचदुर्दिनं विषह्य सन्मङ्गलस्नात इव जयश्रियं प्रतिपेदे॥ वाच्य—काकुत्स्थेन सन्मङ्गलस्नातेन जयश्रीः प्रतिपेदे।

४१। काकुत्स्थः रघुः, तत्र महेन्द्राद्रौ द्विषां नाराचदुर्दिनं नाराचानां बाणविशेषाणां दुर्दिनं, लक्षणया वर्षमुच्यते, विषह्य सहित्वा सत् यथा तथा मङ्गलस्नात इव विजयमङ्गलार्थम् अभिषिक्त इव जयश्रियं प्रतिपेदे। 'यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमरोचकम्' इति यादवः॥

৪১। কাকুৎস্থ রঘু, মহেন্দ্রপর্ব্বতবাসী শত্রুদিগের অস্ত্রবর্ষণ সহ্য করিয়া; যেন শাস্ত্র পবিত্র জলধারায় মঙ্গলস্নাত হইয়াই জয়শ্রীলাভ করিয়াছেন।

**ताम्बूलीनां दलैस्तत्र रचितापानभूमयः।**

**नारिकेलासवं योधाः शात्रवञ्च पपुर्यशः॥ ४२**

४२ अः। तत्र योधाः रचितापानभूमयः ताम्बूलीनां दलैः नारिकेलासवं शात्रवं यशश्च ॥ वाच्य—योधैः रचितापानभूमिभिः नारिकेलासवः पपे।

४२। तत्र महेन्द्राद्रौ युध्यन्ते इति योधाः। पचाद्यच्। रचिताः ल्पिताः आपानभूमयः पानयोग्यप्रदेशाः यैः ते तथोक्ताः सन्तः, नारिकेला-वं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः पपुः तत्र विजह्रुरित्यर्थः। त्रवं यशश्च पपुः जह्रुरित्यर्थः॥

शात्रवं वा यशः पपुः इत्यपि पाठः। अत्र पचे वा इति पदम् उपमाद्योतकं शात्रवं यश इव र्थः। आसवपानेन यथेच्छाचरणं तेन च प्रतिपदं जयश्रियम् इत्यायातम्। यशःपानवर्णनात् लिङ्गस्य कीर्त्तिः चिराय निलीनेति सुव्यक्तं प्रतीयते।

৪২। তাঁহার যোদ্ধারা সেস্থানে পানভূমি রচনা করিয়া তাম্বূলপত্রপুটে নারিকেল চ্ছলে শত্রুর শুভ্র যশ পান করিল।

**गृहीतप्रतिमुक्तस्य स धर्म्मविजयी नृपः।**

**श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम्॥ ४३**

४३ अः। धर्म्मविजयी स. नृपः गृहीतप्रतिमुक्तस्य महेन्द्रनाथस्य श्रियं जहार मेदिनीन्तु न र॥ वाच्य—धर्म्मविजयिना तेन श्रीः जह्रे, मेदिनीन्तु न।

४३। धर्म्मविजयी धर्म्मार्थं विजयशीलः सः नृपः रघुः, गृहीतश्चासौ तिमुक्तः तस्य महेन्द्रनाथस्य कालिङ्गस्य श्रियं जहार धर्म्मार्थमिति भावः। दिनीं तु न जहार शरणागतवात्सल्यादिति भावः॥

वल्लभ आह—राजा त्रिविधः, धर्म्मविजयी, लोभविजयी असुरविजयी चेति। यः शत्रुं जित्वा र्यां नृपश्रियं नीत्वा तं तत्पदे स्थापयति स धर्म्मविजयी, रघुः तथाविधः। यः शत्रुं विजित्य तदीयां मेदिनीञ्च नीत्वा तं प्राणैः न वियोजयति सः लोभविजयी। यश्च शत्रुं हत्वा तदीयां श्रियं मेदिनीञ्च ति सः असुरविजयीति।

৪৩। ধর্ম্মবিজয়ী সেই রাজা রঘু, মহেন্দ্রনাথকে প্রথমে বন্দী করিয়াছিলেন, াৎ (তাঁহার বশ্যতা স্বীকারে) তাঁহাকে বন্ধনমুক্ত করিলেন। তিনি তাঁহার রাজ- (রাজগৌরব) হরণ করিলেন, কিন্তু তাঁহার অধিকৃত ভূমি হরণ করিলেন না।

**ततो वेलातटेनैव फलवत्पूगमालिना।**

**अगस्त्याचरितामाशामनाशास्यजयो ययौ॥ ४४**

४४ अ: । ततः अनाशास्यजयः (सन्) फलवत्पूगमालिना वेलातटेनैव अगस्त्याचरिताम् यथौ ॥ वाच्य—अनाशास्यजयेन अगस्त्याचरिता आशा यये ।

४४ । ततः प्राचीविजयानन्तरं फलवत्पूगमालिना फलित श्रेणीमता । ब्रीह्यादित्वात् इनिप्रत्ययः । वेलायाः समुद्रकूलस्य उपान्तेनैव अगस्त्येन आचरिताम् आशां दक्षिणां दिशम् अनाशा अयत्नसिद्धत्वात् अप्रार्थनीयजयः सन् ययौ । 'अगस्त्यो दक्षिणा माश्रित्य नभसि स्थितः । वरुणस्यात्मजो योगी विन्ध्यवातापिम इति ब्रह्मपुराणे ॥

৪৪। জয়লাভ অনায়াসলভ্য বলিয়া রঘু, জয়লাভের জন্য আর উৎসুক ফলশালী পূগ (সুপারি) বৃক্ষশ্রেণী দ্বারা শোভিত সমুদ্রকূল দিয়া চলিলেন দিকে অগস্ত্যনক্ষত্রের উদয় হয়, সেই দক্ষিণদিকে যাত্রা করিলেন।

**स सैन्यपरिभोगेण गजदानसुगन्धिना ।**
**कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४**

४५ अ: । सः गजदानसुगन्धिना सैन्यपरिभोगेण कावेरीं सरितां पत्युः शङ्कनीयामिव वाच्य—तेन कावेरी शङ्कनीया इव अक्रियत ।

४५ । सः रघुः, गजानां दानेन मदेन, सुगन्धिना सुरभिणा 'गन्धस्य' इत्यादिना इकारादेशः समासान्तः । यद्यपि गन्धस्येत्वे तद ग्रहणं कर्त्तव्यमिति नैसर्गिकगन्धविवक्षायामेव इकारादेशः, तथापि ङ्कुशाः कवयः । तथा माघकाव्ये—"ववुरयुक्छदगुच्छसुगन्धयः स स्ततगानगिरोऽलिभिः ।" नैषधे च—"अपां हि तृप्ताय न वारिधारा सुगन्धिः स्वदते तुषारा" इति । 'न कर्म्मधारयान्मत्वर्थीयः' इति निषेध प्रत्ययपक्षोऽपि जघन्य एव । सेनायां समवेताः सैन्याः । समवेता ये सैन्यास्ते सैनिकास्च ते' इत्यमरः । 'सेनायां वा' इति प्रत्ययः । तेषां परिभोगेण कावेरीं नाम सरितं सरितां पत्युः शङ्कनीयां अविश्वसनीयामिव अकरोत् । सम्भोगलिङ्गदर्शनाद्भर्त्तुः भवतीति भावः ॥

৪৫। মহারাজ রঘুর গমনকালে স্নাননিরত তদীয় হস্তিগণের সুগন্ধি সেনাগণের গাত্রানুলেপনদ্রব্যে কাবেরীনদী সুবাসিত হওয়ায় সরিৎপতি সমু যেন 'স্বীয় বনিতা কাবেরী বোধ হয় ব্যভিচারিণী' এই আশঙ্কা জন্মাইয়াছিলে

**बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।**
**मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ ४६**

४६ अ:। विजिगीषोः गताध्वनस्तस्य ( रघोः ) बलैः मारीचोद्भ्रान्तहारीताः मलयाद्रेः उपत्यकाः अध्युषिताः ॥ वाच्य—बलानि अध्युषितानि।

४६। विजिगीषोः विजेतुमिच्छोः गताध्वनः तस्य रघोः, बलैः सैन्यैः। 'बलं शक्तिर्बलं सैन्यम्' इति यादवः। मारीचेषु मरीचव्रतेषु उद्भ्रान्ताः परिभ्रान्ताः हारीताः पक्षिविशेषाः यासु ताः। 'तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः' इत्यमरः। मलयाद्रेः उपत्यकाः आसन्नभूमयः। 'उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका' इत्यमरः। 'उपाधिभ्यां त्यकन्' इत्यादिना त्यकन्प्रत्ययः। अध्युषिताः उपत्यकास्सूषितमित्यर्थः। 'उपान्वध्याङ्वसः' इति कर्म्मत्वम् ॥

৪৬। অনন্তর বিজয়েচ্ছু সেই রঘুর সেনাগণ কিয়ৎপথ অতিক্রম করিয়া মারীচ বনে বিচরণকারী হারীত নামক বিহঙ্গপূর্ণ মলয়পর্ব্বতের উপত্যকায় আসিয়া কিছু কাল বাস করিয়াছিল।

**ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः।**
**तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः॥ ४७**

४७ अ:। अश्वक्षुण्णानाम् एलानाम् उत्पतिष्णवः फलरेणवः तुल्यगन्धिषु मत्तेभकटेषु ससञ्जुः ॥ वाच्य—उत्पतिष्णुभिः फलरेणुभिः ससञ्जे।

४७। अश्वैः क्षुण्णानाम् एलानाम् एलालतानाम् उत्पतिष्णवः उत्पतनशीलाः। 'अलं कृञ्' इत्यादिना इष्णुच्प्रत्ययः। फलरेणवः फलरजांसि तुल्यगन्धिषु समानगन्धिषु। सर्व्वधनीतिवदिन्यन्तो बहुव्रीहिः मत्तेभानां कटेषु ससञ्जुः सक्ताः। 'गजगण्डे कटोकटौ' इति कोषः ॥

৪৭। তথায় এলা-লতা সকল অশ্বপদ দ্বারা বিদলিত হওয়ায়, ঐ ফলসমূহ ধূলির ন্যায় চূর্ণিত হইয়া বায়ুভরে উড়িয়া উড়িয়া তত্তুল্য গন্ধ-বিশিষ্ট মত্ত হস্তিগণের গণ্ডস্থলে গিয়া সংলগ্ন হইল।

**भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम्।**
**नास्रसत् करिणां ग्रैवं त्रिपदीच्छेदिनामपि॥ ४८**

४८ अ:। चन्दनानां भोगिवेष्टनमार्गेषु समर्पितं त्रिपदीच्छेदिनामपि करिणां ग्रैवं नास्रसत् ॥ वाच्य—समर्पितेन ग्रैवेण अस्रंसिष्ट।

४८। चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनात् निम्नेषु समर्पितं सज्जितं त्रिपदीच्छेदिनां पादशृङ्खलच्छेदकानामपि। 'त्रिपदी पादबन्धनम्' इति यादवः। करिणां, ग्रीवासु भवं ग्रैवं कण्ठबन्धनम्। 'ग्रीवाभ्योऽण्च' इति अण्प्रत्ययः। नास्रसत् न स्रस्तमभूत्। 'द्युद्भ्यो लुङि' इति परस्मैपदे पुषादित्वात् अङ्, 'अनिदिताम्' इति नकारलोपः॥

৪৮। সর্পগণের বেষ্টন দ্বারা তথাকার চন্দনবৃক্ষের গায়ে খাঁজ পড়িয়া
সেই সকল খাঁজে হস্তিগণের কণ্ঠরজ্জু বন্ধন করায়, তাহা এরূপ দৃঢ়লগ্ন হইল যে,
পদশৃঙ্খল ছিন্ন করিতে সক্ষম হইলেও সেই সকল বন্ধন খুলিতে পারিল না।

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९

४९ अः। दक्षिणस्यां दिशि रवेरपि तेजः मन्दायते, तस्यामेव पाण्ड्या रघोः प्रतापं न विषे
वाच्य—तेजसा मन्दायते, पाण्ड्यैः न प्रतापः विषेहे ।

४९। दक्षिणस्यां दिशि रवेः अपि तेजः मन्दायते मन्दं भव
लोहितादित्वात् क्यषप्रत्ययः 'वा क्यषः' इत्यात्मनेपदम् । दक्षिण
तेजोमान्द्यादिति भावः। तस्यामेव दिशि पाण्ड्याः पाण्डूनां जनपद
राजानः पाण्ड्याः। पाण्डोर्ड्यण्वक्तव्यः। रघोः प्रतापं न विषेहिरे
सोढ़वन्तः। सूर्य्यविजयिनोऽपि विजितवानिति नायकस्य (ग्रन्थनाय
रघोः) महानुत्कर्षो गम्यते ॥

৪৯। দক্ষিণায়নে সূর্য্যেরও তেজ ক্ষীণ হইয়া যায়, কিন্তু রঘু দক্ষিণদিকে
করিলে, পাণ্ডুদেশীয় নৃপতিরা তাঁহার তেজ সহ্য করিতে পারিল না।

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम् ॥ ५०

५० अः। ते ताम्रपर्णीसमेतस्य महोदधेः सम्बन्धि सञ्चितं मुक्तासारं स्वं सञ्चितं यश इ
निपत्य ददुः ॥ वाच्य—तैः ददे ।

५०। ते पाण्ड्याः ताम्रपर्ण्या नद्या समेतस्य सङ्गतस्य महो
सम्बन्धि सञ्चितं मुक्तासारं मौक्तिकवरम् । 'सारो बले स्थिरांशे च न
क्लीवं वरे त्रिषु' इत्यमरः। स्वं स्वकीयं सञ्चितं यश इव तस्मै रघवे नि
प्रणिपत्य ददुः। यशसः शुभ्रत्वादौपम्यम् । ताम्रपर्णीसंगमे मौक्तिक
पत्तिरिति प्रसिद्धम् ॥

৫০। তাহারা রঘুর চরণে প্রণিপাতপূর্ব্বক তাঁহাকে তাম্রপর্ণী নদীসঙ্গত
সমুদ্রের উৎকৃষ্ট মুক্তা সকল প্রদান করিয়া যেন আপনাদের সঞ্চিত যশোরা
প্রদান করিল।

स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥ ५१

**असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता।**
**नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥५२**

५१,५२ अ:। असह्यविक्रमः सः तटेषु आलीनचन्दनौ तस्याः दिशः स्तनौ इव स्थितौ मलयदर्दुरौ ...लौ यथाकामं निर्विश्य उदन्वता दूरान्मुक्तं स्रस्तांशुकं मेदिन्या नितम्बमिव स्थितं सह्यम् (पर्वतम्) ...लङ्घयत् ॥ वाच्य—असह्यविक्रमेण तेन मुक्तः स्रस्तांशुकः नितम्ब इव अलङ्घ्यत।

५१। युग्ममेतत्। असह्यविक्रमः सः रघुः, तटेषु सानुषु आलीन-...न्दनौ व्याप्तचन्दनद्रुमौ। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' ...त्यमरः। स्तनपक्षे प्रान्तेषु व्याप्तचन्दनानुलेपौ तस्याः दक्षिणस्याः दिशः ...स्तनौ इव स्थितौ मलयदर्दुरौ नाम शैलौ यथाकामं यथेच्छं निर्विश्य उप-...भुज्य। 'निर्वेशो भृतिभोगयोः' इत्यमरः। उदकानि अस्य सन्तीति ...उदन्वान् उदधिः। 'उदन्वानुदधौ च' इति निपातः। उदन्वता दूरात् ...मुक्तं दुरतः त्यक्तम्। 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः। ...पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। स्रस्तांशुकं नितम्बम् इव स्थितं सह्यं ...सह्याद्रिम् अलङ्घयत् प्राप्तः अतिक्रान्तो वा ॥

৫১। তটদেশে চন্দন দ্বারা পরিব্যাপ্ত, দক্ষিণদিকের স্তনদ্বয়ের ন্যায় শোভমান, ...লয় ও দর্দ্দুর নামক শৈলদ্বয় যথেচ্ছ উপভোগ করিয়া দুঃসহ-বিক্রমশালী রঘু, ক্রমে ...সহ্যপর্ব্বত অতিক্রম করিলেন; সমুদ্র দূরে সরিয়া যাওয়ায় তখন সহ্যপর্ব্বতকে পৃথিবীর ...বসনোন্মুক্ত নিতম্বস্থলের ন্যায় অনুভূত হইল।

**तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः।**
**रामास्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णवः॥५३**

५३ अ:। अपरान्तजयोद्यतैः विसर्पद्भिः अनीकैः अर्णवः रामास्त्रोत्सारितोऽपि सह्यलग्न इव ...आसीत् ॥ वाच्य—अर्णवेन रामास्त्रोत्सारितेन सह्यलग्नेन इव अभूयत।

५३। सम्प्रति प्रतीचीं दिशमभिययावित्याह, तस्येति। अपरान्तानां ...पाश्चात्यानां जये उद्यतैः उद्युक्तैः। 'अपरान्तास्तु पाश्चात्यास्ते च सूर्य-...रकादयः' इति यादवः। विसर्पद्भिः गच्छद्भिः तस्य रघोः अनीकैः सैन्यैः। ...'अनीकं तु रणे सैन्ये' इति विश्वः। अर्णवः रामस्य जामदग्न्यस्य अस्त्रैः ...उत्सारितः परिसारितः अपि सह्यलग्न इव आसीत्। सैन्यं द्वितीयोऽर्णव ...इव अदृश्यत इति भावः॥

৫২। সেই সৈন্যপ্রবাহ যখন পাশ্চাত্যদেশ সকল জয় করিতে করিতে পশ্চিমা-...ভিমুখে চলিল, তখন বোধ হইল, সমুদ্র পরশুরামের বাণে দূরে অপসারিত হইয়াও বুঝি, ...আবার সহ্যপর্ব্বতে আসিয়া সংলগ্ন হইয়াছে।

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ५४

५४ अ: । तेन भयोत्सृष्टविभूषाणां केरलयोषिताम् अलकेषु चमूरेणुः चूर्णप्रतिनि...
वाच्य—स: चमूरेणुं...प्रतिनिधीकृतवान् ।

५४ । तेन रघुणा भयेन उत्सृष्टविभूषाणां परिहृतभूषणानां ...
योषितां केरलाङ्गनानाम् अलकेषु चमूरेणुः सेनारजः चूर्णस्य कुङ्कु...
रजसः प्रतिनिधीकृतः एतेन योषितां पलायनं चमूनाञ्च तदनु...
ध्वन्यते ॥

৫৩। কেরলদেশের কামিনীরা রঘুসৈন্যের আগমনজনিত ভয়ে বেশভূষা ...
পলাইতে লাগিল; সৈন্য-সমুত্থিত ধূলি কেরলাঙ্গনাগণের চূর্ণকুন্তলে পতিত ...
রঘু সেই ধূলি দ্বারা তাহাদের অলকাবলীস্থ কুঙ্কুমাদি চূর্ণের অভাব দূর করিলেন এই...
মনে হইল।

मुरलामारुतोद्भूतमगमत् कैतकं रजः ।
तद्योधवारवाणानामयत्नपटवासताम् ॥ ५५

५५ अ: । मुरलामारुतोद्भूतं कैतकं रज: तद्योधवारवाणानाम् अयत्नपटवासताम्...
वाच्य—मुरलामारुतोद्भूतेन कैतकेन रजसा...पटवासता अगामि ।

५५ । मुरला नाम केरलदेशेषु काचित् नदी । मुरवीति ...
पठन्ति । तस्याः मारुतेन उद्भृतम् उत्थापितं कैतकं केतकीसम्बन्धि...
तद्योधवारवाणानां रघुभटकञ्चुकानाम् । 'कञ्चुको वारवाणोऽस्त्री' ...
मरः । अयत्नपटवासताम् अयत्नसिद्धवस्त्रवासनाद्रव्यत्वम् अगा...
'पिष्टातः पटवासकः' इत्यमरः ॥

৫৪। কেতকীপুষ্পের রেণু সকল মুরলানদীর পবনহিল্লোলে বিকীর্ণ হইয়া...
সৈন্যের গাত্রস্থিত কঞ্চুকে সংলগ্ন হওয়ায়, তাহাদের অযত্নলব্ধ পটবাসের কার্য্য...
করিল। (পটবাস গন্ধদ্রব্যের চূর্ণ, যদ্দ্বারা বস্ত্র সুবাসিত হয়)।

अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
वर्म्मभिः पवनोद्भूतराजतालीवनध्वनिः ॥ ५६

५६ अ: । चरतां वाहानां गात्रशिञ्जितैः वर्म्मभिः पवनोद्भूतराजतालीवनध्वनिः अभ...
वाच्य—गात्रशिञ्जितानि वर्म्माणि तालवनध्वनिम् अभ्यभवन् ।

५६ । चरतां गच्छतां वाहानां वाजिनाम् । 'वाजिवाहार्वगन्धर्व...
हयसैन्धवसप्तयः' इत्यमरः । गात्रशिञ्जितैः गात्रेषु शब्दायमानैः । ...
ताः । 'गात्रसञ्जितैः' इति वा पाठः । सञ्जतेर्ण्यन्तात् कर्म्मणि

र्म्मभिः कवचैः वाहानां गात्रशिञ्जितैः गात्रध्वनिभिरित्यर्थः। 'मर्म्मरः' इति पाठे मर्म्मरः मर्म्मरायमाणः इति ध्वनेर्विशेषणम्। पवनेन उद्धूतानां कम्पितानां राजतालीवनानां ध्वनिः अभ्यभूयत तिरस्कृतः॥

৫৬। গমনকালে অশ্বগণের গাত্রস্থিত বর্ম্ম সকল হইতে নির্গত ঝন্ঝনা শব্দদ্বারা বনসঞ্চালিত তালবনের মর্ম্মরশব্দ ঢাকিয়া গেল।

**खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु।**
**कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः॥ ५७**

५७ अ:। खर्जूरीस्कन्धनद्धानां करिणां मदोद्गारसुगन्धिषु कटेषु पुन्नागेभ्यः शिलीमुखाः पेतुः॥ वाच्य—शिलीमुखैः पेते।

५७। खर्ज्जूरीणां तृणद्रुमविशेषाणाम्। 'खर्ज्जूरः केतकी ताली खर्ज्जूरी च तृणद्रुमाः' इत्यमरः। स्कन्धेषु प्रकाण्डेषु। 'अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखावधेस्तरोः' इत्यमरः। नद्धानां बद्धानां करिणां मदोद्गारेण मदस्रावेण सुगन्धिषु। 'गन्धस्य' इत्यादिना इकारः। कटेषु गण्डेषु पुन्नागेभ्यः नागकेशरेभ्यः, पुन्नागपुष्पाणि विहाय। ल्यब्लोपे पञ्चमी। शिलीमुखाः अलयः पेतुः। 'अलिबाणौ शिलीमुखौ' इत्यमरः। ततोऽपि सौगन्ध्यातिशयादिति भावः॥

৫৭। অলিবৃন্দ পুন্নাগ পুষ্প ত্যাগ করিয়া খর্জ্জূরবৃক্ষের স্কন্ধদেশে বদ্ধ হস্তিগণের মদধারা-সুবাসিত গণ্ডস্থলে আসিয়া বসিতে লাগিল।

**अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ।**
**अपरान्तमहीपालव्याजेन रघवे करम्॥ ५८**

५८ अ:। उदन्वान् रामाय अभ्यर्थितः सन् अवकाशं ददौ किल, रघवे तु अपरान्तमहीपालव्याजेन करं ददौ॥ वाच्य—उदन्वता अभ्यर्थितेन (सता) अवकाशः ददे, करः ददे।

५८। उदन्वान् उदधिः रामाय जामदग्न्याय अभ्यर्थितः याचितः सन् अवकाशं स्थानं ददौ किल। किलेति प्रसिद्धौ। रघवे तु अपरान्तमहीपालव्याजेन करं बलिं ददौ। 'बलिहस्तांशवः कराः' इत्यमरः। अपरान्तानां समुद्रमध्यदेशवर्त्तित्वात् तैर्दत्ते करे समुद्रदत्तत्वोपचारः। करदानञ्च भीत्या, न तु याच्ञयेति रामाद्रघोरुत्कर्षः॥

अत्र पौराणिकी वार्त्ता—पुरा किल क्षत्रियगण-धूमकेतुर्भगवान् परशुरामः शङ्करदत्तकुठारास्त्रेण निर्जितां सप्तसागरचुम्बितां पृथ्वीं महर्षये काश्यपाय ददौ। ततः सः स्वदत्तायां तस्यां वासस्यानुचितत्वात् सागरसमीपं गत्वा कियत् स्थानं प्रार्थनया लब्ध्वा तत्र निर्मित-पर्णशालायामुवास इति।

৫৮। সমুদ্র পরশুরামের প্রার্থনানুসারেই তাঁহাকে বাসস্থান দিয়াছিল, কি সমুদ্র পাশ্চাত্য নরপতিগণের ব্যপদেশে রঘুকে কর প্রদান করিল।

**मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।**
**त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥ ५९**

५९ अ:। तत्र सः मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणं त्रिकूटमेव उच्चैर्जयस्तम्भं वाच्य—तेन...लक्षणः त्रिकूट एव जयस्तम्भः चक्रे।

५९। तत्र सः रघुः, मत्तानाम् इभानां रदनोत्कीर्णानि दन्त एव। भावे क्तः। व्यक्तानि स्फुटानि विक्रमलक्षणानि पराक्रम विजयवर्णावलिस्थानानि यस्मिन् तं तथोक्तं त्रिकूटम् एव उच्चैः जय चकार। गाढ़दन्तप्रहारस्त्रिकूटोऽद्रिरिवोत्कीर्णवर्णस्तम्भ इव रघोर्जय ऽभूदित्यर्थः ॥

৫৯। তথাকার ত্রিকূট পর্ব্বতের গাত্রে তাঁহার মত্ত হস্তিগণের দন্তাঘাতে সকল, প্রস্তরখোদিত বিক্রম-বর্ণনাসূচক অক্ষর সকলের ন্যায় শোভিত হওয়া হইল তিনি যেন ত্রিকূট পর্ব্বতকে নিজ জয়স্তম্ভ স্বরূপ করিলেন।

**पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।**
**इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥ ६०**

६० अ:। ततः संयमी (सः) तत्त्वज्ञानेन इन्द्रियाख्यान् रिपूनिव पारसीकान् जेतुं वर्त्मना प्रतस्थे ॥ वाच्य—संयमिना प्रतस्थे।

६०। ततः सः रघुः, संयमी योगी, तत्त्वज्ञानेन इन्द्रियाख्यान् इ नामकान् रिपून् इव पारसीकान् राज्ञः जेतुं स्थलवर्त्मना प्रतस्थे, नेदिष्ठेनापि जलपथेन, समुद्रयानस्य निषिद्धत्वादिति भावः ॥

৬০। অনন্তর, সংযমী ব্যক্তি যেমন তত্ত্বজ্ঞান অবলম্বনপূর্ব্বক ইন্দ্রিয়রূপ রি জয় করিবার জন্য তত্ত্বজ্ঞান অবলম্বন করেন, রঘুও তেমনি পারসীকগণকে করিবার জন্য স্থলপথে অগ্রসর হইলেন।

**यवनीमुखपद्मानां सेहे मधुमदं न सः ।**
**बालातपमिवाब्जानामकालजलदोदयः ॥ ६१**

६१ अ:। स यवनीमुखपद्मानां मधुमदं न सेहे, (कमिव ?) अकालजलदोदयः अब्जानां बा मिव ॥ वाच्य—तेन मधुमदः न सेहे, अकालजलदोदयेन बालातप इव।

६१। सः रघुः, यवनीनां यवनस्त्रीणाम्। 'जातेरस्त्रीविषया पधात्' इति ङीष्। मुखानि पद्मानि इव मुखपद्मानि, उपमितसमा

तेषां मधुना मद्येन यः मदः मदरागः। कार्य्यकारणभावयोरभेदेन निर्देशः। तं न सेहे। कमिव ? अकाले प्रावृड्‌व्यतिरिक्ते काले जलदोदयः प्रायेण प्रावृषि पद्मविकाशस्याप्रसक्तत्वात् अब्जानां सम्बन्धिनं बालातपम् इव। अब्जहितत्वादब्जसम्बन्धित्वं सौरातपस्य॥

৬১। যেমন অকস্মাৎ মেঘ উঠিয়া পদ্ম সকলের উপর নিপতিত বালসূর্য্যপ্রভাকে বিলুপ্ত করে, তেমনি রঘুও যবনীগণের মুখপদ্মের মদ্যপানজনিত (আরক্ত) প্রভাকে বিলুপ্ত করিলেন। (অর্থাৎ রঘুর হস্তে পতি, পুত্র প্রভৃতি বিনষ্ট হওয়ায় যবনীদিগের মদ্যপান নিবৃত্ত হইল)।

**संग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः।**
**शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत्॥ ६२**

६२ अ:। तस्य अश्वसाधनैः पाश्चात्यैः (सह) रजसि शार्ङ्गकूजितविज्ञेयप्रतियोधे सति तुमुलः संग्रामः अभूत्॥ वाच्य—तुमुलेन संग्रामेण अभावि।

६२। तस्य रघोः, अश्वसाधनैः वाजिसैन्यैः। 'साधनं सिद्धिसैन्ययोः' इति हैमः। पश्चाद्भवैः पाश्चात्यैः यवनैः सह। 'दक्षिणापश्चात्पुरसस्त्यक्' । सहार्थे तृतीया। शृङ्गाणां विकाराः शार्ङ्गाणि धनूंषि तेषां कूजितैः शब्दैः। 'शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः। जये च शृङ्गविहिते चापेऽप्याह विशेषतः॥' इति केशवः। अथवा शार्ङ्गैः शृङ्गसम्बन्धिभिः कूजितैः विज्ञेयाः अनुमेयाः प्रतियोधा प्रतिभटाः यस्मिन् तस्मिन् रजसि तुमुलः संग्रामः सङ्कुलं युद्धम् अभूत्। 'तुमुलं रणसङ्कुले' इत्यमरः॥

৬২। অশ্বারোহী পাশ্চাত্য যবনগণের সহিত রঘুর ভীষণ সংগ্রাম বাধিল; তখন রণক্ষেত্রে এত অধিক ধূলি উড়িল যে, কেবল কোদণ্ডটঙ্কার দ্বারা বিপক্ষসেনা জানা যাইতে লাগিল;

**भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्।**
**तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव॥ ६३**

६३ अ.। सः भल्लापवर्जितैः श्मश्रुलैः तेषां शिरोभिः सरघाव्याप्तैः क्षौद्रपटलैरिव महीं तस्तार॥ वाच्य—तेन मही तस्तरे।

६३। सः रघुः, भल्लापवर्जितैः वाणविशेषकृत्तैः। 'स्नुहीदलफलो भल्लः' इति यादवः। श्मश्रुलैः प्रवृद्धमुखरोमवद्भिः। 'सिध्मादिभ्यश्च' इति लच्प्रत्ययः। तेषां पाश्चात्यानां शिरोभिः, सरघाभिः मधुमक्षिकाभिः व्याप्तैः। 'सरघा मधुमक्षिका' इत्यमरः। क्षुद्राः सरघाः। 'क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका' इत्यमरः। क्षुद्राभिः कृतानि क्षौद्राणि

मधूनि। 'मधु क्षौद्रं माक्षिकादि' इत्यमरः। 'क्षुद्राभ्रमरवटरपाद
इति संज्ञायामञ्प्रत्ययः। तेषां पटलैः सञ्चयैः इव। 'पटलं
नेत्ररोगे छन्दसि सञ्चये। पटिके परिवारे च' इति हैमः। महीं
आच्छादयामास॥

৬৩। তিনি ভল্লনামক অস্ত্র দ্বারা যবনগণের মুণ্ড ছিন্ন করিয়া ভূতল করিলেন, ঐ সকল শ্মশ্রুল যবনমুণ্ড মধুমক্ষিকাপূর্ণ (মধুচক্রের ন্যায়) অনুভূত হই

**अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः।**
**प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम्॥ ६४**

६४ अ:। शेषाः अपनीतशिरस्त्राणाः तं शरणं ययुः, तथाहि—महात्मनां संरम्भः प्र प्रतीकारः (भवति)॥ वाच्य—शेषैः...शिरस्त्राणैः सः शरणं यये। संरम्भेण प्रणिपातप्रतीका (भूयते)।

६४। शेषाः हतावशिष्टाः, अपनीतशिरस्त्राणाः अपसारितशी सन्तः। 'शीर्षकम्। शीर्षण्यञ्च शिरस्त्रे' इत्यमरः। शरणागतल मेतत्। तं रघुं, शरणं ययुः। तथाहि—महात्मनां संरम्भः कोपः। 'सं सम्भ्रमे कोपे' इति विश्वः। प्रणिपातः प्रणतिरेव प्रतीकारः यस्य महतां परकीयमौद्धत्यमेवासह्यं, न तु जीवितमिति भावः॥

৬৪। হতাবশিষ্ট যবনেরা শিরস্ত্রাণ অপনীত (নামাইয়া) করিয়া তাঁহার পদে শ হইল, কারণ, প্রণিপাতই মহাত্মাদিগের কোপশান্তির উপায়।

**विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्।**
**आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु॥ ६५**

६५ अ:। तद्योधाः आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु मधुभिः विजयश्रमं विनय
वाच्य—तद्योधैः विजयश्रमः विनीयते स्म।

६५। तस्य रघोः, योधाः भटाः, आस्तीर्णानि अजिनरत्नानि श्रेष्ठानि यासु तासु द्राक्षावलयानां भूमिषु। 'मृद्वीका गोस्तनी स्वाद्वी मधुरसेति च' इत्यमरः। मधुभिः द्राक्षाफलप्रकृतिकैर्मद्यैः, श्रमं युद्धखेदं, विनयन्ते स्म अपनीतवन्तः। 'कर्तृस्थे चाशरीरे क इत्यात्मनेपदम्। 'लट् स्मे' इति भूतार्थे लट्॥

৬৫। তাঁহার সৈনিকগণ দ্রাক্ষালতাপরিবেষ্টিত ভূমিতে উৎকৃষ্ট চর্ম্মাসন করিয়া সুরাপানপূর্ব্বক যুদ্ধজনিত বিজয়শ্রম দূর করিতে লাগিল।

ततः प्रतस्थे कौवेरीं भास्वानिव रघुर्दिशम्।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव॥ ६६

६६ अ.। ततो रघुः भास्वानिव शरैः उस्रैरिव उदीच्यान् रसानिव उद्धरिष्यन् कौवेरीं दिशं प्रतस्थे॥ वाच्य—रघुणा भास्वता इव उद्धरिष्यता कौवेरी दिक् प्रतस्थे।

६६। ततः रघुः भास्वान् सूर्य्यः इव, शरैः वाणैः, उस्रैः किरणैः इव। 'किरणोऽस्रमयूखांशुगभस्तिघृणिघृष्णयः' इत्यमरः। उदीच्यान् उदग्भवान् नृपान्, रसान् उदकानि इव उद्धरिष्यन्, कौवेरीं कुवेर-सम्बन्धिनीं दिशम् उदीचीं प्रतस्थे। अनेकेवशब्देनेयमुपमा। यथाह दण्डी—'एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा' इति॥

৬৬। অনন্তর, সূর্য্য যেমন কিরণ দ্বারা পৃথিবীর রস আকর্ষণ করিবার জন্য উত্তরায়ণ অবলম্বন করেন, সেইরূপ রঘুও শর দ্বারা উত্তরদিকস্থিত নৃপতিগণকে উন্মূলিত করিবার জন্য উত্তরাভিমুখে যাত্রা করিলেন।

विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः।
दुधुवुर्वाजिनः स्कन्धान् लग्नकुङ्कुमकेसरान्॥ ६७

६७ अ.। सिन्धुतीरविचेष्टनैः विनीताध्वश्रमाः तस्य वाजिनः लग्नकुङ्कुमकेसरान् स्कन्धान् दुधुवुः॥ वाच्य—विनीताध्वश्रमैः वाजिभिः...केसराः स्कन्धाः दुधुविरे।

६७। सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः। 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः। सिन्धोः तीरे विचेष्टनैः अङ्गपरिवर्त्तनैः, विनीताध्वश्रमाः, तस्य रघोः वाजिनः अश्वाः, लग्नाः कुङ्कुमकेसराः कुङ्कुमकुसुमकिञ्जल्काः येषां तान्, यद्वा लग्नकुङ्कुमाः केसराः सटाः येषां तान्। 'अथ कुङ्कुमम्। काश्मीरजन्म' इत्यमरः। 'केसरो नागकेसरे। तुरङ्गसिंहयोः स्कन्धकेशेषु बकुलद्रुमे। पुन्नागवृक्षे किञ्जल्के स्यात्' इति हैमः। स्कन्धान् कायान्। 'स्कन्धः प्रकाण्डे कायेऽंसे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च' इति हैमः। दुधुवुः कम्पयन्ति स्म॥

৬৭। তাঁহার অশ্বগণ কাশ্মীরদেশে প্রবাহিত সিন্ধুনদতীরে গাত্রাবলুণ্ঠন দ্বারা পথশ্রম দূর করিয়া, তাহার তীরজাত কুঙ্কুমরজোরঞ্জিত কেশরযুক্ত স্কন্ধদেশ বিকম্পিত করিতে লাগিল।

तत्र हूणावरोधानां भर्त्तृषु व्यक्तविक्रमम्।
कपोलपाटलादेशि बभूव रघुचेष्टितम्॥ ६८

६८ अ: । तत्र भर्तृषु व्यक्तविक्रमं रघुचेष्टितं हूणावरोधानां कपोलपाटलादेशि
वाच्य—व्यक्तविक्रमेण रघुचेष्टितेन...देशिना बभूवे ।

६८ । तत्र उदीच्यां दिशि, भर्तृषु व्यक्तविक्रमं भर्तृवधेन स्फुट-
क्रममित्यर्थः । रघुचेष्टितं रघुव्यापार:, हूणाः जनपदाख्याः क्षत्रि-
तेषाम् अवरोधाः अन्तःपुरस्त्रियः तासां कपोलेषु पाटलस्य पाट-
ताड़नादिकृतारुण्यस्य आदेशि उपदेशकं बभूव । अथवा पाटलः आ-
आदेष्टा यस्य तत् बभूव, स्वयं लेख्यायते इत्यर्थः ॥

৬৮। উত্তরদেশস্থ হূণজাতীয় পুরুষগণের উপর রঘু এরূপ বিক্রম প্রকাশ করি-
যে, তাহাদের অন্তঃপুরবাসিনী পত্নীরা ( পতিশোকে কপোলে করাঘাত করিয়া )
নিজ কপোলদেশ রক্তবর্ণ করিল।

**काम्बोजाः समरे सोढुं तस्य वीर्य्यमनीश्वराः ।**
**गजालानपरिक्लिष्टैरक्षोटैः सार्द्धमानताः ॥ ६९**

६९ अ: । काम्बोजाः समरे तस्य वीर्य्यं सोढुम् अनीश्वराः सन्तः गजालानपरिक्लिष्टैः अ-
सार्द्धम् आनताः ॥ वाच्य—काम्बोजैः अनीश्वरैः आनतैः ( भूयते )।

६९ । काम्बोजाः राजानः, समरे तस्य रघोः वीर्य्यं प्रभावम् । 'वी-
प्रभावम् । 'वीर्य्यं तेजःप्रभावयोः' इति हैमः । सोढुम् अनीश्व-
अशक्ताः सन्तः, गजानाम् आलानं बन्धनम् । भावे ल्युटि 'विभाषा लीय-
णात्वम् । तेन परिक्लिष्टैः परिक्षतैः अक्षोटैः वृक्षविशेषैः सा-
नागताः ॥

৬৯। কাম্বোজদেশীয় রাজারা যুদ্ধে রঘুর বীর্য্য সহ্য করিতে পারিল না;
হস্তি সকল বাঁধিয়া রাখায় তথাকার অক্ষোট বৃক্ষ সকল ( আখ্‌রোট গাছ )
নত হইয়াছিল, তাহারাও সেইরূপ নত হইয়া পড়িল।

**तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ।**
**उपदा विविशुः शश्वत् नोत्सेकाः कोशलेश्वरम् ॥ ७०**

७० अ: । तेषां सदश्वभूयिष्ठाः तुङ्गा द्रविणराशयः एव उपदाः शश्वत् कोशलेश्वरं वि-
उत्सेकाः न ( विविशुः )॥ वाच्य—सदश्वभूयिष्ठैः तुङ्गैः द्रविणराशिभिः उपदैः कोश-
विविशे, न उत्सेकैः ।

७० । तेषां काम्बोजानां, सद्भिः अश्वैः भूयिष्ठाः बहुलाः तुङ्गाः द्र-
णानां हिरण्यानाम् । 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । राशयः
उपदाः उपायनानि । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यम-
कोशलेश्वरं कोशलदेशाधिपतिं तं रघुं, शश्वत् असकृत् विविशुः ।

पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः। तथापि उत्सेकाः गर्वास्तु न विविशुः, सत्यपि गर्व्वकारणे न जगर्व्व इत्यर्थः ॥

१०। তাহাদের (কাম্বোজনৃপতিগণের) প্রদত্ত উৎকৃষ্ট অশ্ববহুল সুবর্ণসম্ভারপূর্ণ উপহার নিরন্তর তাঁহার নিকট উপস্থিত হইল বটে, কিন্তু রঘুর মনে অহঙ্কার প্রবেশ করিতে পারে নাই।

**ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।**
**वर्द्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१**

७१ अः। ततः अश्वसाधनः सन् (सः) गौरीगुरुं शैलम् उद्धूतैः धातुरेणुभिः तत्कूटान् वर्द्धयन्निव आरुरोह ॥ वाच्य—अश्वसाधनेन वर्द्धयता इव गौरीगुरुः शैलः आरुरुहे।

७१। ततः अनन्तरम्, अश्वसाधनः सन्, गौर्य्याः गुरुं पितरं शैलं हिमवन्तम्, उद्धूतैः अश्वखुरोद्धूतैः धातूनां गैरिकादीनां रेणुभिः तत्-कूटान् तस्य शृङ्गाणि। 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः। वर्द्धयन् इव आरुरोह। उत्पतद्धूलिदर्शनाद्गिरिशिखरवृद्धिभ्रमो जायते इति भावः॥

৭১। অনন্তর, রঘু অশ্বারোহী সেনাদলসহ হিমাচলে আরোহণ করিলেন; তত্রত্য গৈরিকাদি ধাতু অশ্বখুরে বিদলিত ও স্তূপাকারে গগনমণ্ডলে উত্থিত হওয়ায় বোধ হইল যেন, হিমাচলের শৃঙ্গমালা বৃদ্ধি পাইতেছে।

**शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसम्भ्रमम् ।**
**गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२**

७२ अः। तुल्यसत्त्वानां गुहाशयानां सिंहानां परिवृत्यावलोकितं सैन्यघोषेऽपि असंभ्रमं शशंस ॥ वाच्य—परिवृत्यावलोकितेन शशंसे।

७२। तुल्यसत्त्वानां सैन्यैः समानबलानां गुहासु शेरते इति गुहाशयाः तेषाम्। 'अधिकरणे शेतेः' इत्यच्प्रत्ययः। 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा' इत्यमरः। सिंहानां हरीणाम्। 'सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः' इत्यमरः। सम्बन्धि परिवृत्य परावृत्य अवलोकितं शयित्वैव ग्रीवाभङ्गेनावलोकनं कर्तृ सैन्यघोषे सेनाकलकले सम्भ्रमकारणे सत्यपि असम्भ्रमम् अन्तःक्षोभविरहितम्। नञः प्रसज्य-प्रतिषेधेऽपि समास इष्यते। शशंस कथयामास। सैन्येभ्य इत्यर्थाल्लभ्यते। बाह्यचेष्टितमेव मनोवृत्तेरनुमापकमिति भावः। असम्भ्रान्तत्वे हेतुः तुल्यसत्त्वानामिति। न हि समबलः समबलाद्बिभेतीति भावः॥

৭২। তুল্যবলশালী গুহাশায়ী সিংহগণ সৈন্যকোলাহল শুনিয়াও ভীত হইল না, কেবল ঘাড় ফিরাইয়া সেই দিকে তাকাইয়া দেখিল।

भूर्जेषु मर्म्मरीभूताः कीचकध्वनिहेतवः ।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३

७३ अ:। भूर्जेषु मर्म्मरीभूताः कीचकध्वनिहेतवः गङ्गाशीकरिणः मरुतः मार्गे तं [सिषेविरे]। वाच्य—मर्म्मरीभूतैः कीचकध्वनिहेतुभिः गङ्गाशीकरिभिः मरुद्भिः स सिषेवे।

७३। भूर्जेषु भूर्जपत्रेषु। 'भूर्जपत्रो भुजो भूर्जो मृदुत्वक् चर्म्मिका' इति यादवः। मर्म्मरः शुष्कपर्णध्वनिः। 'मर्म्मरः शुष्कपर्णानाम्' [इति] यादवः। अयञ्च शुक्लादिशब्दवद्‌गुणिनि वर्त्तते, प्रयोज्यते च—[...]रगुरुधूपगन्धिभिः' इति, अतः मर्म्मरीभूताः मर्म्मरशब्दवन्तो भूता [इत्यर्थः।] कीचकानां वेणुविशेषाणां ध्वनिहेतवः श्रोत्रसुखाश्च इति [भावः।] गङ्गाशीकरिणः शीतला इत्यर्थः। मरुतः वाताः, मार्गे तं सिषेविरे।

१३। ভূর্জ্জপত্র-মধ্যে থস্ থস্ শব্দ ও বংশের ছিদ্রে (বীণার ন্যায়) শব্দ উত্থিত করিয়া এবং ভাগীরথীর জলকণা সকল সঞ্চালিত করিয়া, সমীরণ [...] পথে রঘুকে সেবা করিতে লাগিল।

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४

७४ अ.। सैनिकाः नमेरूणां छायासु निषण्णमृगनाभिभिः वासितोत्सङ्गाः दृषदः [अध्यास्य] विशश्रमुः ॥ वाच्य—सैनिकैः विशश्रमे।

७४। सैनिकाः सेनायां समवेताः। प्राग्वहतीयष्ठक्प्रत्ययः। न[मेरूणां] सुरपुन्नागानां छायासु निषण्णानां दृषदुपविष्टानां मृगाणां कस्तूरी[...]नाभिभिः वासितोत्सङ्गाः सुरभिततलाः दृषदः शिलाः, अध्यास्य अधि[ष्ठाय।] 'अधिशीङ्स्थासां कर्म्म' इति कर्म्म। दृषत्सु अधिरुह्य इत्यर्थः। वि[शश्रमुः] विश्रान्ताः ॥

१४। তাঁহার সৈন্যগণ, নমেরুবৃক্ষের ছায়ায় মৃগগণের অবস্থানহেতু মৃগ[নাভি-] সুবাসিত শিলাতলে বসিয়া বিশ্রাম করিতে লাগিল।

सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५

७५ अ:। सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ओषधयः नक्तं नेतुः अस्नेहदीपिका[ः आसन्]। वाच्य—स्फुरितत्विड्भिः ओषधिभिः अस्नेहदीपिकाभिः अभूयत।

७५। सरलेषु देवदारुविशेषेषु आसक्तानि यानि मातङ्गानां [...]

ग्रीवासु भवानि ग्रैवेयाणि कण्ठशृङ्खलानि । 'ग्रीवाभ्योऽण् च' इति चकारात् ढञ्प्रत्ययः । तेषु स्फुरितत्विषः प्रतिफलितभासः ओषधयः ज्वलन्तः ज्योतिर्लताविशेषाः, नक्तं रात्रौ, नेतुः नायकस्य रघोः, अस्नेहदीपिकाः तैलनिरपेक्षाः प्रदीपाः आसन् ॥

৭৫। ওষধিসকল, রাত্রিকালে দেবদারুবৃক্ষে বদ্ধ মাতঙ্গের কণ্ঠস্থ শৃঙ্খলে নিজ জ্যোতিঃ প্রতিফলিত করিয়া বিনা তৈলেই সেনানায়ক রঘুর প্রদীপের কার্য্য করিল।

**तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।**
**गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६**

७६ अ: । तस्य उत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः देवदारवः किरातेभ्यः गजवर्ष्म शशंसुः ॥ वाच्य—...क्षतत्वग्भिः देवदारुभिः शशंसे ।

७६ । तस्य रघोः, उत्सृष्टेषु उज्झितेषु निवासेषु सेनानिवेशेषु कण्ठरज्जुभिः गजग्रैवैः क्षताः निष्पिष्टाः त्वचः येषां ते देवदारवः, किरातेभ्यः वनचरेभ्यः गजानां वर्ष्म प्रमाणम् । 'वर्ष्म देहप्रमाणयोः' इत्यमरः । शशंसुः कथितवन्तः । देवदारु-स्कन्धत्वक्क्षतैर्गजानामौन्नत्यमनुमीयते इत्यर्थः ॥

৭৬। রঘু যে সকল স্থান হইতে শিবির তুলিয়া চলিলেন, সেই সকল স্থানের দেবদারুবৃক্ষের গাত্রে তাঁহার হস্তিগণের কণ্ঠরজ্জুর ঘর্ষণচিহ্ন দেখিয়া কিরাতগণ হস্তিগণের উচ্চতা বুঝিতে পারিল।

**तत्र जन्यं रघोर्घोरं पर्व्वतीयैर्गणैरभूत् ।**
**नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७७**

७७ अ: । तत्र रघोः पर्व्वतीयैः गणैः सह नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् घोरं जन्यम् अभूत् ॥ वाच्य—...पतितानलेन घोरेण जन्येन अभावि ।

७७ । तत्र हिमाद्रौ, रघोः, पर्व्वते भवैः पर्व्वतीयैः । 'पर्व्वताच्च' इति छप्रत्ययः । गणैः उत्सवसङ्केताख्यैः सप्तभिः । 'गणानुत्सवसङ्केतानजयत् सप्त पाण्डवः' इति महाभारते । नाराचानां बाणविशेषाणां क्षेपणीयानां भिन्दिपालानाम् अश्मनाञ्च निष्पेषेण सङ्घर्षेण उत्पतिताः अनलाः यस्मिन् तत् तथोक्तम् । 'क्षेपणीयो भिन्दिपालः खङ्गो दीर्घो महाफलः' इति यादवः । घोरं भीमं, जन्यं युद्धम् अभूत् । 'युद्धमायोधनं जन्यम्' इत्यमरः ॥

৭৭। পর্ব্বতবাসী উৎসবসঙ্কেতাদি সপ্তগণের সহিত সেইস্থলে রঘুর তুমুল যুদ্ধ হইল ; সেই যুদ্ধে নারাচ ও ভিন্দিপাল প্রভৃতি অস্ত্র ও শিলাখণ্ড সকলের পরস্পর সংঘর্ষণে অগ্নিস্ফুলিঙ্গ নির্গত হইতে লাগিল।

শরৈরুৎসবসঙ্কেতান্ স কৃত্বা বিরতোৎসবান্।
জয়োদাহরণং বাহ্বোর্গাপয়ামাস কিন্নরান্ ॥ ৭৮

৭৮ অ:। স শরৈঃ উৎসবসংকেতান্ বিরতোৎসবান্ কৃত্বা কিন্নরান্ বাহ্বোঃ জয়োদাহরণং গাপয়ামাস ॥ বাচ্য—তেন কিন্নরাঃ গাপয়ামাসিরে।

৭৮। সঃ রঘুঃ, শরৈঃ বাণৈঃ, উৎসবসঙ্কেতান্ নাম গণান্ বিরতো কৃত্বা, জিত্বা ইত্যর্থঃ। কিন্নরান্ বাহ্বোঃ স্বভুজয়োঃ জয়োদাহরণং খ্যাপকং প্রবন্ধবিশেষং গাপয়ামাস। 'গতিবুদ্ধি—' ইত্যাদিনা কি কর্ম্মত্বম্ ॥

উদাহরণ-লক্ষণ,ক্তং শাস্ত্রকারেণ, যথা—"যেন কেনাপি কালেন গদ্যপদ্যসমন্বিতম্। ক্রমং মালিন্যাদিগ্রামবিচিত্রিতম্। তদুদাহরণং নাম বিভক্ত্যষ্টাঙ্গসংযুতম্।"

১৮। শরসমূহ দ্বারা উৎসবসঙ্কেতগণকে নিরুৎসব (পরাজিত) করিয়া, কিন্নর তিনি স্বকীয় ভুজবীর্য্যের জয়গানে নিয়োজিত করিলেন।

পরস্পরেণ বিজ্ঞাতস্তেষূপায়নপাণিষু।
রাজ্ঞা হিমবতঃ সারো রাজ্ঞঃ সারো হিমাদ্রিণা ॥

৭৯ অ:। তেষু উপায়নপাণিষু পরস্পরেণ রাজ্ঞা হিমবতঃ সারো বিজ্ঞাতঃ, হিমাদ্রিণা সারো বিজ্ঞাতঃ ॥ বাচ্য—পরস্পরেণ রাজা সারং বিজ্ঞাতবান্, হিমাদ্রিশ্চ সারং বিজ্ঞাতবান্।

৭৯। তেষু গণেষু উপায়নযুক্তাঃ পাণয়ঃ যেষাং তেষু সৎসু পর অন্যোঽন্যং রাজ্ঞা হিমবতঃ সারঃ ধনরূপঃ বিজ্ঞাতঃ, হিমাদ্রিণা অপি সারঃ বলরূপঃ বিজ্ঞাতঃ। এতেন তত্রত্যবস্তূনামনর্ঘ্যত্বং গণানাম পূর্ব্বস্য পরাজয় ইতি ধ্বন্যতে ॥

১৯। সেই সকল পার্ব্বতীয়েরা উপঢৌকন লইয়া রঘুর নিকট উ হইলে, মহারাজ রঘু, হিমালয়ের কতদূর ঐশ্বর্য্য তাহা বুঝিতে পারিলেন, হি রঘুর কতদূর বীর্য্য তাহা জানিতে পারিলেন।

তত্রাক্ষোভ্যং যশোরাশিং নিবেশ্যাবরুরোহ সঃ।
পৌলস্ত্যতুলিতস্যাদ্রেরাদধান ইব হ্রিয়ম্ ॥ ৮০

৮০ অ:। সঃ তত্র অক্ষোভ্যং যশোরাশিং নিবেশ্য পৌলস্ত্যতুলিতস্য অদ্রেঃ হ্রিয়ম্ আদধা অবরুরোহ ॥ বাচ্য—তেন আদধানেন ইব অবরুরুহে।

৮০। সঃ রঘুঃ, তত্র হিমাদ্রৌ, অক্ষোভ্যম্ অধৃষ্যং যশোরাশিং নি নিধায় পৌলস্ত্যেন রাবণেন তুলিতস্য চালিতস্য অদ্রেঃ কৈলাসস্য হ্রি আদধানঃ জনয়ন্ ইব অবরুরোহ অবততার, কৈলাসমগত্বৈব প্রতিনি ইত্যর্থঃ। ন হি শূরাঃ পরেণ পরাজিতমভিযুঞ্জতে ইতি ভাবঃ ॥

पौराणिकी कथा ।—एकदा रावणो मदगर्वात् कैलासपर्वतमुत्तोलयामास ; तेन प्राक् प्रणयकलहकुपिता पार्व्वतीसती सन्त्रस्ता शिवं स्वयं समालिलिङ्ग ; अनुनयं विना प्रियाकोपोपशमने रावण एव कारणमिति मत्वा महादेवः सातिशयं प्रीतो बभूवेत्यादिपौराणिकी वार्त्ता अनुसन्धेया ।

৮০। রঘু, হিমালয়ে অক্ষয়কীর্ত্তি রাখিয়া অবতরণ করিলেন। রাবণকর্তৃক উত্তোলিত কৈলাসপর্ব্বতকে তিনি পরিত্যাগ করিয়াই যেন তাহাকে লজ্জা দিয়া আসিলেন।

**चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः ।**
**तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥ ८१**

८१ अ: । तस्मिन् तीर्णलौहित्ये सति प्राग्ज्योतिषेश्वरः तद्गजालानतां प्राप्तैः कालागुरुद्रुमैः सह चकम्पे ॥ वाच्य—प्राग्ज्योतिषेश्वरेण चकम्पे ।

८१ । तस्मिन् रघौ तीर्णो लौहित्यो नाम नदो येन तस्मिन् तीर्णलौहित्ये सति, प्राग्ज्योतिषाणां जनपदानाम् ईश्वरः तस्य रघोः गजानाम् आलानतां प्राप्तैः कालागुरुद्रुमैः कृष्णागुरुवृक्षैः सह चकम्पे कम्पितवान् ॥

৮১। তিনি লৌহিত্য (ব্রহ্মপুত্র নদ) পার হইলে পর, তাঁহার হস্তিগণের কণ্ঠরজ্জুর আকর্ষণে যেমন তথাকার কালাগুরু বৃক্ষসকল কম্পিত হইতে লাগিল, প্রাগ্জ্যোতিষদেশের অধীশ্বরও তেমনি ( রঘুর ভয়ে ) কম্পিত হইলেন।

**न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम् ।**
**रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥ ८२**

८२ अ: । सः रुद्धार्कम् अधारावर्षदुर्दिनम् अस्य रथवर्त्मरजोऽपि न प्रसेहे, पताकिनीं कुत एव प्रसेहे ॥ वाच्य—तेन न प्रसेहे, पताकिनी प्रसेहे ।

८२ । सः प्राग्ज्योतिषेश्वरः, रुद्धार्कम् आवृतसूर्य्यम्, अधारावर्षञ्च तत् दुर्दिनञ्च धारावृष्टिं विना दुर्दिनीभूतम् अस्य रघोः रथवर्त्मरजः अपि न प्रसेहे, पताकिनीं सेनां कुत एव प्रसेहे ? न कुतोऽपीत्यर्थः ॥

৮২। রঘুর সৈন্যের প্রতাপ সহ্য করা দূরে থাকুক, প্রাগ্জ্যোতিষপতি রঘুর রথোত্থিত ধূলিরাশি দর্শনেই ভয়ে অধীর হইলেন। কেননা, সেই ধূলিরাশি বিনা বর্ষণেই মেঘাচ্ছন্ন দুর্দ্দিনের ন্যায় সূর্য্যমণ্ডল ঢাকিয়া ফেলিয়াছিল।

**तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।**
**भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३**

८३ अ: । कामरूपाणाम् ईशः अत्याखण्डलविक्रमं तं भिन्नकटैर्नागैः भेजे, यैः अन्यान् उपरुरोध ॥ वाच्य—ईशेन…विक्रमः सः भेजे, अन्ये उपरुरुधिरे ।

८३। कामरूपाणां नाम देशानाम् ईशः, अत्याखण्डलवि[illegible] अतीन्द्रपराक्रमं तं रघुं, भिन्नाः स्रवन्मदाः कटाः गण्डाः येषां तैः गजैः साधनैः भेजे, नागान् दत्त्वा शरणं गत इत्यर्थः। कीदृशैर्ना[illegible] यैः अन्यान् रघुव्यतिरिक्तान् नृपान् उपरुरोध पराजितवान्। शूराणा[illegible] शूरो रघुः इति भावः॥

৮৩। কামরূপেশ্বর যে সকল মদমত্ত মাতঙ্গের প্রতাপে অন্যান্য রা[illegible] আক্রমণ করিতেন, এক্ষণে সেই সকল মাতঙ্গ উপহার দিয়া সুরেন্দ্রবিজয়ী শরণাপন্ন হইলেন।

**कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।**

**रत्नपुष्पोपहारेण छायामानर्च्च पादयोः ॥ ८४**

८४ अः। कामरूपेश्वरः हेमपीठाधिदेवतां तस्य पादयोश्छायां रत्नपुष्पोपहारेण आन[illegible] वाच्य—कामरूपेश्वरेण हेमपीठाधिदेवता पादयोश्छाया आनर्च्चे।

८४। कामरूपेश्वरः हेमपीठस्य अधिदेवतां तस्य रघोः पा[illegible] कनकमयपादपीठव्यापिनीं कान्तिं रत्नानि एव पुष्पाणि तेषाम् उप[illegible] समर्पणेन, आनर्च अर्चयामास॥

৮৪। কামরূপেশ্বর, স্বর্ণময় পাদপীঠের অধিষ্ঠাত্রী দেবতাস্বরূপ তদীয় চরণচ্ছা[illegible] রত্নরূপ পুষ্পোপহারে পূজা করিলেন।

**इति जित्वा दिशो जिष्णुर्न्यवर्त्तत रथोद्धतम् ।**

**रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु ॥**

८५ अः। जिष्णुः (सः) इति दिशो जित्वा रथोद्धतं रजः राज्ञां छत्रशून्येषु मौलिषु वि[illegible] न्यवर्त्तत॥ वाच्य—जिष्णुना विश्रामयता न्यवृत्यत।

८५। जिष्णुः जयशीलः। 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्र[illegible] सः रघुः, इति इत्थं दिशः जित्वा, रथैः उद्धूतं रजः, छत्रशून्येषु, रघो[illegible] च्छत्रकत्वादिति भावः। राज्ञां मौलिषु किरीटेषु। "मौलिः कि[illegible] धम्मिल्ले चूड़ाकङ्केलिमूर्द्धजे' इति हैमः। विश्रामयन् संक्रामयन्[illegible] न्यवर्त्तत निवृत्तः॥

৮৫। বিজয়ী রঘু, এইরূপে দিগ্বিজয় করিয়া বিজিত রাজগণের ছত্রশূ[illegible] রথোত্থিত ধূলিজাল সঞ্চারিত করিতে করিতে প্রত্যাগমন করিলেন।

**स विश्वजितमाजह्रे यज्ञं सर्व्वस्वदक्षिणम् ।**

**आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८६**

८६ अ:। स: सर्व्वस्वदक्षिणं विश्वजितं यज्ञम् आजह्रे, सतां वारिमुचामिव आदानं विसर्गाय हि ॥ वाच्य—तेन सर्वस्वदक्षिण: विश्वजित् यज्ञ: आजह्रे, आदानेन (भूयते)।

८६। स: रघु:, सर्वस्वं दक्षिणा यस्य तं सर्वस्वदक्षिणम्। 'विश्वजित् सर्वस्वदक्षिण:' इति श्रुते:। विश्वजितं नाम यज्ञम् आजह्रे आरेभे कृतवान् इत्यर्थ:। युक्तञ्चैतदित्याह—सतां साधूनां, वारिमुचां मेघानाम् इव, आदानम् अर्जनं विसर्गाय त्यागाय हि, पात्रविनियोगाय इत्यर्थ: ॥

৮৬। রঘু, বিশ্বজিৎ নামক মহাযজ্ঞের অনুষ্ঠান করিয়া, দক্ষিণাস্বরূপ সর্ব্বস্ব দান করিলেন; কারণ মেঘ যেমন বর্ষণের জন্যই বারি সঞ্চয় করে, সাধুরাও সেইরূপ দানের জন্যই ধনসঞ্চয় করিয়া থাকেন।

सत्रान्ते सचिवसख: पुरस्क्रियाभि-
र्गुर्वीभि: शमितपराजयव्यलीकान्।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥ ८७

८७ अ:। काकुत्स्थ: सत्रान्ते सचिवसख: (सन्) गुर्वीभि: पुरस्क्रियाभि: शमितपराजयव्यलीकान् चिरविरहोत्सुकावरोधान् राजन्यान् स्वपुरनिवृत्तये अनुमेने ॥ वाच्य—काकुत्स्थेन सचिवसखेन ...व्यलीका:...विरहोत्सुकावरोधा: राजन्या: अनुमेनिरे।

८७। काकुत्स्थ: रघु:, सत्रान्ते यज्ञान्ते। 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमर:। सचिवानाम् अमात्यानां सखा इति सचिवसख: सन्। 'सचिवो भृतकेऽमात्ये' इति हैम:। तेषामत्यन्तानुसरणद्योतनार्थं राज्ञ: सखित्वव्यपदेश:। 'राजाह:सखिभ्यष्टच्' इति टच्। गुर्वीभि: महतीभि:। 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्म्मदेशके' इति हैम:। पुरस्क्रियाभि: पूजाभि: शमितं पराजयेन व्यलीकं दु:खं वैलक्ष्यं वा येषां तान्। 'दु:खे वैलक्ष्ये व्यलीकम्' इति यादव:। चिरविरहेण उत्सुका: उत्कण्ठिता: अवरोधा: अन्त:पुराङ्गना: येषां तान, राज्ञ: अपत्यानि राजन्या: क्षत्रिया: तान्। 'राजश्वशुराद् यत्' इति अपत्यार्थे यत्प्रत्यय:। 'मूर्द्धाभिषिक्तो राजन्यो बाहुज: क्षत्रियो विराट्' इत्यमर:। स्वपुरं प्रति निवृत्तये प्रतिगमनाय अनुमेने अनुज्ञातवान्। प्रहर्षिणी वृत्तमेतत्, तदुक्तम्—'म्नौ ज्रौ गस्त्रिदशयति: प्रहर्षिणीयम्' इति ॥

৮৭। যজ্ঞ সমাপ্ত হইলে, ককুৎস্থ-বংশধর রঘু, মন্ত্রিগণের সহযোগে অশেষ সম্মান প্রদর্শনপূর্ব্বক পরাজিত রাজগণের পরাভবজনিত মনঃক্ষোভ নিবারণ করিলেন; সেই রাজগণের দীর্ঘকাল অদর্শনে তাঁহাদের অন্তঃপুরবাসিনী পত্নীরা নিতান্ত কাতর হইয়া-

ছিলেন ; অতএব তিনি সেই রাজগণকে স্ব স্ব রাজধানীতে ফিরিয়া যাইতে প্রদান করিলেন।

ते रेखाध्वजकुलिशातपत्रचिह्नं
सम्राजश्चरणयुगं प्रसादलभ्यम्।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रु-
र्मौलिस्रक्च्युतमकरन्दरेणुगौरम्॥ ৮৮

इति श्रीमहाकविकालिदासकृतौ रघुवंशे चतुर्थः सर्गः।

৮৮ अ.। ते रेखाध्वजकुलिशातपत्रचिह्नं, प्रसादलभ्यं सम्राजः चरणयुगम् अङ्गुलीषु प्र... प्रणतिभिः मौलिस्रक्च्युतमकरन्दरेणुगौरं चक्रुः॥ वाच्य—तैः...चिह्नं प्रसादलभ्यं च... गौरं चक्रे॥

৮৮। ते राजानः रेखाः एव ध्वजाश्च कुलिशानि च आतपत्राणि... ध्वजाद्याकाररेखा इत्यर्थः, तानि चिह्नानि यस्य तत् तथोक्तं, प्रसा... लभ्यं प्रसादलभ्यं सम्राजः सार्वभौमस्य रघोः चरणयुगं, प्रस्थाने प्र... समये याः प्रणतयः नमस्काराः ताभिः करणैः अङ्गुलीषु, मौलिषु... बन्धनेषु याः स्रजः माल्यानि ताभ्यश्च्युतैः मकरन्दैः पुष्परसैः। 'मक... पुष्परसः' इत्यमरः। रेणुभिः परागैश्च। 'परागः सुमनोरजः' इत्य... गौरं गौरवर्णं चक्रुः। वृत्तमुक्तं प्राक्॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवि...
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये रघुदिग्विजयो नाम चतुर्थः सर्गः॥ ४

৮৮। রাজগণ, রঘুর ধ্বজ, বজ্র ও ছত্রের রেখায় অঙ্কিত, প্রসাদ-লভ্য চর... বিদায়কালে প্রণত হইতে লাগিলেন ; তৎকালে তাঁহাদের মস্তকস্থিত পুষ্পমালা... মকরন্দ ও পরাগ পতিত হইয়া মহারাজের চরণযুগলকে সুরঞ্জিত করিল।

চতুর্থ সর্গ সমাপ্ত॥ ৪

---

## पञ्चमः सर्गः।

—∞⁂∞—

तमध्वरे विश्वजिति क्षितीशं
निःशेषविश्राणितकोषजातम्।
उपात्तविद्यो गुरुदक्षिणार्थी
कौत्सः प्रपेदे वरतन्तुशिष्यः॥ १

१ अ:। विश्वजिति अध्वरे निःशेषविश्राणितकोषजातं तं क्षितीशम् उपात्तविद्यो वरतन्तुशिष्यः
ः गुरुदक्षिणार्थी प्रपेदे॥ वाच्य—...कोशजातः सः क्षितीशः उपात्तविद्येन वरतन्तुशिष्येण गुरु-
णार्थिना कौत्सेन प्रपेदे।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम्।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम्॥

१। विश्वजिति विश्वजिन्नाम्नि अध्वरे यज्ञे। 'यज्ञः सवोऽध्वरो
ग:' इत्यमरः। निःशेषं विश्राणितं दत्तम्। 'श्रण दाने' चुरादिः।
षाणाम् अर्थराशीनां जातं समूहः येन तं तथोक्तम्। 'कोषोऽस्त्री
ड्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः। 'जातं जनिसमूहयोः' इति
श्वतः। एतेन कौत्सस्यानवसरप्राप्तिं सूचयति। तं क्षितीशं रघुम्,
पात्तविद्यः लब्धविद्यः वरतन्तोः शिष्यः कौत्सः। 'ऋष्यन्धक' इत्यण्
ोऽपवादः। गुरुदक्षिणार्थी। 'पुष्करादिभ्यो देशे' इत्यत्र 'अर्थाच्चा-
न्निहिते तदन्ताच्च' इतीनिः अप्रत्याख्येय इति भावः। प्रपेदे प्राप।
स्मिन् सर्गे प्रायो वृत्तमुपजातिः। तल्लक्षणन्तु—'स्यादिन्द्रवज्रा यदि तौ
गौ गः'। 'उपेन्द्रवज्रा जतजास्ततो गौ'। 'अनन्तरोदीरितलक्ष्मभाजौ
दौ यदीयावुपजातयस्ताः'। इति॥

১। পৃথ্বীশ্বর রঘু, বিশ্বজিৎ যজ্ঞে দান করিয়া সর্ব্বস্ব নিঃশেষিত করিলে পর,
তন্তু মুনির শিষ্য কৌৎস, গুরুর নিকট বিদ্যালাভ করিয়া গুরুদক্ষিণা-সংগ্রহের
মিত্ত তাঁহার নিকট উপস্থিত হইলেন।

स मृन्मये वीतहिरण्मयत्वात् पात्रे निधायार्घ्यमनर्घशीलः।
तप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः॥ २

४ अ:। हे कुशाग्रबुद्धे ! मन्त्रकृताम् ऋषीणाम् अग्रणीः ते गुरुः कुशली अपि ? यतस्त्वया अशेषं ज्ञानं लोकेन उष्णरश्मेश्चैतन्यमिव आप्तम् ॥ वाच्य—अग्रण्या गुरुणा कुशलिना ( भूयते ) जीवलोक इव त्वम् आप्तवान् ।

४। हे कुशाग्रबुद्धे ! सूक्ष्मबुद्धे ! 'कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान्' इति हलायुधः। मन्त्रकृतां मन्त्रस्रष्टृणाम्। 'सुकर्म्मपापमन्त्र' इत्यादिना क्विप्। ऋषीणाम् अग्रणीः श्रेष्ठः ते तव गुरुः, कुशली अपि ? क्षेमवान् किम् ? अपि प्रश्ने। 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः। यतः यस्मात् गुरोः सकाशात् त्वया अशेषं ज्ञानं, लोकेन उष्णरश्मेः सूर्य्यात् चैतन्यं प्रबोध इव, आप्तं स्वीकृतम् ॥

৪। হে সূক্ষ্মবুদ্ধে ! জীবলোক যেমন সূর্য্য হইতে চেতনা লাভ করে, তেমনি আপনি যাঁহা হইতে সমস্ত জ্ঞান লাভ করিয়াছেন, সেই মন্ত্রপ্রণেতা ঋষিগণের অগ্রগণ্য আপনীয় গুরুদেব কুশলে আছেন ত ?।

कायेन वाचा मनसापि शश्वत् यत् संभृतं वासवधैर्य्यलोपि ।
आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥५

५ अ:। कायेन वाचा मनसापि वासवधैर्य्यलोपि यत् शश्वत् सम्भृतं ( भवति ), महर्षेः त्रिविधं तत् तपः अन्तरायैः व्ययं न आपाद्यते कच्चित् ? ॥ वाच्य—...लोपिना येन सम्भृतेन ( भूयते ) त्रिविधेन तपसा व्ययः न आपाद्यते ।

५। कायेन उपवासादिकृच्छ्रचान्द्रायणादिना, वाचा वेदपाठेन, मनसा गायत्रीजपादिना, कायेन वाचा मनसापि करणेन वासवस्य इन्द्रस्य धैर्य्यम् लुम्पतीति वासवधैर्य्यलोपि स्वपदापहारशङ्काजनकमित्यर्थः। यत् तपः शश्वत् असकृत्। 'मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः' इत्यमरः। सम्भृतं सञ्चितं, महर्षेः वरतन्तोः त्रिविधं वाङ्मनःकायजं तत् तपः अन्तरायैः विघ्नैः इन्द्रप्रेरिताप्सरःशापैः व्ययं नाशं न आपाद्यते। कच्चित् ? न नीयते किम् ? 'कच्चित् कामप्रवेदने' इत्यमरः ॥

৫। মহর্ষি নিরন্তর শরীর বাক্য ও মন দ্বারা যে তপঃসঞ্চয় করিতেছেন, যাঁহার প্রভাবে ইন্দ্রকেও অধীর হইতে হয়, তাঁহার সেই ত্রিবিধ তপস্যা কোনও বিঘ্ন দ্বারা নষ্ট হইতেছে না ত ?।

आधारबन्धप्रमुखैः प्रयत्नैः संवर्द्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ ६

६ अ:। आधारबन्धप्रमुखैः प्रयत्नैः सुतनिर्विशेषं संवर्द्धितानां श्रमच्छिदां वः आश्रमपादपानां वाय्वादिः उपप्लवः न कच्चित् ॥ वाच्य—वाय्वादिना उपप्लवेन न ( भूयते )।

६ । आधारबन्धप्रमुखैः आलबालनिर्म्माणादिभिः प्रयत्नैः
'आधार आलबालेऽम्बुबन्धेऽधिकरणेऽपि च' इति विश्वः । सुतेभ्य
विशेषः अतिशयः यस्मिन् कर्म्मणि तत् तथा संवर्द्धितानां युष्मदा
आश्रमपादपानां वाय्वादिः आदिशब्दाद् दावानलादिरुपप्लवो बाध
कच्चित् ? नास्ति किम् ? ॥

৬। আপনাদের আলবাল নির্ম্মাণ প্রভৃতি প্রযত্ন-পরম্পরায় পুত্রনির্ব্বিশেষে
বর্দ্ধিত, শ্রমাপহারী, আশ্রমতরুগণ বায়ুদাবানলাদি উপপ্লবে উৎপীড়িত হয় নাই

**क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कु**
**तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसू**

७ अः । क्रियानिमित्तेष्वपि कुशेषु मुनिभिः वत्सलत्वात् अभग्नकामा तदङ्कशय्याच्युतनाभि
मृगीणां प्रसूतिः अनघा कच्चित् ॥ वाच्य—अभग्नकामया...नाभिनालया प्रसूत्या अनघया (भूयते

७ । क्रियानिमित्तेषु अपि अनुष्ठानसाधनेषु अपि कुशेषु मु
वत्सलत्वात् मृगस्नेहात् अभग्नकामा अप्रतिहतेच्छा, तेषां मुनीनाम्
एव शय्याः ताम् च्युतानि नाभिनालानि यस्याः सा तथोक्ताः, मृ
प्रसूतिः सन्ततिः, अनघा अव्यसना कच्चित् ? अनपायिनी किम् ? इ
'दुःखैनोव्यसनेष्वघम्' इति यादवः । ते हि व्यालभयाद्दशरात्रमङ्के
धारयन्ति ॥

৭। যজ্ঞীয় কুশ ভক্ষণ করিতে গেলেও, মুনিগণ বাৎসল্যবশতঃ যাহাদের তে
চ্ছার ব্যাঘাত করেন না এবং যাহাদের নাভিস্থিত নাড়ী মুনিগণের ক্রোড়
স্খলিত হয়, সেই সকল মৃগশিশুর কুশল ত ?।

**निर्वर्त्यते यैर्नियमाभिषेको**
**येभ्यो निवापाञ्जलयः पितॄणाम् ।**
**तान्युञ्छषष्ठाङ्कितसैकतानि**
**शिवानि वस्तीर्थजलानि कच्चित् ॥ ८**

८ अः । यैः नियमाभिषेकः निर्वर्त्त्यते, येभ्यः पितॄणां निवापाञ्जलयः ( निर्वर्त्त्यन्ते ),
षष्ठाङ्कितसैकतानि तानि वस्तीर्थजलानि शिवानि कच्चित् ? ॥ वाच्य—नियमाभिषेकम् ...
निवर्त्तयन्ति, ( भवन्तः )...सैकतैः तैः तीर्थजलैः शिवैः ( भूयते ) ।

८ । यैः तीर्थजलैः, नियमाभिषेकः नित्यस्नानादिः निर्वर्त्त्यते नि
द्यते । येभ्यः जलेभ्य उद्धृत्य इति शेषः । पितॄणाम् अग्निष्वात्ता
निवापाञ्जलयः तर्पणाञ्जलयः । 'पितृदानं निवापः स्यात्' इत्यम

निर्वर्त्यन्ते । उञ्छानां प्रकीर्णोद्धृतधान्यानां षष्ठैः षष्ठभागैः पालकत्वात् राजग्राह्यैः अङ्कितानि सैकतानि पुलिनानि येषां तानि तथोक्तानि, वः ष्माकं तानि तीर्थजलानि, शिवानि भद्राणि कच्चित् ? अनुपप्लवानि किम्? त्यर्थः । 'उञ्छो धान्यांशकादानं कणिशाद्यर्जनं शिलम्' इति यादवः । ष्ठाष्टमाभ्यां ञ च्' इति षष्ठशब्दाद् भागार्थे ञ च् प्रत्ययः । अतएवा- रणार्थत्वात् 'पूरणगुण' इत्यादिना न षष्ठीसमासप्रतिषेधः । सिकताः सु सन्ति सैकतानि । 'सिकताशर्कराभ्यां च' इति अण्प्रत्ययः ॥

৮। যাহাদ্বারা আপনাদের নিত্যস্নান ও পিতৃগণের তর্পণার্থ জলাঞ্জলি-প্রদান পন্ন হয়, এবং যাহার পুলিনে আপনারা উঞ্ছধান্যের ষষ্ঠভাগ ( রাজোদ্দেশে ) কররূপে ক্ষেপ করিয়া থাকেন, আপনাদের সেই তীর্থজলের কোনও বিঘ্ন ঘটে নাই ত ?।

वारपाकादि कडङ्गरीयैरामृश्यते जानपदैर्न कच्चित् ।
लोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥९

९ अ: । कालोपपन्नातिथिकल्प्यभागं वन्यं वः शरीरस्थितिसाधनं नीवारपाकादि जानपदैः कडङ्गरीयैः न आमृश्यते कच्चित् ? ॥ वाच्य—जानपदाः कडङ्गरीयाः न आमर्शन्ति ।

९। कालेषु योग्यकालेषु, उपपन्नानाम् आगतानाम् अतिथीनां, ल्प्याः भागाः यस्य तत् तथोक्तं, वने भवं वन्यं शरीरस्थितेः जीवितस्य धनं वः युष्माकम् । पच्यते इति पाकः फलं धान्यमिति यावत् । नीवार- काादि । आदिशब्द श्यामाकादिधान्यसंग्रहः । जनपदेभ्यः आगतैः नपदैः । 'तत आगतः' इत्यण् । कडङ्गरीयैः कडङ्गरं बुषम् अर्हन्तीति ड़ङ्गरीयाः । 'कडङ्गरो बुषं क्लीवे धान्यत्वचि तुषः पुमान्' इत्यमरः । कडङ्गरदक्षिणाच्छ च' इति छप्रत्ययः । तैः गोमहिषादिभिः नामृश्यते च्चित् ? न भक्ष्यते किम् ? इत्यर्थः ॥

৯। যে ধান্যাদি দ্বারা যথাকালে অভ্যাগত অতিথিগণের সৎকার নির্ব্বাহ হয়, বং যাহা আপনাদের শরীররক্ষার উপায়, শস্যভোজী গ্রাম্য জন্তুরা আসিয়া সেই কল বন্য নীবারাদি ধান্য ভক্ষণ করে না ত ?।

पि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय ।
लो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥१०

१० अ: । त्वं महर्षिणा प्रसन्नेन सता सम्यक् विनीय गृहाय अनुमतः अपि ? हि ( यस्मात् ) ते र्वोपकारक्षमम् आश्रमं संक्रमितुम् अयं कालः ॥ वाच्य—त्वया अनुमतेन, अनेन कालेन (भूयते) ।

१०। किञ्च । त्वं प्रसन्नेन सता महर्षिणा सम्यक् विनीय शिक्षयित्वा द्यामुपदिश्य इत्यर्थः, गृहाय गृहस्थाश्रमं प्रवेष्टुम् । 'क्रियार्थोपपदं'—

इत्यादिना चतुर्थी। अनुमतः अपि? अनुज्ञातः किम्? हि
ते तव, सर्वेषाम् आश्रमाणां ब्रह्मचर्य्यवानप्रस्थयतीनाम् उपका
शक्तम्। 'क्षमं शक्ते हिते त्रिषु' इत्यमरः। द्वितीयम् आश्रमं गा
संक्रमितुं प्राप्तुम्, अयं कालः। विद्याग्रहणानन्तर्य्यात् तस्य इति
'कालसमयवेलासु तुमुन्' इति तुमुन्। सर्वोपकारक्षममित्यत्र
'यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। वर्त्तन्ते गृहि
आश्रित्येतर आश्रमाः॥' इति॥

১০। মহর্ষি, প্রসন্নহৃদয়ে যথোচিত বিদ্যাদানপূর্ব্বক আপনাকে গৃহস্থা
আজ্ঞা দিয়াছেন ত? কারণ, সকলের উপকারসাধনযোগ্য গৃহস্থাশ্রমে প্রবেশ
ইহাই আপনার উপযুক্ত সময়।

तवार्हतो नाभिगमेन तृप्तं
मनो नियोगक्रिययोत्सुकं मे।
अप्याज्ञया शासितुरात्मना वा
प्राप्तोऽसि सम्भावयितुं वनान्माम्॥ ११

११ अः। अर्हतस्तव अभिगमेन मे मनः न तृप्तं, किन्तु नियोगक्रियया उत्सुकम्,
आज्ञया अपि आत्मना वा मां सम्भावयितुं वनात् प्राप्तोऽसि?॥ वाच्य—मनसा न तृप्ते
सुकेन, भवता प्राप्तेन भूयते।

११। कुशलप्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह—त
अर्हतः पूज्यस्य प्रशस्तस्य। 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः।
अभिगमनेन आगमनमात्रेण मे मनः न तृप्तं न तुष्टं, किन्तु, नि
क्रियया आज्ञाकरणेन उत्सुकं सोत्कण्ठम्। 'इष्टार्थोद्युक्त उत्सुकः'
मरः। 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया। शा
गुरोः आज्ञया, अपि आत्मना स्वतो वा। 'प्रकृत्यादिभ्य उपसं
इति तृतीया। मां सम्भावयितुं वनात् प्राप्तोऽसि? गुर्वर्थं स्वार्थं वा
मनम्? इत्यर्थः॥

১১। ভবাদৃশ পূজ্য ব্যক্তির কেবলমাত্র আগমনে আমার মন পরিতৃপ্ত হ
না, আপনার কোনও আদেশ পালন করিতে উৎসুক হইতেছে; আপনি কি
দেবের আজ্ঞায়, না স্বতঃপ্রবৃত্ত হইয়াই কোনও ভারার্পণ করিয়া আমাকে
করিবার জন্য বন হইতে আগমন করিয়াছেন?।

इत्यर्घपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य
स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्वरतन्तुशिष्यः

१२ अ: । अर्घ्यपात्रानुमितव्ययस्य रघोः इति उदारामपि गां निशम्य वरतन्तुशिष्यः स्वार्थोपपत्तिं प्रति दुर्बलाशः ( सन् ) तम् इति अवोचत् ॥ वाच्य—वरतन्तुशिष्येण दुर्बलाशेन स अवाचि ।

१२ । अर्घ्यपात्रेण मृन्मयेन अनुमितः व्ययः सर्वस्वत्यागः यस्य तस्य रघोः, इति उक्तप्रकाराम् उदाराम् औदार्य्ययुक्ताम् अपि गां वाचं, 'मनोनियोगक्रिययोत्सुकं मे' इत्येवंरूपाम् । 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लच्यदृष्ट्योः स्त्रियां पुंसि गौः' इत्यमरः । निशम्य श्रुत्वा, वरतन्तुशिष्यः कौत्सः स्वार्थोपपत्तिं स्वकार्य्यसिद्धिं प्रति दुर्बलाशः सन्, मृन्मयपात्रदर्शनात् शिथिलमनोरथः सन्, तं रघुम् इति वच्यमाणप्रकारेण अवोचत् ॥

১২। বরতন্তু-শিষ্য কৌৎস, মৃন্ময় অর্ঘ্যপাত্র দর্শনেই রঘু যে সর্ব্বস্ব দান করিয়াছেন তাহা বুঝিতে পারিয়াছিলেন, এজন্য তিনি রঘুর তাদৃশ উদারবাক্যশ্রবণেও অভিলাষ সিদ্ধিবিষয়ে হতাশ হইয়া, তাঁহাকে এই কথা বলিলেন।

सर्वत्र नो वार्त्तमवेहि राजन्
नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्य्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥ १३

१३ अ: । हे राजन् ! नः सर्व्वत्र वार्त्तम् अवेहि, त्वयि नाथे सति प्रजानाम् अशुभं कुतः, सूर्य्ये तपति सति तमिस्रा लोकस्य दृष्टेः आवरणाय कथं कल्पेत ॥ वाच्य—अवेयतां ( त्वया ) —अशुभेन तमिस्रया कल्प्येत ।

१३ । हे राजन् ! त्वं, सर्व्वत्र नः अस्माकं वार्त्तं स्वास्थ्यम् अवेहि जानीहि । 'वार्त्तं वल्गु न्यरोगि च' इत्यमरः । 'वार्त्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्' इति यादवः । न चैतदाश्चर्य्यमित्याह—नाथ इति । त्वयि नाथे ईश्वरे सति प्रजानाम् अशुभं दुःखं कुतः ? तथाहि—अर्थान्तरं न्यस्यति सूर्य्य इत्यादिना । सूर्य्ये तपति प्रकाशमाने सति, तमिस्रा तमस्ततिः । 'तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततौ । कृष्णपचनिशायां च' इति विश्वः । 'तमिस्रम्' इति पाठे तमिस्रं तिमिरम् 'तमिस्रं तिमिरं तमः' इत्यमरः । लोकस्य जनस्य । 'लोकस्तु भुवने जने' इत्यमरः । दृष्टेः आवरणाय कथं कल्पेत ? दृष्टिमावरितुं नालमित्यर्थः । कृपेरलमर्थत्वात् तद्योगे 'नमःस्वस्ति' इत्यादिना चतुर्थी । अलमिति पर्य्याप्त्यर्थग्रहणमिति भगवान् भाष्यकारः । कल्पेत सम्पद्येत इत्यर्थः, कृपि सम्पद्यमाने चतुर्थीति वक्तव्यात् ॥

১৩। মহারাজ! সকল বিষয়েই আমাদের মঙ্গল জানিবেন; আপনি অধীশ্বর

থাকিতে প্রজা সকলের অমঙ্গলের সম্ভাবনা কোথায়? সূর্য্যদেব প্রকাশমান থা[illegible]
অন্ধকার কি লোকের দৃষ্টি আচ্ছন্ন করিতে পারে?।

भक्तिः प्रतीच्येषु कुलोचिता ते
पूर्व्वान् महाभाग तयातिशेषे ।
व्यतीतकालस्त्वहमभ्युपेत-
स्त्वामर्थिभावादिति मे विषादः ॥ १४

१४ अ: । हे महाभाग ! प्रतीच्येषु भक्तिः ते कुलोचिता, ( त्वम् ) तया पूर्व्वान् अ[illegible] अहन्तु व्यतीतकालः सन् अर्थिभावात् त्वाम् अभ्युपेतः इति मे विषादः ॥ वाच्य—भक्त्या कुलो[illegible] (भूयते) पूर्वे अतिशय्यन्ते ( त्वया ) मया व्यतीतकालेन अभ्युपेतेन इति मे विषादेन ( भूयते )।

१४ । 'तवार्हतः' इत्यादिनोक्तं यत् तन्न चित्रमित्याह—भक्तिरिति[illegible] प्रतीच्येषु पूज्येषु । 'पूज्यः प्रतीच्यः' इत्यमरः । भक्तिः अनुरागविशेषः, तव कुलोचिता कुलाभ्यस्ता । 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति याद[illegible] हे महाभाग ! सार्व्वभौम ! तया भक्त्या पूर्व्वान् अतिशेषे अतिवर्त्त[illegible] किन्तु, सर्व्वत्र वार्त्तं चेत् तर्हि कथं खेदखिन्न इव दृश्यसे ? अत आह[illegible] व्यतीतेति । अहं व्यतीतकालः अतिक्रान्तकालः सन्, अर्थिभावात् [illegible] अभ्युपेतः, इति मे विषादः ॥

১৪। পূজ্যগণের প্রতি ভক্তিপ্রদর্শন আপনাদের কুলব্রত; হে মহাভাগ! এ[illegible] আপনি আপনার পূর্ব্বপুরুষগণকেও অতিক্রম করিয়াছেন; কিন্তু আমি এই অ[illegible] আপনার নিকট অর্থী হইয়া আসিয়াছি, আমার এইমাত্র দুঃখ।

शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥

१५ अ: । हे नरेन्द्र ! तीर्थप्रतिपादितर्द्धिः शरीरमात्रेण तिष्ठन् ( त्वम् ) आरण्यकोपात्त[illegible] प्रसूतिः स्तम्बेन अवशिष्टः नीवार इव आभासि ॥ वाच्य—पादितर्द्धिना तिष्ठता...प्रसूतिना अव[illegible] नीवारेण इव आभायते ।

१५ । हे नरेन्द्र ! तीर्थे सत्पात्रे प्रतिपादिता दत्ता ऋद्धिः येन [illegible] तथोक्तः । 'योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि । पुण्यक्षेत्रे त[illegible] पात्रे तीर्थं स्याद्दर्शनेष्वपि' । इति हलायुधः । शरीरमात्रेण तिष्ठ[illegible] आरण्यकाः अरण्ये भवाः मनुष्याः मुनिप्रमुखाः । 'अरण्यान्मनुष्ये' इति [illegible] वुञ्प्रत्ययः, तैः उपात्ता फलम् एव प्रसूतिर्यस्य सः स्तम्बेन काण्डेन अव[illegible]शिष्टः । प्रकृत्यर्थहिलात [illegible] । [illegible] इव आभासि शोभसे ॥

১৫। হে নরেন্দ্র! আপনার কেবল দেহমাত্র অবশিষ্ট আছে, আর সকল সৎপাত্রে দান করিয়াছেন। অরণ্যবাসীরা নীবারের সমস্ত শস্য চয়ন করিলে, তাহা যেমন দণ্ডমাত্রেই অবশিষ্ট থাকে, সর্ব্বস্ব দান করিয়া আপনিও সেইরূপ অবস্থান করিতেছেন।

**স্থানে ভবানেকনরাধিপঃ সন্**
**অকিঞ্চনত্বং মখজং ব্যনক্তি।**
**পর্য্যায়পীতস্য সুরৈর্হিমাংশোঃ**
**কলাক্ষয়ঃ শ্লাঘ্যতরো হি বৃদ্ধেঃ॥ ১৬**

১৬ অঃ। ভবান্ একনরাধিপঃ সন্ মখজম্ অকিঞ্চনত্বং ব্যনক্তি স্থানে, তথাহি সুরৈঃ পর্য্যায়পীতস্য হিমাংশোঃ কলাক্ষয়ঃ বৃদ্ধেঃ শ্লাঘ্যতরঃ॥ বাচ্য—ভবতা একনরাধিপেন সতা ব্যজ্যতে, ...ক্ষয়েণ শ্লাঘ্যতরেণ (ভূয়তে)।

১৬। ভবান্ একনরাধিপঃ সার্ব্বভৌমঃ সন্, মখজং মখজন্যং, ন বিদ্যতে কিঞ্চন যস্য ইতি অকিঞ্চনঃ। ময়ূরব্যংসকাদিত্বাৎ তৎপুরুষঃ। তস্য ...ভাবঃ তত্ত্বং নির্ধনত্বং ব্যনক্তি প্রকটয়তি স্থানে যুক্তম্। 'যুক্তে দ্বে সাম্প্রতং স্থানে' ইত্যমরঃ। তথাহি—সুরৈর্দেবৈঃ পর্য্যায়েণ ক্রমেণ পীতস্য হিমাংশোঃ ...কলাক্ষয়ঃ বৃদ্ধেঃ উপচয়াৎ শ্লাঘ্যতরঃ হি বরঃ খলু। 'মণিঃ শাণোল্লীঢ়ঃ ...মরবিজয়ী হেতিনিহতো, মদক্ষীণো নাগঃ শরদি সরিতঃ শ্যানপুলিনাঃ। ...কলাশেষশ্চন্দ্রঃ সুরতমৃদিতা বালবনিতা, তনিম্না শোভন্তে গলিতবিভবা-...র্থিষু নৃপাঃ'॥ ইতি ভাবঃ। অত্র কামন্দকঃ—'ধর্মার্থে ক্ষীণকোষস্য ...ক্ষীণত্বমপি শোভতে। সুরৈঃ পীতাবশেষস্য কৃষ্ণপক্ষে বিধোরিব॥' ইতি॥

১৬। আপনি পৃথিবীর অদ্বিতীয় অধীশ্বর হইয়া, যজ্ঞে সর্ব্বস্ব দানপূর্ব্বক যে ...ধনতা প্রাপ্ত হইয়াছেন, তাহা আপনার উপযুক্তই হইয়াছে; দেবতারা চন্দ্রের এক ...ক কলা করিয়া পর্য্যায়ক্রমে পান করায় চন্দ্রমার যে হ্রাস হয়, তাহা তাঁহার বৃদ্ধি ...পেক্ষা প্রশংসনীয়।

**তদন্যতস্তাবদনন্যকার্য্যো**
**গুর্বর্থমাহর্ত্তুমহং যতিষ্যে।**
**স্বস্ত্যস্তু তে নির্গলিতাম্বুগর্ভং**
**শরদ্ঘনং নার্দতি চাতকোঽপি॥ ১৭**

১৭ অঃ। তৎ তাবৎ অনন্যকার্য্যঃ সন্ অহম্ অন্যতঃ গুর্ব্বর্থম্ আহর্ত্তুং যতিষ্যে, তে স্বস্তি ...চাতকোঽপি নির্গলিতাম্বুগর্ভং শরদ্ঘনং ন অর্দতি॥ বাচ্য—অনন্যকার্য্যেণ ময়া যতিষ্যতে, ...নাং, চাতকেনাপি...অম্বুগর্ভঃ শরদ্ঘনঃ ন অর্দ্যতে।

१७। तत् तस्मात् तावत् अनन्यकार्य्यः। 'यावत् तावच्च साक ऽवधौ मानेऽवधारणे' इति विश्वः। प्रयोजनान्तररहितः अहम्, अ वदान्यान्तरात् गुर्वर्थं गुरुधनम् आहर्त्तुम् अर्जयितुं यतिष्ये उद्यो तुभ्यं स्वस्ति शुभमस्तु। 'नमःस्वस्ति' इत्यादिना चतुर्थी। तथा चातकोऽपि, 'धरणीपतितं तोयं चातकानां रुजाकरम्' इति हेतोः, अ गतिकोऽपि इत्यर्थः। निर्गलितः अम्बु एव गर्भः यस्य तं शरद अर्दति न याचते। 'अर्द गतौ याचने च' इति धातुः 'याचनार्थं ऽर्द्दनम्' इति यादवः॥

১৭। আমার অন্য কোন প্রয়োজন নাই, অতএব আমি অন্য আর কাহার হইতে গুরুদক্ষিণার্থ অর্থসংগ্রহ করিতে চেষ্টা করিব? আপনার মঙ্গল হউক, শূন্যগর্ভ শরৎকালীন মেঘের নিকট চাতকও বারিপ্রার্থনা করে না।

एतावदुक्त्वा प्रतियातुकामं
शिष्यं महर्षेर्नृपतिर्निषिध्य।
किं वस्तु विद्वन् गुरवे प्रदेयं
त्वया कियद्वेति तमन्वयुङ्क्त॥ १८

१८ अः। एतावत् उक्त्वा प्रतियातुकामं तं महर्षेः शिष्यं निषिध्य नृपतिः, हे विद्वन् गुरवे प्रदेयं किं वस्तु कियद्वा, इत्यन्वयुङ्क्त॥ वाच्य—नृपतिना प्रदेयेन कियता वस्तुना इति अन्वयुज्यत।

१८। एतावत् वाक्यम् उक्त्वा प्रतियातुं कामः यस्य तं प्रतियातु गन्तुकामम्। 'तुम् काममनसोरपि' इति मकारलोपः। महर्षे तन्तोः शिष्यं कौत्सं, नृपतिः रघुः, निषिध्य निवार्य्य, हे विद्वन्! गुरवे प्रदेयं वस्तु किं किमात्मकं, कियत् किंपरिमाणं वा? इति कौत्सम् अन्वयुङ्क्त अपृच्छत्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः॥

১৮। বরতন্তু শিষ্য কৌৎস এই কথা বলিয়া গমনোদ্যত হইলে, রাজা তাঁহার গমনে বাধা দিয়া জিজ্ঞাসা করিলেন, হে বিদ্বন্! আপনার গুরু দ্রব্য দিতে হইবে এবং তাহার পরিমাণই বা কত?।

ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिता
वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे।

१९ अः। ततो यथावत् विहिताध्वराय स्मयावेशविवर्जिताय वर्णाश्रमाणां गुरवे तस्मै विचक्षणः वर्णी सः (कौत्सः) प्रस्तुतम् आचचक्षे॥ वाच्य—विचक्षणेन वर्णिना तेन आचचक्षे

१९। ततः यथावत् यथार्हम्। अर्हार्थे वतिः। विहिताध्वराय विधिवत् अनुष्ठितयज्ञाय सदाचाराय इत्यर्थः। स्मयावेशविवर्जिताय गर्वाभिनिवेशशून्याय अनुद्धताय इत्यर्थः। वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्य्यादीनाञ्च गुरवे नियामकाय। 'वर्णाः स्युर्ब्राह्मणादयः' इति 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये'। 'आश्रमोऽस्त्री' इति च अमरः। सर्वकार्य्यनिर्वाहकाय इत्यर्थः। तस्मै रघवे, विचक्षणः विद्वान् वर्णी ब्रह्मचारी। 'वर्णिनो ब्रह्मचारिणः' इत्यमरः। 'वर्णाद् ब्रह्मचारिणि' इति इनिप्रत्ययः। सः कौत्सः, प्रस्तुतं प्रकृतम् आचचक्षे॥

১৯। অতঃপর সেই বিদ্বান্ ব্রহ্মচারী কৌৎস, অহঙ্কারবিরহিত যথাবিধি যজ্ঞের অনুষ্ঠানকারী এবং বর্ণ ও আশ্রম সকলের রক্ষক নৃপতিকে প্রকৃত কথা নিবেদন করিতে লাগিলেন।

समाप्तविद्येन मया महर्षि-
र्विज्ञापितोऽभूद्गुरुदक्षिणायै।
स मे चिरायास्खलितोपचारां
तां भक्तिमेवागणयत् पुरस्तात्॥ २०

२० अ:। समाप्तविद्येन मया महर्षिः गुरुदक्षिणायै विज्ञापितः अभूत्। स च चिराय अस्खलितोपचारां तां मे भक्तिं पुरस्तात् अगणयत्, यद्वा स च चिराय अस्खलितोपचारां मे भक्तिं पुरस्तात् तामेव अगणयत्॥ वाच्य—महर्षिणा विज्ञापितेन अभावि, तेन च...पचारा सा भक्तिः अगण्यत।

२०। समाप्तविद्येन मया, महर्षिः गुरुदक्षिणायै गुरुदक्षिणास्वीकारार्थं, विज्ञापितः अभूत्। स च गुरुः, चिराय अस्खलितोपचारां तां दुष्करां मे भक्तिम् एव पुरस्तात् प्रथमम् अगणयत् संख्यातवान्। 'भक्त्यैव सन्तुष्टः, किं दक्षिणया' इत्युक्तवानित्यर्थः। अथवा भक्तिम् एव तां दक्षिणाम् अगणयत् इति योज्यम्॥

২০। আমি অধ্যয়ন সমাপন করিয়া, মহর্ষিকে গুরুদক্ষিণা দিবার প্রার্থনা করিলে, আমি যে ভক্তি দ্বারা বহুদিন অবিচলিতভাবে তাঁহার সেবা করিয়াছিলাম, তিনি প্রথমতঃ আমার সেই ভক্তিকেই ( পর্য্যাপ্ত ) গুরুদক্ষিণা বলিয়া গণ্য করিলেন।

निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति॥२१

२१ अ:। निर्बन्धसञ्जातरुषा गुरुणा अर्थकार्श्यम् अचिन्तयित्वा अहं 'वित्तस्य चतस्रः दश च

कोटीः मे आहर' इति विद्यापरिसंख्यया उक्तः ॥ वाच्य—निर्ब्बन्धसञ्जातरुट् गुरुः मां कोटी... यत्ताम् इति उक्तवान्।

२१। निर्बन्धेन प्रार्थनातिशयेन सञ्जातरुषा सञ्जातक्रोधेन गु... अर्थकार्श्यं दारिद्र्यम् अचिन्तयित्वा अविचार्य्य, अहं वित्तस्य चतस्रः दश च कोटीः चतुर्दश कोटीः मे मह्यम् आहर आनय विद्यापरिसंख्यया विद्यापरिसंख्यानुसारेणैव उक्तः। अत्र मनुः—'अ... वेदास्त्वारो मीमांसा न्यायविस्तरः। पुराणं धर्म्मशास्त्रञ्च विद्या ... स्तुर्दश।' इति ॥

२१। অনন্তর আমি তাঁহাকে গুরুদক্ষিণা দিবার নিমিত্ত নির্ব্বন্ধ জানাইলে তি... হইয়া আমার দারিদ্র্য বিবেচনা না করিয়াই কহিলেন—তুমি যেমন আমার ... চতুর্দ্দশ বিদ্যা শিক্ষা করিয়াছ, তেমনি ( সেই সংখ্যানুসারে ) চতুর্দ্দশ কোটি স্ব... আমায় আনিয়া দাও।

**सोऽहं सपर्य्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेष... अभ्युत्सहे सम्प्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य॥**

२१ अः। सोऽहं सपर्य्याविधिभाजनेन भवन्तं प्रभुशब्दशेषं मत्वा श्रुतनिष्क्रयस्य अल्पेतरत्वात् संप्रति उपरोद्धुम् न अभ्युत्सहे ॥ वाच्य—तेन मया अभ्युत्सह्यते।

२२। सः अहं, सपर्य्याविधिभाजनेन अर्घ्यपात्रेण भवन्तं, प्रभु... एव शेषो यस्य तं मत्वा, निःस्वं निश्चित्य इत्यर्थः। श्रुतनिष्क्रयस्य ... मूल्यस्य अल्पेतरत्वात् अतिमहत्त्वात् सम्प्रति उपरोद्धुं निर्बन्धु... अभ्युत्सहे ॥

२२। কিন্তু সম্প্রতি আমি ভবদীয় অর্ঘ্যপাত্র দর্শনেই বুঝিয়াছি যে, এক্ষণে আ... 'প্রভু' এই নামমাত্রই অবশিষ্ট আছে, আমার গুরুদক্ষিণাও সামান্য নহে; অতএ... বিষয়ে আপনাকে আর অনুরোধ করিতে পারিতেছি না।

**इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण। एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥**

२३ अः। द्विजराजकान्तिः एनोनिवृत्तेन्द्रियवृत्तिः जगदेकनाथः ( रघुः ) वेदविदां वरेण ... इत्थम् आवेदितः एनं भूयो जगाद ॥ वाच्य—...कान्तिना...वृत्तिना...नाथेन आवेदितेन एषः ...

२३। द्विजराजकान्तिः चन्द्रकान्तिः। 'द्विजराजः शशधरो नक्षत्रे... क्षपाकरः' इत्यमरः। 'तस्मात् सोमो राजा नो ब्राह्मणानाम्' इति श्रु... द्विजराजकान्तित्वेनार्थावाप्तिवैराग्यं वारयति। एनसः पापात् नि...

इन्द्रियवृत्तिः यस्य सः जगदेकनाथः रघुः, वेदविदां वरेण श्रेष्ठेन कौत्सेन इत्थम् आवेदितः सन् एनं कौत्सं भूयः पुनः जगाद ॥

২৭। বেদজ্ঞগণের অগ্রগণ্য সেই ব্রাহ্মণ এইরূপ বলিলে, চন্দ্রতুল্য রূপবান্, জিতেন্দ্রিয়, পৃথিবীর অধীশ্বর, মহারাজ রঘু, তাঁহাকে পুনরায় বলিলেন।

**गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम्।**
**गतो वदान्यान्तरमित्ययं मे मा भूत् परीवादनवावतारः॥२४**

२४ अ:। श्रुतपारदृश्वा गुर्व्वर्थम् अर्थी रघोः सकाशात् कामम् अनवाप्य वदान्यान्तरं गतः, इत्ययं मे परीवादनवावतारः मा भूत् ॥ वाच्य—श्रुतपारदृश्वना अर्थिना वदान्यान्तरः गतः, अनेन परीवादनवावतारेण मा भावि।

२४। श्रुतस्य पारं दृष्टवान् श्रुतपारदृश्वा। 'दृशेः क्वनिप्' इति क्वनिप्। गुर्वर्थं गुरुदक्षिणार्थं यथा तथा, अर्थी याचकः। विशेषणद्वयेनापि अस्याप्रत्याख्येयत्वमाह। रघोः सकाशात् कामं मनोरथम् अनवाप्य अप्राप्य वदान्यान्तरं दात्रन्तरं गतः। 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः। इत्येवंरूपः अयं परीवादस्य अपवादस्य नवः नूतनः प्रथमः अवतारः आविर्भावः, मे मा भूत् मा अस्तु। रघोरिति स्वनामग्रहणं सम्भावितत्वद्योतनार्थम्। तथाच—'सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते' इति भावः॥

২৪। শাস্ত্রজ্ঞ ব্রাহ্মণ, রঘুর নিকট গুরুদক্ষিণার প্রার্থনায় আসিয়া, বিফলমনোরথ হইয়া অন্য দাতার নিকট গমন করিয়াছেন, এই নূতন অপবাদ যেন আমার না ঘটে।

**स त्वं प्रशस्ते महिते मदीये**
**वसंश्चतुर्थोऽग्निरिवाग्न्यगारे।**
**द्वित्राण्यहान्यर्हसि सोढुमर्हन्**
**यावद्यते साधयितुं त्वदर्थम् ॥ २५**

२५ अ:। स त्वं महिते प्रशस्ते मदीये अग्न्यगारे चतुर्थः अग्निरिव वसन् द्वित्राणि अहानि सोढुम् अर्हसि, हे अर्हन्! त्वदर्थं यावत् यते॥ वाच्य—तेन त्वया चतुर्थेन अग्निना इव वसता, अर्ह्यते, यत्यते (मया)।

२५। सः त्वं, महिते पूजिते प्रशस्ते प्रसिद्धे मदीये अग्न्यगारे अग्निशालायां, चतुर्थः अग्निः इव, वसन् द्वित्राणि द्वे त्रीणि वा अहानि दिनानि। 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इति बहुव्रीहिः।

'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' इति डच् । सोढुम् अर्हसि, हे मा-
मान्य ! त्वदर्थं तव प्रयोजनम् साधयितु', यावत् यते यतिष्ये ।
पुरानिपातयोर्लट्' इति भविष्यदर्थे लट् ॥

২৫। হে পূজার্হ ! আপনি আমার পূত ও প্রশস্ত হোমশালায় চতুর্থ
ন্যায় অবস্থিতি করিয়া দুই তিন দিবস অপেক্ষা করুন, আমি ইতিমধ্যে ভবদীয় অ-
পূর্ণ করিবার চেষ্টা করিতেছি।

**तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत् सङ्गरमग्रजन्मा ।**
**गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुवेरात् ॥**

२६ अ: । अग्रजन्मा प्रतीतः सन् तस्य अवितथं सङ्गरं तथेति प्रत्यग्रहीत्, रघुरपि ताम्
साराम् अवेक्ष्य कुवेरात् अर्थम् निष्क्रष्टुं चकमे ॥ वाच्य—अग्रजन्मना प्रतीतेन अवितथः
प्रत्यगृह्यत' रघुणा अपि चकमे ।

२६ । अग्रजन्मा ब्राह्मणः, प्रतीतः प्रीतः सन्. तस्य रघोः, अवि-
अमोघं सङ्गरं प्रतिज्ञाम् । 'अथ प्रतिज्ञाजिसंविदापत्सु सङ्गरः' इत्य-
'तां गिरम्' इति केचित् पठन्ति । तथा इति प्रत्यग्रहीत् । रघु-
गां भूमिम् आत्तसारां गृहीतधनाम् अवेक्ष्य, कुवेरात् अर्थं नि-
आहर्तुं चकमे इयेष ॥

২৬। ব্রাহ্মণ আনন্দিত হইয়া 'তথাস্তু' বলিয়া রঘুর সেই অমোঘ প্রতিজ্ঞা
স্বীকার করিলেন ; এদিকে রঘু পৃথিবীর সমস্ত ধন নিঃশেষ করিয়াছেন,
কুবেরের নিকট হইতে অর্থ সংগ্রহ করিতে সঙ্কল্প করিলেন।

**वशिष्ठमन्त्रोक्षणजात् प्रभावादुदन्वदाकाशमहीधरेषु ।**
**मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य ॥**

२७ अ: । वशिष्ठमन्त्रोक्षणजात् प्रभावात् उदन्वदाकाशमहीधरेषु मरुत्सखस्य व-
तद्रथस्य गतिर्न हि विजघ्ने ( केनचिदिति शेषः ) ॥ वाच्य—गतिं न विजघान (कश्चित्) ।

२७ । वसिष्ठस्य यत् मन्त्रेण उक्षणम् अभिमन्त्र्य प्रोक्षणं
प्रभावात् सामर्थ्यात् हेतोः, उदन्वदाकाशमहीधरेषु उदन्वति
आकाशे महीधरेषु वा, मरुत्सखस्य । मरुतः सखा इति तत्पु-
व्रीहौ समासान्ताभावात् । ततो वायुसहायस्येति लभ्यते ।
वाहकः बलाहकः । पृषोदरादित्वात् साधुः । तस्य इव मेघस्य
तद्रथस्य गतिः सञ्चारः न विजघ्ने न विहता हि ॥

২৭। বশিষ্ঠদেবের মন্ত্রপূত অভিষেক প্রভাবে, বায়ুচালিত মেঘের ন্যায়
কি সমুদ্রে, কি আকাশে, কি পর্বতে, কোথাও প্রতিহত হইত না।

**अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम्।**
**सामन्तसम्भावनयैव धीरः कैलासनाथं तरसा जिगीषुः॥२८**

२८ अः। अथ प्रदोषे प्रयतः धीरः रघुः सामन्तसम्भावनया एव कैलासनाथम् तरसा जिगीषुः कल्पितशस्त्रगर्भं रथम् अधिशिश्ये॥ वाच्य—प्रयतेन रघुणा धीरेण जिगीषुणा...गर्भः रथः अधिशिश्ये।

२८। अथ प्रदोषे रजनीमुखे, तत्काले यानाधिरोहणविधानात्। प्रयतः धीरः रघुः, समन्तात् भवः सामन्तः, राजमात्रम् इति सम्भावनया एव कैलासनाथ कुबेरं तरसा बलेन जिगीषुः जेतुमिच्छुः सन्, कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथम् अधिशिश्ये, रथे शयितवानित्यर्थः। 'अधिशीङ्स्थासां कर्म्म' इति कर्म्मत्वम्॥

२৮। অনন্তর অব্যাকুলচিত্ত রঘু, কুবেরকে সামান্য সামন্তের ন্যায় জ্ঞান করিয়া বলপূর্ব্বক জয় করিবার আশায়, যাত্রার পূর্ব্ব দিবস প্রদোষ-সময়ে সংযতচিত্তে সজ্জিত অস্ত্রাদিপরিপূর্ণ রথে শয়ন করিলেন।

**प्रातः प्रयाणाभिमुखाय तस्मै**
**सविस्मयाः कोषगृहे नियुक्ताः॥**
**हिरण्मयीं कोषगृहस्य मध्ये**
**वृष्टिं शशंसुः पतितां नभस्तः॥ २९**

२९ अः। प्रातः प्रयाणाभिमुखाय तस्मै कोषगृहे नियुक्ताः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तः पतितां हिरण्मयीं वृष्टिं शशंसुः॥ वाच्य—नियुक्तैः सविस्मयैः पतिता हिरण्मयी वृष्टिः शशंसे।

२९। प्रातः प्रयाणाभिमुखाय तस्मै रघवे, कोषगृहे नियुक्ताः अधिकृताः भाण्डारिकाः, सविस्मयाः सन्तः, कोषगृहस्य मध्ये नभस्तः नभसः। पञ्चम्यास्तसिल्प्रत्ययः। पतितां हिरण्मयीं सुवर्णमयीम्। 'दाण्डिनायन' इत्यादिना निपातनात् साधुः। वृष्टिं शशंसुः कथयामासुः॥

২৯। তাঁহার যাত্রা করিবার কালেই কোষরক্ষকেরা আসিয়া সবিস্ময়ে সংবাদ দিল—ধনাগারে আকাশ হইতে স্বর্ণ বৃষ্টি হইয়াছে।

**तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात्।**
**दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम्॥३०**

३० अः। भूपतिः अभियास्यमानात् कुबेरात् लब्धं वज्रभिन्नं सुमेरोः पादमिव (स्थितं) तं भासुरहेमराशिं समस्तमेव कौत्साय दिदेश॥ वाच्य—भूपतिना लब्धः वज्रभिन्नः पाद इव स भासुरहेमराशिः समस्तः दिदिशे।

३०। भूपतिः रघुः, अभियास्यमानात् अभिगमिष्यमाणात् कुबे[रात्]
लब्धं, वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्व्वतम् इव, स्थि[तम्]
'पादाः प्रत्यन्तपर्व्वताः' इत्यमरः। 'शृङ्गं सुमेरोः' इति क्वचित् पा[ठः]
तं भासुरं भास्वरम्। 'भञ्जभासमिदो घुरच्' इति घुरच्। हेम[राशिं]
समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ, न तु चतुर्दशकोटिम[ात्र]-
मित्येवकारार्थः॥

৩০। রঘু, যাহার প্রতিকূলে যুদ্ধাভিলাষী হইয়াছিলেন, সেই কুবেরের নি[কট]
হইতে প্রাপ্ত, বজ্রদ্বারা খণ্ডীকৃত সুমেরু পর্ব্বতের প্রত্যন্তপর্ব্বতবৎ রাশীকৃত সু[বর্ণ]
সমস্ত স্বর্বর্ণই কৌৎসকে দান করিলেন।

## जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।
## गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च॥

३१ अः। तौ द्वौ अपि साकेतनिवासिनो जनस्य अभिनन्द्यसत्त्वौ अभूताम्, गुरुप्रदेया[धिक]-
निस्पृहः अर्थी, अर्थिकामात् अधिकप्रदो नृपश्च॥ वाच्य—ताभ्यां द्वाभ्यां...सत्त्वाभ्याम् अ[भूयत]
निस्पृहेण अर्थिना...प्रदेन नृपेण।

३१। तौ अर्थिदातारौ द्वौ अपि, साकेतनिवासिनः अयोध्यावासिन[ः]
'साकेतः स्यादयोध्यायां कोशला (कोसला) नन्दिनी च सा' इति याद[वः]
जनस्य अभिनन्द्यसत्त्वौ स्तुत्यव्यवसायौ अभूताम्। 'द्रव्यासुव्यवसा[येषु]
सत्त्वमस्त्री तु जन्तुषु' इत्यमरः। कौ द्वौ? गुरुप्रदेयात् अधिके अतिरि[क्ते]
द्रव्ये निस्पृहः अर्थी; अर्थिकामात् अर्थिमनोरथात् अधिकं प्रददाती[ति]
तथोक्तः। "प्रेदाज्ञः' इति कप्रत्ययः। नृपश्च॥

৩১। যাচক কৌৎস গুরুদক্ষিণা অপেক্ষা অধিক গ্রহণে অনিচ্ছু এবং রা[জা]
তাঁহাকে প্রার্থনাধিক ধনদানে প্রবৃত্ত, এই দেখিয়া অযোধ্যাবাসী জনগণ তাঁহা[দের]
উভয়েরই চরিত্রের প্রশংসা করিতে লাগিল।

## अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः।
## स्पृशन् करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः॥

३२ अः। प्रीतमनाः महर्षिः कौत्सः संप्रस्थितः सन् उष्ट्रवामीशतवाहितार्थम् आनतपूर्वका[यं]
प्रजेश्वरं करेण स्पृशन् वाचम् उवाच॥ वाच्य—प्रीतमनसा महर्षिणा कौत्सेन संप्रस्थि[तेन]
स्पृशता वाक् ऊचे।

३२। अथ, प्रीतमनाः महर्षिः कौत्सः, संप्रस्थितः प्रस्थास्यमानः सन्
'आशंसायां भूतवच्च' इति भविष्यदर्थे क्तः। उष्ट्राणां क्रमेलकानां वामीना[ं]

वडवानाञ्च धृतैः वाहितार्थं प्रापितधनम् आनतपूर्वकायं विनयनम्रमित्यर्थः ।
राजेश्वरं रघुं करेण स्पृशन् वाचम् उवाच ॥

৩২। অতঃপর রাজা, বহু উষ্ট্র ও ঘোটকী দ্বারা সেই সমস্ত সুবর্ণ প্রেরণপূর্ব্বক প্রস্থানোন্মুখ কৌৎসের চরণে আনতমস্তকে প্রণাম করিলেন, কৌৎসও তৎকালে পুলকিতহৃদয়ে তাঁহাকে কর দ্বারা স্পর্শ করিয়া এই কথা বলিলেন।

**किमत्र चित्रं यदि कामसूर्भू-**
**र्वृत्ते स्थितस्याधिपतेः प्रजानाम् ।**
**अचिन्तनीयस्तु तव प्रभावो**
**मनीषितं द्यौरपि येन दुग्धा ॥ ३३**

३३ अः । वृत्ते स्थितस्य प्रजानाम् अधिपतेः भूः कामसूर्यदि अत्र किं चित्रम्, किन्तु तव प्रभावः अचिन्तनीयः, येन द्यौरपि मनीषितं दुग्धा ॥ वाच्य—भुवा कामस्वा केन चित्रेण, प्रभावेण अचिन्तनीयेन ( भूयते ) यः दिवमपि मनीषितं दुग्धवान् ।

३३। वृत्ते स्थितस्य। 'न्यायेनार्जनमर्थस्य वर्द्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ।' इति कामन्दकः। तस्मिन् वृत्ते स्थितस्य प्रजानाम् अधिपतेः नृपस्य, भूः, कामान् सूते इति कामसूः यदि। 'सत्सूद्विषद्रुह' इत्यादिना क्विप्। अत्र कामप्रसवने किं चित्रं न चित्र-मित्यर्थः। किन्तु तव प्रभावः महिमा अचिन्तनीयः। येन त्वया द्यौः अपि मनीषितम् अभिलषितं दुग्धा। दुहेर्द्विकर्म्मकत्वादप्रधाने कर्म्मणि क्तः। 'प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्म्मणः ॥' इति स्मरणात् ॥

৩৩। মহারাজ! রাজবৃত্তের প্রতিপালক নরপতিগণের নিকট পৃথিবী যে অভীষ্ট প্রদানদায়িনী হইবেন, ইহা আশ্চর্য্য নহে; কিন্তু আপনার প্রভাব অচিন্তনীয়, আপনি স্বর্গ হইতেও অভিলষিত দ্রব্য প্রাপ্ত হইলেন।

**आशास्यमन्यत् पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।**
**पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥३४**

३४ अः। सर्वाणि श्रेयांसि अधिजग्मुषः ते अन्यत् आशास्यं पुनरुक्तभूतम्, किन्तु ईड्यं भवन्तं भवतः पितेव आत्मगुणानुरूपं पुत्रं लभस्व ॥ वाच्य—अन्येन आशास्येन...भूतेन ( भूयते ) ईड्यः भवान् पित्रा आत्मानुरूपः पुत्रः लभ्यताम् ।

३४। सर्वाणि श्रेयांसि शुभानि अधिजग्मुषः प्राप्तवतः ते तव, अन्यत् तद्व्यतिरिक्तम् आशास्यम् आशीःसाध्यम् आशंसनीयं वा पुनरुक्तभूतं सर्व्वं

सिद्धमित्यर्थः। किन्तु इत्थं स्तुत्यं भवन्तं भवतः पिता इव, आत्मानुरूपं त्वया तुल्यगुणमित्यर्थः, पुत्रं लभस्व प्राप्नुहि ॥

৩৪। আপনি সমস্ত সৌভাগ্যই লাভ করিয়াছেন, সুতরাং আপনাকে আ... করা পুনরুক্তিমাত্র; অতএব আশীর্ব্বাদ করি যে, ভবদীয় পিতা যেরূপ ... শ্লাঘ্য পুত্র লাভ করিয়াছিলেন, আপনিও সেইরূপ আপনারই তুল্য গুণবান্ ... লাভ করুন।

इत्थं प्रयुज्याशिषमग्रजन्मा
राज्ञे प्रतीयाय गुरोः सकाशम्।
राजापि लेभे सुतमाशु तस्मा-
दालोकमर्कादिव जीवलोकः ॥ ३५

३५ अः। अग्रजन्मा इत्थं राज्ञे आशिषं प्रयुज्य गुरोः सकाशम् प्रतीयाय, राजापि जी... अर्कात् आलोकमिव, तस्मात् आशु सुतं लेभे ॥ वाच्य—अग्रजन्मना प्रतीये, राज्ञापि जी... आलोक इव सुतः लेभे।

३५। अग्रजन्मा ब्राह्मणः। 'अग्रजन्मा द्विजश्रेष्ठे भ्रातरि ब्र... स्मृतः' इति विश्वः। इत्थं राज्ञे आशिषं प्रयुज्य दत्त्वा गुरोः सकाशं... प्रतीयाय प्राप। राजा अपि जीवलोकः जीवसमूहः। 'जीवः प्रा... गीष्पतौ' इति विश्वः। अर्कात् आलोकं प्रकाशम् इव, 'चैतन्यम्' इति... ज्ञानम् इव, तस्मात् ऋषेः आशु सुतं लेभे प्राप ॥

৩৫। ব্রাহ্মণ, রাজাকে এইরূপ আশীর্ব্বাদ করিয়া গুরুর নিকট প্র... করিলেন। জীবলোক যেমন সূর্য্যপ্রভাবে আলোক লাভ করে, রাজাও তে... আশীর্ব্বাদপ্রভাবে অচিরে পুত্রলাভ করিলেন।

ब्राह्मे मुहूर्त्ते किल तस्य देवी
कुमारकल्पं सुषुवे कुमारम्।
अतः पिता ब्रह्मण एव नाम्ना
तमात्मजन्मानमजं चकार ॥ ३६

३६ अः। तस्य देवी ब्राह्मे मुहूर्त्ते किल कुमारकल्पं कुमारं सुषुवे, अतः पिता ब्र... नाम्ना तम् आत्मजन्मानम् अजं चकार ॥ वाच्य—देव्या कुमारकल्पः कुमारः सुषुवे, ... आत्मजन्मा अजः चक्रे।

३६। तस्य रघोः, देवी महिषी, ब्राह्मे। 'तस्येद'मित्यण्, ब्रह्मदै... अभिजिन्नामके मुहूर्त्ते किल ईषत् असमाप्तं कुमारं कुमारकल्पं ...

सदृशम्। 'ईषदसमाप्तौ' इत्यादिना कल्पप्प्रत्ययः। कुमारं पुत्त्रं सुषुवे। 'कुमारो बालके स्कन्दे' इति विश्वः। अतो ब्राह्ममुहूर्त्तोत्पन्नत्वात् पिता रघुः, ब्रह्मणः विधेरेव, नाम्ना तम् आत्मजन्मानं पुत्त्रम् अजम् अजनामकं चकार। 'अजो हरौ हरे कामे विधौ छागे रघोः सुते' इति विश्वः॥

৩৬। মহিষী ব্রাহ্ম মুহূর্ত্তে কার্ত্তিকের সদৃশ একটী পুত্র প্রসব করিলেন; এই কারণে মহারাজ রঘু ব্রহ্মার নামানুসারে পুত্রের নাম 'অজ' রাখিয়াছিলেন।

रूपं तदोजस्वि तदेव वीर्य्यं
तदेव नैसर्गिकमुन्नतत्वम्।
न कारणात् स्वाद्विभिदे कुमारः
प्रवर्त्तितो दीप इव प्रदीपात्॥ ३७

३७ अ:। ओजस्वि रूपं तदेव, वीर्य्यं तदेव, नैसर्गिकम् उन्नतत्वं तदेव, कुमारः प्रवर्त्तितः दीपः प्रदीपादिव स्वात् कारणात् न विभिदे॥ वाच्य—ओजस्विना तेन रूपेण तेन वीर्य्येण नैसर्गिकेण उन्नतत्वेन तेन (भूयते) कुमारेण प्रवर्त्तितेन दीपेन न विभिदे।

३७। ओजस्वि तेजस्वि बलिष्ठं वा। 'ओजस्तेजसि धातूनाम् अवष्टम्भप्रकाशयोः। ओजो बले च दीप्तौ च' इति विश्वः। रूपं वपुः। 'अथ रूपं नपुंसकम्। स्वभावाकृतिसौन्दर्य्यवपुषि श्लोकशब्दयोः' इति विश्वः। तत् एव पैतृकम् एव, वीर्य्यं शौर्य्यं, तत् एव, नैसर्गिकं स्वाभाविकम् उन्नतत्वं तत् एव तादृशमेव इत्यर्थः। कुमारः बालकः, प्रवर्त्तितः उत्पादितः दीपः प्रदीपात् स्वोत्पादकदीपात् इव, स्वात् स्वकीयात् 'पूर्व्वादिभ्यो नवभ्यो वा' इति स्माद्भावो वैकल्पिकः। कारणात् जनकात् न विभिदे भिन्नो नाभूत्, सर्व्वात्मना तादृश एवाभूदित्यर्थः॥

৩৭। কুমার অজের অবয়ব, ওজস্বিতা, বীর্য্যবত্তা ও স্বাভাবিক প্রশস্ততা, সর্ব্বথা রঘুরই অনুরূপ হইয়াছিল, জ্বলিত প্রদীপ হইতে প্রজ্বালিত প্রদীপের ন্যায় জনক হইতে অজের কিছুমাত্র পার্থক্য লক্ষিত হইত না।

उपात्तविद्यं विधिवद्गुरुभ्य-
स्तं यौवनोद्भेदविशेषकान्तम्।
श्रीः साभिलाषापि गुरोरनुज्ञां
धीरेव कन्या पितुराचकाङ्क्ष॥ ३८

३८ अ:। गुरुभ्यः विधिवत् उपात्तविद्यं यौवनोद्भेदविशेषकान्तं तमजं (प्रति) साभिलाषापि

श्री: धीरा कन्या पितुरिव गुरो: अनुज्ञाम् आचकाङ्क्ष ॥ वाच्य—साभिलाषया श्रिया कन्यया अनुज्ञा आचकाङ्क्षे ।

३८। गुरुभ्य: विधिवत् यथाशास्त्रम् उपात्तविद्यं लब्धविद्यं यौवनस्य उद्भेदात् आविर्भावात् हेतो: विशेषेण कान्तं सौम्यं तम् प्रति साभिलाषा अपि श्री: धीरा स्थिरा उन्नतचित्ता । 'स्थिरा चित्तोन्नति तु तद्धैर्यमिति संज्ञितम्' इति भूपाल: । कन्या पितु: इव, गुरो: अनुज्ञाम् आचकाङ्क्ष इयेष । यौवराज्यार्होऽभूदित्यर्थ: । अनुज्ञाशब्दात् पित्रधीनत्वमुपमासामर्थ्यात् पाणिग्रहणयोग्यता च ध्वन्यते ॥

৩৮। কুমার অজ আচার্য্যগণের নিকট যথাবিধি বিদ্যালাভ করিলেন নবযৌবনপ্রারম্ভে অপূর্ব্ব কান্তি ধারণ করিলেন। উন্নতহৃদয়া কন্যা যেমন অভি বরকে বরণ করিবার জন্য পিতার অনুমতির প্রতীক্ষা করে, তেমনি রাজলক্ষ্মী তাঁহাকে রাজপদে বরণ করিতে অভিলাষিণী হইয়া প্রভু রঘুর অনুমতি প্রতীক্ষা করি লাগিলেন।

**अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्या: ।**
**आप्त: कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्ट: ॥**

३९ अ:। अथ स्वसु: इन्दुमत्या: स्वयंवरार्थं कुमारानयनोत्सुकेन क्रथकैशिकानाम् ई भोजेन आप्तो दूत: रघवे विसृष्ट: ॥ वाच्य...उत्सुक: ईश्वर: भोज: आप्तं दूतं विसृष्टवान् ।

३९। अथ स्वसु: भगिन्या: इन्दुमत्या: स्वयंवरार्थं कुमारस्य अज आनयने उत्सुकेन क्रथकैशिकानां विदर्भदेशानाम् ईश्वरेण स्वामिना भोजे राज्ञा आप्त: हित: दूत: रघवे विसृष्ट: प्रेषित: । क्रियामात्रयोगेऽपि चतु

৩৯। অনন্তর ভগিনী ইন্দুমতীর স্বয়ংবরের জন্য বিদর্ভরাজ ভোজ, রাজকু অজের আনয়নে সমুৎসুক হইয়া রঘুর নিকট বিশ্বস্ত দূত প্রেরণ করিলেন।

**तं श्लाघ्यसम्बन्धमसौ विचिन्त्य दारक्रियायोग्यदशञ्च पुत्रम् ।**
**प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥**

४० अ:। असौ तं श्लाघ्यसम्बन्धं पुत्रं दारक्रियायोग्यदशञ्च विचिन्त्य ससैन्यम् एनम् ऋद्धां विदर्भाधिपराजधानीं प्रस्थापयामास ॥ वाच्य—अमुना ससैन्य: एष: प्रस्थापयामासे ।

४०। असौ रघु:, तं भोजं श्लाघ्यसम्बन्धम् अनूचानत्वादिगुणयोगात् स्पृहणीयसम्बन्धं, विचिन्त्य विचार्य, पुत्रं च दारक्रियायोग्यदशं विवाहयोग्यवयसं विचिन्त्य, ससैन्यम् एनं पुत्रम् ऋद्धां समृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं प्रस्थापयामास । धीयतेऽस्यामिति धानी । 'करणाधिकरणयोश्च' इति अधिकरणे ल्युट्प्रत्यय: । राज्ञां धानीति विग्रह: ॥

৪০। ভোজরাজের সহিত তাদৃশ সম্বন্ধ স্থাপন করা গৌরবেরই বিষয় এবং পুত্রও বিবাহযোগ্য বয়স প্রাপ্ত হইয়াছে. এই সকল বিবেচনা করিয়া মহারাজ রঘু কুমার অজকে সসৈন্যে সুসমৃদ্ধ বিদর্ভনগরে প্রেরণ করিলেন।

**तस्योपकार्य्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।**
**मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥४१**

४१। उपकार्य्यारचितोपचाराः जानपदोपदाभिः वन्येतराः तस्य मनुजेन्द्रसूनोः मार्गे निवासाः उद्यानविहारकल्पा बभूवुः ॥ वाच्य—रचितोपचारैः वन्येतरैः निवासैः...कल्पैः बभूवे।

४१। उपकार्य्यासु राजयोग्येषु पटभवनादिषु। 'सौधोऽस्त्री राजसदनमुपकार्य्योपकारिका' इति अमरवचनव्याख्याने चीरस्वामी—उपक्रियते उपकरोति वा पटमण्डपादि राजसदनमिति। रचिताः उपचाराः शयनादयः येषु ते तथोक्ताः, जानपदानां जनपदेभ्यः आगतानाम् उपदाभिः उपायनैः वन्याः वने भवाः इतरे येषां ते वन्येतराः अवन्या इत्यर्थः। 'न बहुव्रीहौ' इति सर्वनामसंज्ञानिषेधः। तत्पुरुषे सर्वनामसंज्ञा दुर्वारैव। तस्य मनुजेन्द्रसूनोः अजस्य मार्गे निवासाः वासनिकाः उद्यानानि आक्रीड़ाः। 'पुमानाक्रीड़ उद्यानम्' इत्यमरः। तानि एव विहाराः विहारस्थानानि तत्कल्पाः तत्सदृशा इत्यर्थः। ईषदसमाप्ताविति कल्पप्प्रत्ययः। बभूवुः ॥

৪১। পথিমধ্যে রাজকুমার অজের বিশ্রামস্থান সকল, রাজযোগ্য পটভবন (তাঁবু), শয্যাদি দ্রব্যসম্ভার এবং গ্রাম্য লোকগণের প্রদত্ত বিবিধ উপহারে সমাচ্ছন্ন হওয়ায়, বন্য দেশ বলিয়া বোধ হইল না ; পরন্তু উপবনস্থিত বিহার-ভবনের ন্যায় বোধ হইতে লাগিল।

**स नर्म्मदारोधसि शीकरार्द्रै-**
**र्मरुद्भिरानर्त्तितनक्तमाले ।**
**निवेशयामास विलङ्घिताध्वा**
**क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२**

४२ अः। विलङ्घिताध्वा सः अजः शीकरार्द्रैर्मरुद्भिः आनर्त्तितनक्तमाले नर्म्मदारोधसि क्लान्तं रजोधूसरकेतु सैन्यं निवेशयामास ॥ वाच्य—विलङ्घिताध्वना तेन अजेन निवेशयामासे।

४२। विलङ्घिताध्वा अतिक्रान्तमार्गः सः अजः, शीकरार्द्रैः शीतलैरित्यर्थः। मरुद्भिः वातैः आनर्त्तिताः कम्पिताः नक्तमालाः चिरविल्वाख्यवृक्षभेदाः। 'चिरविल्वो नक्तमालः करजश्च करञ्जके' इत्यमरः। यस्मिन्

तस्मिन् निवेशार्हे इत्यर्थः । नर्म्मदायाः रोधसि रेवायाः तीरे, क्लान्तं
रजोभिः घूसराः केतवः ध्वजाः यस्य तत् सैन्यं निवेशयामास ॥

৪২। এইরূপে পথ অতিক্রম করিয়া কুমার অজ, সলিলশীকর-
সমীরণভরে ঈষৎ সঞ্চালিত করঞ্জক বৃক্ষদ্বারা শোভিত নর্ম্মদা নদীতটে ধূলিধূসর
ক্লান্ত সেনাগণকে বিশ্রামের জন্য সন্নিবেশিত করিলেন।

अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः-
प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्ति-
र्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३

४३ अः। अथ उपरिष्टात् भ्रमद्भिः भ्रमरैः प्राक्सूचितान्तःसलिलप्रवेशः निर्धौतदानामल-
भित्तिः वन्यो गजः सरित्तः उन्ममज्ज ॥ वाच्य—सलिलप्रवेशेन...गण्डभित्तिना वन्येन गजेन उन्

४३। अथ उपरिष्टात् ऊर्द्ध्वम् । उपर्य्युपरिष्टादिति निपातः । भ्रम
मदलोभादिति भावः । भ्रमरैः प्राक् उन्मज्जनात् पूर्वं सूचितः ज्ञापि
अन्तःसलिले प्रवेशः यस्य सः तथोक्तः, निर्धौतदाने क्षालितमदे अत
अमले गण्डभित्ती यस्य सः तथोक्तः । 'दानं गजमदे त्यागे' इति शाश्वत
प्रशस्तौ गण्डौ गण्डभित्तौ । 'प्रशंसावचनैश्च' इति समासः । भि
शब्दः प्रशस्तार्थः । तथाच गणरत्नमहोदधौ—'मतल्लिकोद्धमिश्राः
प्रकाण्डस्थलभित्तयः' इति । भित्तिः प्रदेशो वा । 'भित्तिः प्रदेशे कु
ऽपि' इति विश्वः । निर्धौतदानेन अमला गण्डभित्तिः यस्य इति
वन्यः गजः, सरित्तः नर्म्मदायाः सकाशात् । पञ्चम्यास्तसिल्प्रत्यय
उन्ममज्ज उत्थितः ॥

৪৩। সেই সময় সহসা এক বন্য হস্তী নদীগর্ভ হইতে উত্থিত হইল; মদ
সম্পূর্ণরূপ ধৌত হওয়ায় তদীয় গণ্ডস্থল তখন নির্ম্মল হইয়াছিল এবং উত্থানের পূ
জলোপরি ভ্রাম্যমাণ ভ্রমরসমূহ মদগন্ধে আকৃষ্ট হইয়া জলমধ্যে প্রবেশ করিয়াছিল।

निःशेषविक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु ।
नीलोर्द्ध्वरेखाशबलेन शंसन् दन्तद्वयेनाश्मविकुण्ठितेन ॥४

४४ अः। (कथंभूतः ?) निःशेषविक्षालितधातुनापि नीलोर्द्ध्वरेखाशबलेन अश्मविकुण्ठि
दन्तद्वयेन ऋक्षवतस्तटेषु वप्रक्रियां शंसन् ॥ वाच्य—शंसता ।

४४। कथम्भूतो गजः ? निःशेषविक्षालितधातुना अपि धौतगैरिका
दिना अपि नीलाभिः ऊर्द्ध्वाभिः रेखाभिः तटाभिघातजनिताभिः शबलेन

वर्णा । 'चित्रं किर्म्मीरकल्माषशबलैताश्च कर्वुरे ।' इत्यमरः । अश्मभिः
प्राणैः विकुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन, ऋक्षवान् नाम कश्चित्
वस्यः पर्वतः तस्य तटेषु वप्रक्रियां वप्रक्रीड़ाम् उत्खातकेलिमित्यर्थः ।
उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीड़ा निगद्यते' इति शब्दार्णवः । शंसन्
यन् सूचयन् इत्यर्थः । युग्मकम् ॥

৪৪। যদিও তাহার দন্তদ্বয়ে সংলগ্ন গৈরিকাদি ধাতু সম্পূর্ণরূপে ধৌত হইয়া-
ল, তথাপি পর্ব্বতগাত্রে আঘাতনিবন্ধন সেই দন্তদ্বয় কুণ্ঠিত ও নীলবর্ণ ঊর্দ্ধরেখাদ্বারা
ক্ত থাকায়, সে যে ঋক্ষবান্ পর্ব্বতের তটে বপ্রক্রীড়া করিয়া থাকে, তাহাও
চিত হইতেছিল।

**हारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।**
**सो स भिन्दन् बृहतस्तरङ्गान् वार्य्यर्गलाभङ्ग इव प्रवृत्तः॥४५**

४५ अ:। संहारविक्षेपलघुक्रियेण हस्तेन सशब्दं बृहतस्तरङ्गान् भिन्दन् तीराभिमुखः स गजः
वार्य्यर्गलाभङ्गे प्रवृत्त इव बभौ ॥ वाच्य—भिन्दता तीराभिमुखेन तेन गजेन प्रवृत्तेन इव बभे।

४५। संहारविक्षेपयोः सङ्कोचनप्रसारणयोः लघुक्रियेण क्षिप्रव्यापा-
रेण। 'लघुक्षिप्रमरं द्रुतम्' इत्यमरः। हस्तेन शुण्डादण्डेन। 'हस्तो
नक्षत्रभेदे स्यात् करेभकरयोरपि।' इति विश्वः। सशब्दं सघोषं बृहतः
तरङ्गान् भिन्दन् विदारयन् तीराभिमुखः स गजः, वारी गजबन्धनस्थानम्।
'वारी तु गजबन्धनी' इति यादवः। वार्य्याः अर्गलायाः विष्कम्भस्य भङ्गे
भञ्जने प्रवृत्त इव, बभौ॥

৪৫। সে, দ্রুতবেগে নিজ শুণ্ড সংকোচন ও প্রসারণপূর্ব্বক মহাশব্দে প্রকাণ্ড
তরঙ্গ সকল ভেদ করিয়া যেন নিজ বন্ধনশালার অর্গলা ভগ্ন করিতে প্রবৃত্ত হইয়া
তীরাভিমুখে আসিতে লাগিল।

**शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।**
**पूर्वं तदुत्पीड़ितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६**

४६ अ:। शैलोपमः सः शैवलमञ्जरीणां जालानि उरसा कर्षन् पश्चात् तटम् उत्ससर्प, पूर्वं
तदुत्पीड़ितवारिराशिः सरित्प्रवाहः तटम् उत्ससर्प॥ वाच्य—शैलोपमेन तेन कर्षता उत्ससृपे,
वारिराशिना सरित्प्रवाहेण उत्ससृपे।

४६। शैलोपमः सः गजः, शैवलमञ्जरीणां जालानि वृन्दानि उरसा
कर्षन् पश्चात् तटम् उत्ससर्प। पूर्वं तेन गजेन उत्पीड़ितः नुन्नः वारिराशिः
यस्य सः सरित्प्रवाहः तटम् उत्ससर्प॥

৪৬। পর্ব্বতাকার সেই হস্তী, বক্ষঃস্থলের সংঘর্ষণে (প্রবাহলগ্ন) শৈবলমঞ্জরী সকল

আকর্ষণ করিতে করিতে তটের উপর উঠিল; তদীয় আস্ফালনবেগে তাহার
উঠিবার পূর্ব্বেই নদীপ্রবাহের জলরাশি উচ্ছলিত হইয়া তটভূমি প্লাবিত করিয়াছিল।

**तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता।**
**वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः॥ ४७॥**

४७ अ:। तस्य एकनागस्य कपोलभित्त्योः जलावगाहक्षणमात्रशान्ता मददुर्दिनश्रीः व...नेकपदर्शनेन पुनः दिदीपे॥ वाच्य—शान्तया...श्रिया दिदीपे।

४७। तस्य एकनागस्य एकाकिनः गजस्य कपोलभित्त्योः ज...गाहेन क्षणमात्रं शान्ता निवृत्ता मददुर्दिनश्रीः मदवर्षलक्ष्मीः, वन्ये...ग्राम्याणाम् अनेकपानां द्विपानां दर्शनेन पुनः दिदीपे ववृधे॥

৪৭। জলাবগাহনহেতু সেই অদ্বিতীয় হস্তীর প্রশস্ত গণ্ডদ্বয়ে মদজলধারা... কাল নিবৃত্ত হইলেও, অজসৈন্যমধ্যবর্ত্তী গ্রাম্য হস্তীদিগকে দেখিবামাত্র প্রবল... প্রবাহিত হইল।

**सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम्।**
**विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः॥**

४८ अ:। सप्तच्छदक्षीरकटुप्रवाहम् असह्यं तदीयं मदम् आघ्राय सेनागजेन्द्राः विलङ्घि...तीव्रयत्ना विमुखा बभूवुः॥ वाच्य—सेनागजेन्द्रैः...यत्नैः विमुखैः बभूवे।

४८। सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत् कटुः सुरभिः प्रवाहः प्र... यस्य तम्। 'कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्त्तिताः' इति या... असह्यं तदीयं मदम् आघ्राय, सेनागजेन्द्राः, विलङ्घितः तिरस्कृतः आ...रणानां हस्तिपकानां तीव्रः महान् यत्नः यैः ते तथोक्ताः सन्तः। '...रणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः। विमुखाः पराङ्...
बभुवुः॥

৪৮। সপ্তচ্ছদবৃক্ষের ক্ষীরধারার ন্যায় অতি উগ্র ও অসহ্য তদীয় মদগন্ধ... করিবামাত্র, অজসৈন্যমধ্যবর্ত্তী মহাকায় হস্তিসকল মাহুতগণের প্রাণপণ... অনিবার্য্য হইয়া নানাদিকে ছুটিতে লাগিল।

**स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्य्यस्तरथं क्षणेन।**
**रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार॥**

४९ अ:। सः छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्य्यस्तरथं रामापरित्राणविहस्तयोधं सेनानि... क्षणेन तुमुलं चकार॥ वाच्य—तेन...शून्यः...रथः विहस्तयोधः सेनानिवेशः चक्रे।

४९। सः गजः, छिन्नाः बन्धाः यैः ते छिन्नबन्धाः द्रुमाः पला...

युगं वहन्तीति युग्याः वाहाः यस्मिन् सः चासौ शून्यश्च तं, भग्नाः अक्षाः रथावयवाः दारुविशेषाः । 'अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम्' इति शाश्वतः । येषां ते भग्नाक्षाः अतएव पर्य्यस्ताः पतिताः रथाः यस्मिन् तं, रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ताः व्याकुलाः । 'विहस्त-व्याकुलौ समौ' इत्यमरः । योधाः यस्मिन् तं सेनानिवेशं शिविरं क्षणेन तुमुलं सङ्कुलं चकार ॥

৪৯। অশ্বগণ বন্ধন ছিন্নভিন্ন করিয়া সেনানিবেশ হইতে দ্রুতবেগে পলাইতে লাগিল; যুগকীলক ভগ্ন হওয়ায় রথ সকল বিচ্ছিন্নভাবে পতিত হইতে লাগিল এবং সৈন্যগণ অবলাকুলের রক্ষার্থে ব্যাকুল হইয়া পড়িল; এইরূপে ক্ষণকালমধ্যেই সেই হস্তী সমস্ত সেনানিবেশ আলোড়িত করিয়া ফেলিল।

**तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान् कुमारः ।**
**निवर्त्तयिष्यन् विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥५०**

५० अः । वन्यः करी नृपतेः अवध्य इति श्रुतवान् कुमारः आपतन्तं तं निवर्त्तयिष्यन् अतएव नात्यायतकृष्टशार्ङ्गः सन् विशिखेन कुम्भे जघान ॥ वाच्य—वन्येन करिणा अवध्येन (भूयते) श्रुतवता कुमारेण निवर्त्तयिष्यता...शार्ङ्गेण जघ्ने ।

५०। नृपतेः राज्ञः वन्यः करी अवध्यः इति श्रुतवान् शास्त्रात् ज्ञातवान् कुमारः, आपतन्तम् अभिधावन्तं तं गजं निवर्त्तयिष्यन् न तु प्रहरिष्यन्, अतएव नात्यायतम् अनतिदीर्घं यथा स्यात् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । कृष्टशार्ङ्गः ईषदाकृष्टचापः सन्, विशिखेन वाणेन कुम्भे जघान । अत्र चाक्षुषः—'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्य्यात्, इयं हि श्रीर्यत् करिणः' इति । अतएव युद्धादन्यत्रेति द्योतनार्थमेव वन्यग्रहणं कृतम् ॥

৫০। বন্যগজ রাজগণের অবধ্য জানিয়া কুমার অজ সেই ধাবন্ত হস্তীকে নিবারণ করিবার উদ্দেশ্যে শরাসন ঈষৎ আকর্ষণ করিয়া উহার কুম্ভদেশে এক বাণ বিদ্ধ করিলেন।

**स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ।**
**स्फुरत्प्रभामण्डलमध्यवर्त्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१**

५१ अः । स विद्धमात्रः किल नागरूपम् उत्सृज्य तद्विस्मितसैन्यदृष्टः सन् स्फुरत्प्रभामण्डलमध्यवर्त्ति कान्तं व्योमचरं वपुः प्रपेदे ॥ वाच्य—तेन विद्धमात्रेण...दृष्टेन...प्रपेदे ।

५१। सः गजः, विद्धमात्रः ताड़ितमात्रः किल न तु प्रहृतः तथापि नागरूपं गजशरीरम् उत्सृज्य, तेन वृत्तान्तेन विस्मितैः तद्विस्मितैः सैन्यैः दृष्टः सन् स्फुरतः प्रभामण्डलस्य मध्यवर्त्ति कान्तं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ॥

৫১। সেই হস্তী বিদ্ধ হইবামাত্র গজদেহ পরিত্যাগপূর্ব্বক প্রদীপ্ত তেজে উদ্ভাসিত দিব্য গগনবিহারী শরীর প্রাপ্ত হইল ; তৎকালে অজসৈন্যগণ সবিস্ময়ে দর্শন করিতে লাগিল।

**অথ প্রভাবোপনতৈঃ কুমারং কল্পদ্রুমোত্থৈরবকীর্য্য পুষ্পৈঃ।**
**উবাচ বাগ্মী দশনপ্রভাভিঃ সংবর্দ্ধিতোরঃস্থলতারহারঃ॥**

৫২ অ:। অথ প্রভাবোপনতৈঃ কল্পদ্রুমোত্থৈঃ পুষ্পৈঃ কুমারম্ অবকীর্য্য দশনপ্রভাভিঃ সংবর্দ্ধিতোরঃস্থলতারহারঃ (বাগ্মী সঃ) উবাচ॥ বাচ্য—তারহারেণ বাগ্মিনা ঊচে।

৫২। অথ প্রভাবেণ উপনতৈঃ প্রাপ্তৈঃ কল্পদ্রুমোত্থৈঃ কল্পবৃক্ষোত্থৈঃ পুষ্পৈঃ কুমারম্ অজম্ অবকীর্য্য অভিবৃষ্য দশনপ্রভাভিঃ সংবর্দ্ধিতাঃ উরঃস্থলে যে তারহারাঃ স্থূলমুক্তাহারাঃ তে যেন সঃ তথোক্তঃ। বাচঃ সন্তীতি বাগ্মী বক্তা। 'বাচো গ্মিনিঃ' ইতি গ্মিনিঃ। সঃ পুরুষঃ উবাচ।

৫২। অনন্তর, সেই সুবক্তা দিব্যপুরুষ, কুমার অজের উপর স্বপ্রভাবলব্ধ কুসুমবর্ষণপূর্ব্বক, দশনপ্রভায় বক্ষঃস্থলস্থিত স্থূল মুক্তাহারের দীপ্তি পরিবর্দ্ধিত করিয়া কহিতে লাগিলেন।

**মতঙ্গশাপাদবলেপমূলাদবাপ্তবানস্মি মতঙ্গজত্বম্।**
**অবেহি গন্ধর্বপতেস্তনূজং প্রিয়ংবদং মাং প্রিয়দর্শনস্য॥৫৩**

৫৩ অ:। অস্মি (অহং) অবলেপমূলাত্ মতঙ্গশাপাত্ মতঙ্গজত্বম্ অবাপ্তবান্, মাং প্রিয়দর্শনস্য গন্ধর্বপতেস্তনূজং প্রিয়ংবদং (নাম) অবেহি॥ বাচ্য—অবাপ্তবতা ভূয়তে, অহং...তনূজঃ প্রিয়ংবদঃ অবেয়ঃ।

৫৩। অবলেপমূলাত্ গর্ব্বহেতুকাত্। 'অবলেপস্তু গর্বে স্যাল্লেপনে ভূষণেঽপি চ' ইতি বিশ্বঃ। মতঙ্গস্য মুনেঃ শাপাত মতঙ্গজত্বম্ অবাপ্তবান্ অস্মি, মাং প্রিয়দর্শনস্য প্রিয়দর্শনাখ্যস্য গন্ধর্বপতেঃ গন্ধর্বরাজস্য তনূজং পুত্রম্। 'স্ত্রিয়াং মূর্ত্তিস্তনুস্তনূঃ' ইত্যমরঃ। 'তন্বাদের্ব্বা' ইত্যূঙ্ ইতি কেচিত্। 'প্রিয়ংবদং প্রিয়ংবদাখ্যম্ অবেহি জানীহি। প্রিয়ং বদতীতি প্রিয়ংবদঃ 'প্রিয়বশে বদঃ খচ্' ইতি খচ্প্রত্যয়ঃ॥

পৌরাণিকী বার্ত্তা।—পুরা কিল প্রিয়ংবদাখ্যঃ কশ্চিত্ গন্ধর্বঃ গর্বপরবশঃ মতঙ্গমুনিম্ ... বান্, তেন সঞ্জাতরুষা ত্বং মতঙ্গজো ভব ইতি অভিশাপঃ প্রদত্ত ইতি।

৫৩। জানিবেন—আমি গন্ধর্ব্বরাজ প্রিয়দর্শনের পুত্র, আমার নাম প্রিয়ংবদ। আমি গর্ব্ববশতঃ মতঙ্গমুনির অভিশাপে মাতঙ্গদেহ প্রাপ্ত হইয়াছিলাম।

**স চানুনীতঃ প্রণতেন পশ্চা-**
**ন্ময়া মহর্ষির্মৃদুতামগচ্ছত্।**

उष्णत्वमग्न्यातपसम्प्रयोगात्
शैत्यं हि यत् सा प्रकृतिर्जलस्य ॥ ५४

५४ अ:। सः महर्षिः, प्रणतेन मया अनुनीतः सन् पश्चात् मृदुताम् अगच्छत्। तथाहि—जलस्य उष्णत्वम् अग्न्यातपसंप्रयोगात्, शैत्यं यत्, सा प्रकृतिः॥ वाच्य—तेन महर्षिणा अनुनीतेन मृदुता अगम्यत, उष्णत्वेन शैत्येन येन तया प्रकृत्या (भूयते)।

५४। सः महर्षिः प्रणतेन मया अनुनीतः सन् पश्चात् मृदुतां शान्तिम् अगच्छत्। तथाहि—जलस्य उष्णत्वम् अग्नेः आतपस्य वा सम्प्रयोगात् सम्पर्कात्, न तु प्रकृत्या उष्णत्वं, यत् शैत्यं सा प्रकृतिः स्वभावः। विधेय-प्राधान्यात् सेति स्त्रीलिङ्गनिर्देशः। महर्षीणां शान्तिरेव स्वभावो न क्रोध इत्यर्थः॥

৫৪। আমি প্রণত হইয়া অনুনয় করিলে, মহর্ষি শান্ত হইয়াছিলেন; কারণ, শৈত্যই জলের স্বাভাবিক গুণ, উহার উষ্ণতা কেবল অগ্নি বা আতপের সংযোগেই ঘটিয়া থাকে।

इक्ष्वाकुवंशप्रभवो यदा ते
भेत्स्यत्यजः कुम्भमयोमुखेन।
संयोक्ष्यसे स्वेन वपुर्महिम्ना
तदेत्यवोचत् स तपोनिधिर्माम् ॥ ५५

५५ अ:। इक्ष्वाकुवंशप्रभवः अजः यदा ते कुम्भम् अयोमुखेन भेत्स्यति, तदा (त्वम्) स्वेन वपुर्महिम्ना संयोक्ष्यसे इति सः तपोनिधिर्माम् अवोचत्॥ वाच्य—इक्ष्वाकुवंशप्रभवेण अजेन कुम्भः भेत्स्यते, संयोक्ष्यते, इति तेन तपोनिधिना अवाचि।

५५। इक्ष्वाकुवंशः प्रभवो यस्य सः अजः, यदा ते कुम्भम् अयोमुखेन लोहाग्रेण शरेण भेत्स्यति विदारयिष्यति तदा स्वेन वपुषः महिम्ना पुनः संयोक्ष्यसे सङ्गस्यसे इति सः तपोनिधिः माम् अवोचत्॥

৫৫। তখন সেই তপোনিধি, আমাকে এই কথা বলিলেন—"ইক্ষ্বাকুবংশীয় মহীপতি দিলীপ-তনয় অজ, লৌহমুখ শর দ্বারা যখন তোমার কুম্ভদেশ ভেদ করিবেন, তখন তুমি পুনরায় নিজ দিব্য দেহ লাভ করিবে।"

सम्मोचितः सत्त्ववता त्वयाहं
शापाच्चिरप्रार्थितदर्शनेन।
प्रतिप्रियं चेद्भवतो न कुर्य्यां
वृथा हि मे स्यात् स्वपदोपलब्धिः ॥ ५६

५६ अ: । चिरप्रार्थितदर्शनेन सत्त्ववता त्वया अहं शापात् सम्मोचित:, (अहम्) भवत: प्र[illegible] न कुर्य्यां चेत् तदा मे स्वपदोपलब्धि: वृथा स्यात् हि ॥ वाच्य—प्रार्थितदर्शन: सत्त्ववान् [illegible] सम्मोचितवान्, प्रतिप्रिय: न क्रियेत...पलब्धिना भूयेत ।

५६ । चिरं प्रार्थितं दर्शनं यस्य तेन सत्त्ववता बलवता त्वया, [illegible] शापात् सम्मोचित: मोक्षं प्रापित:, भवत: प्रतिप्रियं प्रत्युपकारं न [illegible] चेत्, मे स्वपदोपलब्धि: स्वस्थानप्राप्ति: । 'पदं व्यवसितत्राणस्थानलक्ष्मा[illegible] वस्तुषु' इत्यमर: । वृथा स्यात् हि । तदुक्तम्—'प्रतिकर्त्तुमशक्तस्य जीवि[illegible]न्मरणं वरम्' इति ॥

৫৬। আমি বহুকাল ধরিয়া তোমার দর্শনলাভের প্রতীক্ষায় ছিলাম, তুমি [illegible] বীর্য্যে আমাকে শাপ হইতে মুক্ত করিলে ; কিন্তু এক্ষণে আমি যদি তোমার [illegible] প্রত্যুপকার না করি, তবে আমার এই দিব্য দেহপ্রাপ্তি বৃথাই হইবে।

**सम्मोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ।**
**गान्धर्वमादत्स्व यत: प्रयोक्तुर्न चारिहिंसा विजयश्च हस्[ते ॥ ५७]**

५७ अ: । हे सखे ! प्रयोगसंहारविभक्तमन्त्रं गान्धर्वं सम्मोहनं नाम अस्त्रम् आ[दत्स्व] यत: प्रयोक्तु: अरिहिंसा च न, विजयश्च हस्ते (भवति) ॥ वाच्य—आदीयतां (त्वया) अरि[हिंसा] न, विजयेन (भूयते) ।

५७ । हे सखे ! सखिशब्देन समप्राणतोक्ता । यथोक्तम्—"अल[illegible] सहनो बन्धु: सदैवानुमत: सुहृत् । एकक्रियो भवेन्मित्रं समप्राण: [सखा] मत:' ॥" इति । प्रयोगसंहारयो: विभक्तमन्त्रं गान्धर्वं गन्धर्वदेव[त्यं] सम्मोह्यते अनेन इति सम्मोहनं नाम मम अस्त्रम् आदत्स्व गृहाण, [illegible] अस्मात् प्रयोक्तु: अस्त्रप्रयोगिण: अरिहिंसा न च, विजयश्च हस्ते हस्[त]विजयो भवतीत्यर्थ: ॥

৫৭। হে সখে ! তুমি আমার নিকট সম্মোহন নামক গান্ধর্ব্ব অস্ত্র গ্রহণ [কর।] এই অস্ত্রের প্রয়োগ ও প্রতিসংহার বিষয়ে পৃথক্ পৃথক্ মন্ত্র নির্দ্দিষ্ট আছে। এই [অস্ত্রের] প্রভাবে ইহার প্রয়োগকর্ত্তাকে শত্রুবধ করিতে হয় না, অথচ জয়লাভ হইয়া [থাকে।]

**अलं ह्रिया मां प्रति यन्मुहूर्त्तं**
**दयापरोऽभू: प्रहरन्नपि त्वम् ।**
**तस्मादुपच्छन्दयति प्रयोज्यं**
**मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८**

५८ अ: । मां प्रति ह्रिया अलम्, यत् त्वं प्रहरन्नपि मुहूर्त्तं दयापर: अभू:, तस्मात् उ[पच्छन्दयति]

यति मयि त्वया प्रतिषेधरौद्र्यं न प्रयोज्यम् ॥ वाच्य—त्वया प्रहरता अपि दयापरेण अभावि, त्वं न प्रयोजयि ।

५८। वधलज्जितः कथमस्त्रग्रहपरः स्यामिति चेत् तत्राह—अलमिति । किञ्च, मां प्रति ह्रिया प्रहारनिमित्तया अलम् । कुतः ? यत् यतः हेतोः त्वं मां प्रहरन् अपि सुहृत्त्वं दयापरः कृपालुः अभूः, तस्मात् उपच्छन्दयति प्रार्थयमाने मयि त्वया प्रतिषेधः परिहारः स एव रौद्र्यं पारुष्यं तत् न प्रयोज्यं न कर्त्तव्यम् ॥

৫৮। মুহূর্ত্তের জন্য তুমি আমাকে প্রহার করিয়াও আমার প্রতি দয়ারই কার্য্য করিয়াছ; অতএব তুমি ইহা গ্রহণে লজ্জিত হইও না, আমি তোমার নিকট প্রার্থনা করিতেছি, তুমি কঠিন হইয়া আমার প্রার্থনা ভঙ্গ করিও না।

तथेत्युपस्पृश्य पयः पवित्रं
सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं
जग्राह तस्मान्निगृहीतशापात् ॥ ५९

५९ अः। नृसोमः अस्त्रवित् सः तथेति सोमोद्भवायाः सरितः पवित्रं पयः उपस्पृश्य उदङ्मुखः सन् निगृहीतशापात् तस्मात् अस्त्रमन्त्रं जग्राह ॥ वाच्य—नृसोमेन अस्त्रविदा तेन उदङ्मुखेन अस्त्रमन्त्रो जगृहे ।

५९। ना सोमः चन्द्र इव नृसोमः उपमितसमासः । 'सोम ओषधिचन्द्रयोः' इति शाश्वतः । पुरुषश्रेष्ठ इत्यर्थः । अस्त्रवित् अस्त्रज्ञः सः अजः, तथेति, सोमः उद्भवः यस्याः सा तस्याः सोमोद्भवायाः सरितः नर्म्मदायाः । 'रेवा तु नर्म्मदा सोमोद्भवा मेखलकन्यका' इत्यमरः । पवित्रं पयः उपस्पृश्य पीत्वा आचम्य इत्यर्थः । उदङ्मुखः सन्, निगृहीतशापात् निवर्त्तितशापात् उपकृतादित्यर्थः । तस्मात् प्रियंवदात् अस्त्रमन्त्रं जग्राह ॥

৫৯। চন্দ্রের ন্যায় সৌম্য, অস্ত্রজ্ঞ, সেই অজ 'তথাস্তু' বলিয়া নর্ম্মদার পবিত্র জলে আচমনপূর্ব্বক উত্তরাস্য হইয়া, শাপমুক্ত সেই গন্ধর্ব্বের নিকট অস্ত্রমন্ত্র গ্রহণ করিলেন।

एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशान् सौराज्यरम्यानपरो विदर्भान्॥६०

६० अः। एवम् अध्वनि दैवयोगात् अचिन्त्यहेतु सख्यम् आसेदुषोः तयोः एकः चैत्ररथप्रदेशान्, अपरः सौराज्यरम्यान् विदर्भान् ययौ ॥ वाच्य—एकेन...प्रदेशाः अपरेण...रम्याः विदर्भाः ययिरे ।

६०। एवम् अध्वनि मार्गे दैवयोगात् दैववशात् अचिन्त्यहेतु अनि-

धैर्य्यहेतुकं सख्यं सखित्वम् । 'सख्युर्यः' इति यप्रत्ययः । आ... प्राप्तवतोः तयोः मध्ये एकः गन्धर्वः, चैत्ररथस्य कुबेरोद्यानस्य प्रदे... 'अस्योद्यानं चैत्ररथम्' इत्यमरः । अपरः अजः, सौराज्येन राजन्व... रम्यान् विदर्भान् विदर्भदेशान् ययौ ॥

৬০। এইরূপে পথিমধ্যে দৈবানুগ্রহে তাঁহাদের উভয়ের অচিন্তনীয় ... বন্ধুতা সংঘটিত হইল। অনন্তর একজন, কুবেরের চৈত্ররথ উদ্যান ভূমিতে ... করিলেন এবং অপর কুমার অজ, সুনৃপ শাসিত রমণীয় বিদর্ভদেশে গমন করিলেন।

**तं तस्थिवांसं नगरोपकण्ठे तदागमारूढ़गुरुप्रहर्षः ।**
**प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्म्मिरिवोर्म्मिमाली ॥**

६१ अ: । नगरोपकण्ठे तस्थिवांसं तं तदागमारूढ़गुरुप्रहर्षः क्रथकैशिकेन्द्रः प्रवृद्धोर्म्मिः ... माली चन्द्रमिव प्रत्युज्जगाम ॥ वाच्य—तस्थिवान् सः...प्रहर्षेण...कैशिकेन्द्रेण प्रवृद्धोर्म्मिणा ... मालिना चन्द्र इव प्रत्युज्जग्मे ।

६१ । नगरस्य उपकण्ठे समीपे तस्थिवांसं स्थितं तम् अजं ... अजस्य आगमेन आगमनेन आरूढ़ः उत्पन्नः गुरुः प्रहर्षः यस्य सः ... कैशिकेन्द्रः विदर्भराजः, प्रवृद्धोर्म्मिः ऊर्म्मिमाली समुद्रः चन्द्रम... प्रत्युज्जगाम ॥

৬১। অজ, নগরপ্রান্তে উপনীত হইয়া তদীয় আগমনে পরম পুলকিত ... তাঁহার প্রত্যুদ্গমন করিলেন; তখন বোধ হইল—যেন, সমুদ্র উচ্ছলিততর... চন্দ্রমার প্রত্যুদ্গমন করিলেন।

**प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः ।**
**मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम् ॥**

६२ अ: । एनम् अग्रयायी सन् नीचैः पुरं प्रवेश्य अर्पितश्रीः (वैदर्भः) तथा उपाचर... तत् समवेतो जनः वैदर्भम् आगन्तुम्, अजं गृहेशं मेने ॥ वाच्य—अग्रयायिना अर्पितश्रि... चर्य्यत, समवेतेन जनेन वैदर्भः आगन्तुः अजः गृहेशः मेने ।

६२ । एनम् अजम् अग्रयायी सेवाधर्मेण पुरो गच्छन्नित्यर्थः । ... नम्रः पुरं प्रवेश्य प्रवेशं कारयित्वा प्रीत्या अर्पितश्रीः तथा तेन प्र... उपाचरत् उपचरितवान् यथा येन प्रकारेण तत्र पुरे समेतः मिलित... वैदर्भं भोजम् आगन्तुं प्राधुनिकं मेने, अजं गृहेशं गृहपतिं मेने ॥

৬২। বিদর্ভরাজ ভোজ অজের অগ্রে অগ্রে নম্রভাবে গমন করিয়া তাঁহাকে ... মধ্যে প্রবেশ করাইলেন এবং প্রীতমনে নিজের অনুচর প্রভৃতি উপভো... প্রদানপূর্ব্বক তাঁহার এতাদৃশ পরিচর্য্যা করিলেন যে, উপস্থিত দর্শকেরা ... বিদর্ভনাথকে আগন্তুক এবং অজকে গৃহস্বামী বলিয়া অনুমান করিতে লাগিল।

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ।
रम्यां रघुप्रतिनिधिः स नवोपकार्य्यां
बाल्यात्परामिव दशां मदनोऽध्युवास ॥ ६३

६३ अ: । रघुप्रतिनिधिः सः प्रणतैः तस्य अधिकारपुरुषैः प्रदिष्टां प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भां रम्यां, नवोपकार्य्याम् मदनः बाल्यात् परां दशामिव अध्युवास ॥ वाच्य—प्रतिनिधिना तेन दिष्टा...कुम्भा रम्या...कार्य्या मदनेन परा दशा इव अध्युषे ।

६३ । रघुप्रतिनिधिः रघुकल्पः रघुतुल्य इत्यर्थः । उक्तञ्च दण्डिना सादृश्यवाचकप्रस्तावे—'कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि' इति । सः अजः, प्रणतैः नमस्कृतवद्भिः । कर्त्तरि क्तः । तस्य भोजस्य अधिकारः नियोगः तस्य पुरुषैः, अधिकृतैरित्यर्थः । प्रदिष्टां निर्दिष्टां प्राग्द्वारस्य वेद्यां विनिवेशितः प्रतिष्ठापितः पूर्णकुम्भः यस्याः तां, स्थापितमङ्गलकलसामित्यर्थः । रम्यां रमणीयां, नवोपकार्य्यां नूतनं राजभवनम् । 'उपकार्य्या राजसद्मन्युपचारचितेऽन्यवत्' इति विश्वः । मदनः बाल्यात् परां शैशवात् अनन्तरां दशाम् इव, यौवनमिव इत्यर्थः । अध्युवास अधिष्ठितवान् तत्रोषितवानित्यर्थः । 'उपान्वध्याङ् वसः' इति कर्मत्वम् ॥

৬৩। প্রণত রাজপুরুষগণ, রঘুপ্রতিনিধি অজকে এক রমণীয় অভিনব রাজভবনে লইয়া গেল, তাহার দ্বারদেশের সম্মুখস্থিত বেদিকায় পূর্ণকুম্ভ সজ্জিত ছিল ; তিনি তন্মধ্যে অধিষ্ঠান করায় মনে হইল যেন কামদেব বাল্য অতিক্রম করিয়া যৌবনকাল প্রাপ্ত হইলেন।

तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः ।
भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४

६४ अ: । तत्र स्वयंवरसमाहृतराजलोकं कमनीयं कन्याललाम लिप्सोः अजस्य, भावावबोधकलुषा दयितेव, निद्रा चिरेण नयनाभिमुखी बभूव ॥ वाच्य—...कलुषया दयितयानिद्रया...मुख्या बभूवे ।

६४ । तत्र उपकार्य्यायां, स्वयंवरनिमित्तं समाहृतः संमेलितः राजलोकः येन तत्, कमनीयं स्पृहणीयं, कन्याललाम कन्यासु श्रेष्ठम् ।

'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे। श्रेष्ठभूषाश्वशृङ्गेषु चिह्नाश्वलिङ्गिषु ॥' इति यादवः। लिप्सोः लब्धुमिच्छोः। लभेः सन्प्रत्ययः। अजस्य भावावबोधे पुरुषस्य अभिप्रायपरिज्ञाने कलुषा अक्षमा दयिता इव, रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव। राजानं च चौरं प्रविशन्ति प्रजागराः' इति भावः। अभिमुखीशब्दो ङीबन्तो ङ्यन्तो वा ॥

৬৪। পতিহৃদয়স্থিত অভিপ্রায় পরিজ্ঞানে অসমর্থা স্ত্রী যেরূপ রাত্রিতে বিলম্বে পতির নিকট আসিয়া উপস্থিত হয়, স্বয়ংবরসভায় নানাদিগ্দেশীয় নৃপতির আগমনের কারণ স্বরূপ সেই কন্যারত্ন-লাভলিপ্সু বিদর্ভনগরে অবস্থিত অজের নিদ্রাদেবীও সেইরূপ বিলম্বে আসিয়া উপস্থিত হইল।

तं कर्णभूषणनिपीड़ितपीवरांसं
शय्योत्तरच्छदविमर्द्दकृशाङ्गरागम्।
सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५

६५ अ:। कर्णभूषणनिपीड़ितपीवरांसं शय्योत्तरच्छदविमर्द्दकृशाङ्गरागं प्रथितप्रबोधं तं सवयसः उदारवाचः सूतात्मजाः वाग्भिः उषसि प्राबोधयन् ॥ वाच्य—...पीवरांसः...रागः प्रथितप्रबोधः सवयोभिः उदारवाग्भिः सूतात्मजैः प्राबोध्यत।

६५। कर्णभूषणाभ्यां निपीड़ितौ पीवरौ पीनौ अंसौ यस्य, शय्यायाः उत्तरच्छदस्य उपर्य्यास्तरणवस्त्रस्य विमर्द्देन घर्षणेन कृशः विरलः अङ्गरागः यस्य तं, न त्वङ्गनासङ्गादिति भावः। प्रथितप्रबोधं प्रख्यातबुद्धिं तम् एनम् अजं, सवयसः समानवयस्काः, उदारवाचः प्रगल्भगिरः सूतात्मजाः वन्दिपुत्राः, 'वैतालिकाः' इति वा पाठः। 'वैतालिका बोधकराः' इत्यमरः। वाग्भिः स्तुतिपाठैः उषसि प्राबोधयन् प्रबोधयामासुः।

৬৫। নিদ্রাকালে কর্ণভূষণের গাঢ় রেখা তদীয় পীবর স্কন্ধদেশে অঙ্কিত এবং শয্যার আস্তরণবস্ত্রের সংঘর্ষণে তদীয় অঙ্গরাগ ক্ষীণ হইল; ঊষাকালে সমবয়স্ক সুললিতকণ্ঠ বৈতালিকপুত্রেরা সেই প্রজ্ঞাশালী অজকে স্তুতিবাক্যে জাগরিত করিতে লাগিল।

रात्रिर्गता मतिमतां वर मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता।
तामेकतस्तव बिभर्त्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्य्यपदावलम्बी ॥ ६६

६६ अ:। हे मतिमतां वर! रात्रिः गता, शय्यां मुञ्च, धाता जगतो धूः द्विधैव विभक्ता, तत्र विनिद्रः सन् ताम् एकतो बिभर्त्ति, भवान् तस्याः अपरधुर्य्यपदावलम्बी॥ वाच्य—रात्र्या गतं, शय्या मुच्यतां (त्वया) धाता धुरं विभक्तवान्, गुरुणा विनिद्रेण भ्रियते, भवता...पदावलम्बिना (भूयतां)।

६६। हे मतिमतां वर! निर्द्धारणे षष्ठी। रात्रिर्गता, शय्यां मुञ्च निद्रो भव इत्यर्थः। विनिद्रत्वे फलमाह—धात्रेति। धात्रा ब्रह्मणा गतो धूः भारः। 'धूः स्यादुयानमुखे भारे' इति यादवः। द्विधा एव रीव इत्यर्थः। एवकारः तृतीयनिषेधार्थः। विभक्ता ननु विभज्य पिता खलु। तत् किमत आह—तां धुरम् एकतः एककोटौ तव गुरुः ता, विनिद्रः सन्, बिभर्त्ति। तस्याः धुरः भवान्, धुरं वहतीति धुर्य्यः रवाही तस्य पदं वहनस्थानम् अपरं यत् धुर्य्यपदं तदवलम्बी ततो निद्रो भव इत्यर्थः। न ह्युभयबाह्यम् एको वहतीति भावः॥

৬৬। তাহারা বলিল,—হে সুবুদ্ধিগণের অগ্রগণ্য! রাত্রি প্রভাত হইয়াছে, শয্যা গ করুন; বিধাতা পৃথিবীর ভার আপনার পিতার ও আপনার উপর যেন দ্বিভাগে পিত করিয়াছেন; আপনার পিতা নিদ্রাত্যাগ করিয়া সেই ভারের এক দিক্ বহন রিতেছেন, এক্ষণে আপনাকে তাহার অপর দিক্ বহন করিতে হইবে।

निद्रावशेन भवताप्यनपेक्षमाणा
पर्य्युत्सुकत्वमबला निशि खण्डितेव।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः॥ ६७

६७ अ:। निद्रावशेन भवता पर्य्युत्सुकत्वमपि निशि खण्डिता अबलेव अनपेक्षमाणा लक्ष्मीः विनोदयति स चन्द्रोऽपि दिगन्तलम्बी त्वदाननरुचिं विजहाति॥ वाच्य—खण्डितया अबलया नपेक्षमाणया लक्ष्म्या विनोद्यते, तेन चन्द्रेण दिगन्तलम्बिना त्वदाननरुचिः विहीयते।

६७। चन्द्रारविन्दराजवदनाद्वयो लक्ष्मीनिवासस्थानानीति प्रसिद्धि- ाश्रित्योच्यते। निद्रावशेन निद्राधीनेन स्त्र्यन्तरासङ्गोऽत्र ध्वन्यते। भवता र्य्युत्सुकत्वम् अपि त्वय्यनुरक्तत्वमपि इत्यर्थः। 'प्रसितोत्सुकाभ्यां तीया च' इति सप्तम्यर्थे तृतीया। अपिशब्दस्त्वद्विषयानुरागस्यानुपेक्ष्यत्व- ीतनार्थः। निशि खण्डिता भर्त्तुरन्यासङ्गज्ञानकलुषिता अबला इव ायिका इव। 'ज्ञातेऽन्यासङ्ग- विकृते खण्डितेर्षाकषायिता' इति दश- पके। अनपेक्षमाणा अविचारयन्ती सती उपेक्षमाणा इत्यर्थः। क्ष्मीः, येन चन्द्रेण सह, त्वदाननसदृशत्वादिति भावः। विनोदयति िनोदं करोति। विनोदशब्दात् तत् करोति तदाचष्टे' इति णिच प्रत्ययः

साहृश्यदर्शनादयो हि विरहिणां विनोदस्थानानीति भावः। स च दिगन्तलम्बी पश्चिमाशां गतः सन्, अस्तं गच्छन्नित्यर्थः। अतएव त्व नरुचिं विजहाति त्वन्मुखसादृश्यं त्यजतीत्यर्थः। अतो निद्रां वि लक्ष्मीमनन्यशरणां परिगृहाण इति भावः। अथवा ('ह्यनवेक्ष इति पाठे) निद्रावशेन भवता अनवेक्ष्यमाणा अनिरीक्ष्यमाणा। शानच्। लक्ष्मीः प्रयोजककर्त्री येन चन्द्रेण प्रयोज्येन पर्यु त्वद्विरहवेदनाम्। 'कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत्' लङ्कारे। विनोदयति निरासयतीति योजना। शेषं पूर्ववत् पत्तिमपश्यन्निमं पद्ममुपैक्षिष्ट॥

৬৭। আপনি নিশাকালে নিদ্রার অধীন হওয়াতে লক্ষ্মী আপনার প্রতি একান্ত অনুরাগ উপেক্ষা করিয়াও খণ্ডিতা স্ত্রীর ন্যায় যে চন্দ্র দর্শনে চিত্ত করিতেছিলেন সেই চন্দ্রও এক্ষণে পশ্চিমদিগের প্রান্তভাগ অবলম্বন করিয়া আ বদন সাদৃশ্য পরিত্যাগ করিয়াছেন।

**तद्वल्गुना युगपदुन्मिषितेन तावत्**
**सद्यः परस्परतुलामधिरोहतां द्वे।**
**प्रस्पन्दमानपरुषेतरतारमन्त-**
**श्चक्षुस्तव प्रचलितभ्रमरञ्च पद्मम्॥ ६८**

६८ अः। तत् वल्गुना युगपत् तावत् उन्मिषितेन द्वे (अपि) सद्यः परस्परतुलाम् ताम् (के द्वे ?) अन्तःप्रस्पन्दमानपरुषेतरतारं तव चक्षुः अन्तःप्रचलितभ्रमरं पद्मञ्च ( वाच्य—द्वाभ्यां परस्परतुलाम् अधिरुह्यतां,...तारेण चक्षुषा...भ्रमरेण पद्मेन।

६८। तत् तस्मात् लक्ष्मीपरिग्रहणात् वल्गुना मनोज्ञेन 'वल्गु मनोज्ञे च वल्गु भाषितमन्यवत्' इति विश्वः। युगपत् तावत् उन्मि युगपदेव उन्मीलितेन सद्यः द्वे अपि परस्परतुलाम् अन्योन्यसादृश्यम् रोहतां प्राप्नुताम्। प्रार्थनायां लोट्। के द्वे? अन्तः प्रस्पन्द चलन्ती परुषेतरा स्निग्धा कनीनिका यस्य तत् तथोक्तम्। 'तार कनीनिका' इत्यमरः। तव चक्षुः, अन्तः प्रचलितभ्रमरं चलद्भ्र युगपदुन्मेषे सति सम्पूर्णसादृश्यलाभ इति भावः॥

৬৮। আপনি নয়ন উন্মীলন করিলেই চঞ্চল সুকোমল তারকায় শোভিত নয়ন, এবং অভ্যন্তরস্থিত চঞ্চল ভ্রমরে শোভিত পদ্ম, এই দুইটী মধুরভাবে হইয়া তৎক্ষণাৎ পরস্পরের সাদৃশ্য সম্পূর্ণরূপে লাভ করিবে।

वृन्तात् श्लथं हरति पुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९

६९ अ:। विभातवायुः ते मुखमारुतस्य स्वाभाविकं सौरभ्यं परगुणेन ईप्सुरिव अनोकहानाम् ...थं पुष्पं वृन्तात् हरति, अरुणांशुभिन्नैः सरसिजैः संसृज्यते ॥ वाच्य—विभातवायुना ईप्सुना ...ह्रियते, संसृज्यते ।

६९। विभातवायुः प्रभातवायुः स्वाभाविकं नैसर्गिकं ते तव मुखमारुतस्य निश्वासपवनस्य सौरभ्यं ताद्दक् सौगन्ध्यमित्यर्थः। परगुणेन अन्यदीयगुणेन सांक्रामिकगन्धेन इत्यर्थः। ईप्सुः आप्तुमिच्छुः इव। 'आप्ज्ञप्यृधामीत्' इति ईकारादेशः। अनोकहानां वृक्षाणां श्लथं शिथिलं पुष्पबन्धनात्। 'वृन्तं प्रसवबन्धनम्' इत्यमरः। हरति आदत्ते। अरुणांशुभिन्नैः अरुणकिरणोद्बोधितैः सरसि जातैः सरसिजैः कमलैः सह। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। संसृज्यते सङ्गच्छते। सृजेर्दैवादिकात् कर्त्तरि लट् ॥

৬৯। যে সৌরভ আপনার নিশ্বাসবায়ুর স্বাভাবিক গুণ, সেই গুণটী অন্যের নিকট হইতে লইবার জন্যই বুঝি প্রাতঃসমীরণ, তরুরাজির বৃন্ত হইতে পতিত কুসুম সকল হরণ করিতেছে এবং অরুণকিরণে বিকসিত সরোজবৃন্দকে আলিঙ্গন করিতেছে।

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाधरोष्ठे
लीलास्मितं सदशनार्च्चिरिव त्वदीयम् ॥ ७०

७० अ:। ताम्रोदरेषु तरुपल्लवेषु पतितं निर्धौतहारगुलिकाविशदं हिमाम्भः लब्धपरभागतया अधरोष्ठे सदशनार्च्चिः त्वदीयं लीलास्मितमिव आभाति ॥ वाच्य—पतितेन...विशदेन हिमाम्भसा सदशनार्च्चिषा त्वदीयेन लीलास्मितेन इव आभायते ।

७०। ताम्रोदरेषु अरुणाभ्यन्तरेषु तरुपल्लवेषु पतितं निर्धौता या हारगुलिका मुक्तामणयः तद्वत् विशदं हिमाम्भः लब्धपरभागतया लब्धोत्कर्षतया। 'परभागो गुणोत्कर्षे' इति यादवः। अधरोष्ठे त्वदीयं सदशनार्च्चिः दन्तकान्तिसहितं लीलास्मितम् इव आभाति शोभते ॥

১০। হারস্থিত নির্ম্মল মুক্তার ন্যায় স্বচ্ছ শিশিরবিন্দুগুলি, রক্তগর্ভ ত... পতিত হওয়ায় অধিকতর শোভা ধারণপূর্ব্বক, যেন আপনার আরক্ত অধরে... বিলাসমধুর মন্দহাস্যের প্রভা বিস্তার করিতেছে।

यावत् प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ৭১

৭১ अ:। प्रतापनिधि: भानु: यावत् न आक्रमते, अह्नाय अरुणेन तावत् तमो निरस्तम्... वीर! त्वयि आयोधनाग्रसरतां याते सति तव गुरु: स्वयं रिपून् उच्छिनत्ति किं वा॥ ... प्रतापनिधिना भानुना आक्रंस्यते अरुण: निरस्तवान्, गुरुणा रिपव: उच्छिद्यन्ते।

৭১। प्रतापनिधिस्तेजोनिधिर्भानुर्यावन्नाक्रमते नोद्गच्छति। '... उद्गमने' इत्यात्मनेपदम्। तावत् भानावनुदित एवेत्यर्थ:। अ... झटिति। 'द्राग्झटित्यञ्जसाह्नाय' इत्यमर:। अरुणेनानूरुणा... सूतोऽरुणोऽनूरु:' इत्यमर:। तमो निरस्तम्। तथाहि हे वीर! ... आयोधनेषु युद्धेषु। 'युद्धमायोधनं जन्यम्' इत्यमर:। अग्रसरतां... सरतां याते सति, तव गुरु: पिता रिपून् स्वयमुच्छिनत्ति किं वा नो... नत्त्येवेत्यर्थ:। न खलु योग्यपुत्रन्यस्तभाराणां स्वामिनां स्वयं व्यापार... इति भाव:॥

১১। তেজোনিধি সূর্য্যদেব উদিত না হইতেই অরুণদেব সমস্ত অন্ধকার... করিয়া থাকেন; অতএব, হে বীর! আপনি সমরক্ষেত্রে অগ্রসর হইলে আ... পিতাকে কি আর শত্রু সংহার করিতে হইবে?।

शय्यां जहत्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगाद्-
भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ৭২

৭২ अ:। उभयपक्षविनीतनिद्रास्ते स्तम्बेरमा: मुखरशृङ्खलकर्षिण: ( सन्त: ) शय्यां जहति... दन्तकोशा: तरुणारुणरागयोगात् भिन्नाद्रिगैरिकतटा इव विभान्ति॥ वाच्य—निद्रै: तै:...स्त... कर्षिभि: शय्या हीयते, दन्तकोशै:...तटै: विभायते।

৭২। उभाभ्यां पक्षाभ्यां पार्श्वाभ्यां विनीता अपगता निद्रा येषां... उभयपक्षविनीतनिद्रा:। अत्र समासविषये उभशब्दस्थाने उभयशब्दप्र...

एव साधुरित्यनुसन्धेयम् । यथाह कैयटः—'उभादुदात्तो नित्य'मिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभशब्दस्य प्रयोगो मा भूत् । उभ-शब्दस्यैव यथा स्यात् । उभयपुत्र इत्यादि भवति इति । सुखशयनु-यानचलनाच्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्ताः, ते च, स्तम्बे रमन्ते इति स्तम्बेरमा हस्तिनः । 'स्तम्बकर्णयो रमिजपोः' इत्यच्प्रत्ययः, 'हस्तिसूचकयोः' इति वक्तव्यात् 'इभः स्तम्बेरमः पद्मी' इत्य-मरः । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । शय्यां जहति त्यजन्ति । येषां स्तम्बेरमाणां दन्ताः कोशा इव दन्तकोशाः दन्तकुड्मलाः अरुणारुणरागयोगात् बालार्ककिरणसम्पर्कात् हेतोः शिलाद्रिगैरिकतटा इव विभान्ति, धातुरक्ता इव भान्ति इत्यर्थः ॥

७२। आपनार हस्तिगण उभय पार्श्व परिवर्त्तनपूर्ब्बक निद्रा त्याग करिया गात्रो-त्थान काले बन्धनशृङ्खल आकर्षण करितेछे, उहादिगेर दन्तकोरक तरुण सूर्य्यकिरण-योगे आरक्त हओयाय बोध हइतेछे येन उहारा पर्ब्बतेर गैरिकमय सानुदेश खात करितेछे।

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३

७३ अ: । हे वनजाक्ष ! दीर्घेषु पटमण्डपेषु नियमिताः वनायुदेश्याः अमी वाहाः निद्रां विहाय पुरोगतानि लेह्यानि सैन्धवशिलाशकलानि वक्त्रोष्मणा मलिनयन्ति ॥ वाच्य—नियमितैः वनायुदेश्यैः अमीभिः वाहैः मलिन्यन्ते ।

७३। हे वनजाक्ष ! नीरजाक्ष ! 'वनं नीरं वनं सत्त्वम्' इति शाश्वतः । दीर्घेषु पटमण्डपेषु नियमिताः बद्धाः वनायुदेश्याः वनायुदेशे भवाः । 'पारसीका वनायुजाः' इति हलायुधः । अमी वाहाः अश्वाः निद्रां विहाय पुरोगतानि लेह्यानि आस्वाद्यानि सैन्धवशिलाशकलानि । सैन्धवोऽस्त्री शितशिवं माणिमन्थश्च सिन्धुजे' इत्यमरः । वक्त्रोष्मणा मलिनयन्ति मलिनानि कुर्वन्ति । उक्तञ्च सिद्धयोगसंग्रहे—'पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम् । शूलमोहविबन्धघ्नं लवणं सैन्धवं परम्॥' इत्यादि ॥

७३। हे कमललोचन ! सुदीर्घ पटमण्डपे निबद्ध वनायुदेशीय ऐ सकल अश्व निद्रा त्याग करिया अवलेहनार्थ सम्मुखे प्रदत्त सैन्धवशिलाखण्ड सकल मुखेर बाष्प द्वारा मलिन करितेछे

भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः ॥ ७४

७४ अ:। म्लानपुष्पोपहारः विरलभक्तिः भवति, प्रदीपाः स्वकिरणपरिवेषोद्भेदशून्याः अयं मञ्जुवाक् पञ्जरस्थः ते शुकः त्वत्प्रबोधप्रयुक्तां नः गिरम् अनुवदति च ॥ वाच्य—म्ला... हारेण विरलभक्तिना भूयते, प्रदीपैः...शून्यैः भूयते, अनेन...पञ्जरस्थेन मञ्जुवाचा शुकेन...प्र... अनूद्यते।

७४। म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरलभक्तिः वि... रचनः भवति। प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्य उद्... स्फुरणेन शून्या भवन्ति निस्तेजस्का भवन्तीत्यर्थः। अपि च अयं ... वाक् मधुरवचनः पञ्जरस्थः ते तव शुकः त्वत्प्रबोधनिमित्ते प्रयुक्ताम् ... रितां नः अस्माकं गिरं वाणीम् अनुवदति अनुकृत्य वदतीत्यर्थः। प्रभातलिङ्गानि वर्त्तन्ते अतः प्रबोद्धव्यमिति ॥

৭৪। উপহারলব্ধ পুষ্পহার সকল ম্লান ও তাহাদিগের গ্রন্থনপারিপা... হইয়াছে, প্রদীপ সকল নিস্তেজ হইয়া প্রভারহিত হইয়াছে, আর এই পি... মধুরভাষী আপনার শুক আপনাকে নিদ্রা হইতে প্রবুদ্ধ করিবার নিমিত্ত আ... উচ্চারিত বাক্যের প্রতিধ্বনি করিতেছে।

इति विरचितवाग्भिर्वन्दिपुत्त्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ।
मदपटु निनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५

७५ अ:। इति विरचितवाग्भिः वन्दिपुत्त्रैः विगतनिद्रः कुमारः सपदि तल्पम् उज्झा... (कथमिव ?) मदपटु निनदद्भिः बोधितः राजहंसैः सुप्रतीकः सुरगजः गाङ्गं सैकतमिव। विगतनिद्रेण कुमारेण उज्झाञ्चक्रे, बोधितेन सुप्रतीकेन सुरगजेन।

७५। इति इत्थं विरचितवाग्भिः वन्दिपुत्त्रैः वैतालिकैः। ... ग्रहणं समानवयस्कत्वद्योतनार्थम्। सपदि विगतनिद्रः कुमारः। ... शय्याट्टदारेषु' इत्यमरः। उज्झाञ्चकार विससर्ज। 'इजादेश्च गुरु... ऽनृच्छः' इत्याम्प्रत्ययः। कथमिव ? मदेन पटु मधुरं निनदद्भिः ... हंसैः बोधितः सुप्रतीकाख्यः सुरगजः ईशानदिग्गजः, गङ्गायाः इदं

कतं पुलिनम् इव । 'तोयोत्थितं तत् पुलिनं सैकतं सिकतामयम्' इत्य-
'सिकताशर्कराभ्यां च' इत्यणूप्रत्ययः । सुप्रतीकग्रहणं प्रायशः
रः । कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसम्भवादित्यनुसन्धेयम् ॥

৭৫। যেরূপ সুপ্রতীক নামক দেবহস্তী প্রভাতে রাজহংসকুলের আনন্দমধুর
রবে জাগরিত হইয়া গঙ্গার পুলিনদেশ হইতে উত্থিত হয়, সেইরূপ বন্দিপুত্রগণের
রচিত স্তুতিবাক্যে জাগরিত হইয়া রাজকুমার অজ তৎক্ষণাৎ শয্যা ত্যাগ করিয়া
উঠিলেন।

अथ विधिमवसाय्य शास्त्रदृष्टं
दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
कुशलविरचितानुकूलवेशः
क्षितिपसमाजमगात् स्वयंवरस्थम् ॥ ७६

इति श्रीमहाकविकालिदासकृतौ रघुवंशे पञ्चमः सर्गः ।

७६ अ०। अथ अञ्चिताक्षिपक्ष्मा (सः कुमारः) शास्त्रदृष्टं दिवसमुखोचितं विधिम् अवसाय्य कुशलविरचितानुकूलवेशः स्वयंवरस्थं क्षितिपसमाजम् अगात् ॥ वाच्य—...पक्ष्मणा...वेशेन स्वयंवरस्थः क्षितिपसमाजः अगायि ।

७६। अथ उत्थानानन्तरम् अञ्चितानि चारूणि अक्षिपक्ष्माणि यस्य सः अजः शास्त्रे दृष्टम् अवगतं दिवसमुखोचितं प्रातःकालोचितं विधिम् अनुष्ठानम् अवसाय्य समाप्य । स्यतेर्ण्यन्तात् ल्यप् । कुशलैः प्रसाधन-दक्षैः विरचितः अनुकूलः स्वयंवरोचितः वेषः नेपथ्यं यस्य सः तथोक्तः सन् स्वयंवरस्थं क्षितिपसमाजं राजसमूहम् अगात् अगमत् । 'इणो गा लुङि' इति गादेशः ॥ पुष्पिताग्रावृत्तमेतत् । तल्लक्षणं—'अयुजि नयुग-रेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये अजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ॥ ५

৭৬। অনন্তর, সুন্দর নয়নপক্ষ্মে শোভিত রাজকুমার অজ, শাস্ত্রানুসারে প্রাতঃকৃত্য সমাপন করিয়া সুনিপুণ ভৃত্যগণের সাহায্যে অভিমত বেশবিন্যাসপূর্ব্বক রাজকুল-সমাকীর্ণ স্বয়ংবরসভায় গমন করিলেন।

পঞ্চম সর্গ সমাপ্ত ॥ ৫

# षष्ठः सर्गः ।

स तत्र मञ्चेषु मनोज्ञवेषान् सिंहासनस्थानुपचारवत्सु
वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान् ॥

१ अः । सः तत्र, उपचारवत्सु मञ्चेषु सिंहासनस्थान् मनोज्ञवेषान् वैमानिकानां मरुताम् इव आकृष्टलीलान् नरलोकपालान् अपश्यत् ॥

जाह्नवी मूर्ध्नि पार्श्वे वा कालः कण्ठे वपुष्यथ ।
कामारिं कामतातं वा कञ्चिद्देवं भजामहे ॥

१। सः अजः, तत्र स्थाने उपचारवत्सु राजोपचारवत्सु मञ्चेषु सिंहासनस्थान् मनोज्ञवेषान् मनोहरनेपथ्यान् वैमानिकानां विमानैश्चरताम्। 'चरति' इति ठक्प्रत्ययः। मरुताम् अमराणाम्। 'मरुतौ पवनामरौ' इत्यमरः। आकृष्टलीलान् गृहीतसौभाग्यान् आकृष्टा लीला यैस्तान् लीलानित्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। नरलोकं पालयन्तीति नरलोकपालाः। कर्म्मण्यण्प्रत्ययः। तान् भूपालान् अपश्यत्। उपेन्द्रवज्रा ऽस्मिन्नुपजातिः ॥

১। রঘুকুমার অজ, সেই স্বয়ংবরসভায় গিয়া দেখিলেন,—রাজযোগ্য উপকরণে সুসজ্জিত একটি একটি মঞ্চের উপর এক একখানি সিংহাসন স্থাপিত ; সেই সিংহাসনে মনোহর বেশধারী নৃপতিগণ উপবিষ্ট হইয়া, বিমানারূঢ় দেবগণের ন্যায় শোভা ধারণ করিয়াছেন।

रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥

२ अः। रतेः गृहीतानुनयेन ईश्वरेण प्रत्यर्पितस्वाङ्गं कामम् इव काकुत्स्थम् आलोकयतां नृपाणां मनः इन्दुमतीनिराशं बभूव ॥

२। 'रतिः स्मरप्रियायाञ्च रागे तु सुरते स्मृता' इति विश्वः। रतेः कामप्रियायाः गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेनेत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् गमासः। ईश्वरेण हरेण, प्रत्यर्पितस्वाङ्गं कामम् इव स्थितं काकुत्स्थम् अजम्, आलोकयतां नृपाणां मनः, इन्दुमत्यां निराशं वैदर्भीनिस्पृहं बभूव। इन्दुमती सत्पतिमेनम् विहाय नास्मान् वरिष्यतीति निश्चिक्युरित्यर्थः। सर्वातिशायि सौन्दर्यमस्य इति भावः॥

पौराणिकी वार्त्ता।—पुरा किल हिमालयशिखरे उग्रे तपसि स्थितस्य भगवतश्चन्द्रमौलेः समाधि-
ताय वासवेन कामः प्रेरितः, स च रत्या वसन्तेन च अनुगम्यमानः तत्र गत्वा उमासमक्षं हरवक्ष-
स्य: धनुषि सम्मोहनं नाम सायकं समधत्त । ततस्तपोभङ्गात् जातकोपस्य पिणाकपाणेस्तृतीय-
नयनात् सहसा निःसृतेन वह्निना स भस्मीभूतः । अथ कदाचित् शङ्करः रतिप्रार्थनया पुनरनङ्ग-
ङ्गं सम्पादितवानिति ।

২। রতিদেবীর সকরুণ অনুনয়ে সন্তুষ্ট মহেশ্বর কর্তৃক প্রত্যর্পিতদেহ অনঙ্গতুল্য
রূপবান্ সেই ককুৎস্থবংশধর কুমার অজকে নিরীক্ষণ করিয়া নৃপতিগণের মন ইন্দুমতী-
লাভবিষয়ে হতাশ হইল।

**दर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।**
**शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३**

३ अ:। असौ कुमारः वैदर्भनिर्दिष्टं मञ्चम्, क्लृप्तेन सोपानपथेन, शिलाविभङ्गैः मृगराजशावः
तुङ्गं नगोत्सङ्गम् इव आरुरोह ॥

३। असौ कुमारः, वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं मञ्चं पर्यङ्कं,
क्लृप्तेन सुविहितेन सोपानपथेन मृगराजशावः सिंहपोतः । 'पोतः पाको-
ऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । शिलानां विभङ्गैः भङ्गीभिः
तुङ्गम् उन्नतं नगोत्सङ्गं शैलाग्रम् इव, आरुरोह ॥

৩। সিংহশাবক যেমন উপর্য্যুপরি শিলাপরম্পরায় পদক্ষেপ করিয়া উচ্চ গিরিশিখরে
আরোহণ করে, তেমনি অজ সুরচিত সোপানপথে পদক্ষেপপূর্ব্বক বিদর্ভরাজ প্রদর্শিত
মঞ্চ ( মঞ্চোপরিস্থিত সিংহাসনে ) আরোহণ করিলেন।

**परार्द्ध्यवर्णास्तरणोपपन्नमासेदिवान् रत्नवदासनं सः ।**
**भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४**

४ अ:। परार्द्ध्यवर्णास्तरणोपपन्नं रत्नवत् आसनम् आसेदिवान् सः मयूरपृष्ठाश्रयिणा गुहेन
भूयिष्ठम् उपमेयकान्तिः आसीत् ॥

४। परार्द्ध्याः श्रेष्ठाः वर्णाः नीलपीतादयः यस्य तेन आस्तरणेन कम्बला-
दिना उपपन्नं सङ्गतं रत्नवत् रत्नखचितम् आसनं सिंहासनम् आसेदिवान्
अधिष्ठितवान् सः अजः, मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह । 'सेनानी-
रग्निभूर्गुहः' इत्यमरः । भूयिष्ठम् अत्यर्थम् उपमेयकान्तिः आसीत् ।
मयूरस्य विचित्ररूपत्वात् तत्साम्यं रत्नासनस्य तद्द्वारा च तदारूढयोर-
पीति भावः ॥

৪। অজ অত্যুৎকৃষ্ট নানাবর্ণরঞ্জিত আস্তরণে শোভিত রত্নখচিত সিংহাসনে
উপবেশন করায়, তাঁহার শোভা, ( অত্যুৎকৃষ্ট বিচিত্রবর্ণে শোভিত ) ময়ূরপৃষ্ঠে উপবিষ্ট
কার্ত্তিকেয়ের শোভার সহিত বহুলরূপে সাদৃশ্যলাভ করিল।

**तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।**
**सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥**

५ अ: । पयोमुचां पङ्क्तिषु विद्युता (सहस्रधा विभक्तः आत्मा इव) तासु राज[illegible] श्रिया सहस्रधा विभक्तः प्रभाविशेषोदयदुर्निरीक्ष्यः आत्मा व्यरुचत् ॥

५ । तासु राजपरम्परासु, श्रिया लक्ष्म्या कर्त्र्या, पयोमुचां [illegible] पङ्क्तिषु विद्युता इव, सहस्रधा विभक्तः, तरङ्गेषु तरणिरिव स्वयं[illegible] प्रत्येकं संक्रामित इत्यर्थः । प्रभाविशेषस्य उदयेन आविर्भावेण, दुर्[illegible] दुर्दर्शनः आत्मा श्रियः स्वरूपं व्यरुचत् व्यद्योतिष्ट । 'द्युद्भ्यो लुङि' [illegible] परस्मैपदं द्युतादित्वादङ्प्रत्ययः । तस्मिन् समये प्रत्येकं संक्रान्तल[illegible] तया तेषां किमपि दुरासदं तेजः प्रादुरासीदित्यर्थः ॥

৫। বিদ্যুৎ যেরূপ সহস্র সহস্র মেঘখণ্ডে সহস্র সহস্র ভাগে বিভক্ত[illegible] শোভা পায়, তদ্রূপ সৌন্দর্য্যের অধিষ্ঠাত্রী লক্ষ্মীদেবীর স্বরূপ (তৎকালে) [illegible] বিশেষের আবির্ভাবে দুর্নিরীক্ষ্য এবং সেই রাজমণ্ডলে সহস্রধা বিভক্ত হইয়া[illegible] পাইতে লাগিল।

**तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।**
**रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥**

६ अ: । महार्हासनसंस्थितानाम् उदारनेपथ्यभृतां तेषां मध्ये, कल्पद्रुमाणां मध्ये [illegible] इव सः रघुसूनुः, एव, धाम्ना रराज ॥

६ । महार्हासनसंस्थितानां श्रेष्ठसिंहासनस्थानाम् उदारनेप[illegible] उज्ज्वलवेषधारिणां तेषां राज्ञां मध्ये, कल्पद्रुमाणां मध्ये पारिजा[illegible] सुरद्रुमविशेष इव । 'पञ्चैते देवतरवो मन्दारः पारिजातकः । [illegible] कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥' इत्यमरः । सः रघुसूनुः ए[illegible] तेजसा रराज । भूम्नेति पाठे अतिशयेनेत्यर्थः । अत्र कल्पद्रु[illegible] पञ्चान्यतमविशेषवचनः, उपकल्पयन्ति मनोरथानिति व्युत्पत्त्या [illegible] मात्रोपलक्षकतया प्रयुक्त इत्यनुसन्धेयम् । कल्पा इति द्रुमाः [illegible] इति विग्रहः ॥

৬। সুরতরুগণের মধ্যে যেমন পারিজাত অধিকতর শোভা পায়, [illegible] সিংহাসনে উপবিষ্ট এবং উৎকৃষ্ট বেশভূষায় অলঙ্কৃত সেই অজও রাজবৃন্দ[illegible] তেজঃপুঞ্জ দ্বারা অধিকতর শোভা পাইতে লাগিলেন।

**नेत्रव्रजाः पौरजनस्य तस्मिन्**
**विहाय सर्वान् नृपतीन् निपेतुः ।**

मदोत्कटे रेचितपुष्पवृक्षा
गन्धद्विपे वन्य इव द्विरेफाः ॥ ७

७ अः। पौरजनस्य नेत्रव्रजाः सर्वान् नृपतीन् विहाय, रेचितपुष्पवृक्षाः द्विरेफाः वन्ये गन्धद्विपे तस्मिन् निपेतुः ॥

७। पौरजनस्य नेत्रव्रजाः, सर्वान् नृपतीन् विहाय, तस्मिन् अजे पेतुः, स एव सर्वोत्कर्षेण ददृशे इत्यर्थः। कथमिव? मदोत्कटे मदेन द्भिन्नगण्डे निर्भरमदे वा वन्ये गन्धद्विपे गन्धप्रधाने द्विपे गजे, रेचिताः क्तीकृताः पुष्पाणां वृक्षाः यैः ते त्यक्तपुष्पवृक्षा इत्यर्थः। द्विरेफाः भृङ्गाः। द्विपस्य वन्यविशेषणं द्विरेफाणां पुष्पवृक्षत्यागसम्भावनार्थं कृतम् ॥

৭। ভ্রমরশ্রেণী যেমন পুষ্পবৃক্ষ পরিত্যাগ করিয়া, মদস্রাবী বন্য হস্তীর উপর তিত হয়, পৌরগণের নয়নপংক্তিও তদ্রূপ সকল নৃপতিকে পরিত্যাগ করিয়া বল সেই অজের উপর নিপতিত হইল।

থ স্তুতে বন্দিভিরন্বয়জ্ঞৈঃ সোমার্কবংশ্যে নরদেবলোকে।

थ स्तुते बन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके।
ञ्चारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥ ८

८। अथेति, पुरेति, मनुष्येति च त्रिभिर्विशेषकम्। अथ अन्वयज्ञैः जवंशाभिज्ञैः वन्दिभिः स्तुतिपाठकैः। 'वन्दिनः स्तुतिपाठकाः' इत्य- रः। सोमार्कवंश्ये सोमसूर्यवंशभवे नरदेवलोके राजसमूहे स्तुते सति, वेशेत्युत्तरेण सम्बन्धः, एवमुत्तरत्रापि योज्यम्। सञ्चारिते समन्तात् चारिते अगुरुसारः योनिः कारणं यस्य तस्मिन् धूपे च वैजयन्तीः ताकाः समुत्सर्पति सति अतिक्रम्य गच्छति सति ॥

৮। অনন্তর, রাজগণের বংশবিবরণে অভিজ্ঞ বন্দিগণ, চন্দ্র ও সূর্য্যবংশীয় পতিগণের গুণগান করিতে আরম্ভ করিলে, অগুরুনির্য্যাস-সমুৎপন্ন ধূপের ধূমরাজি র্দ্দিকে সঞ্চারিত এবং পতাকা সকল উর্দ্ধে সমুত্থিত হইল।

रोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ।
ध्मातशङ्खे परितो दिगन्तांस्तूर्यस्वने मूर्च्छति मङ्गलार्थे ॥ ९

९। किञ्च, पुरस्य उपकण्ठे समीपे उपवनानि आश्रयो येषां तेषां लापिनां बर्हिणाम् उद्धतनृत्यहेतौ मेघध्वनिसादृश्यात् ताण्डवकारणे ध्माताः पूरिताः शङ्खाः यत्र, तस्मिन् मङ्गलार्थे मङ्गलप्रयोजनके तूर्यस्वने ाद्यघोषे परितः सर्वतः दिगन्तान् मूर्च्छति व्याप्नुवति सति ॥

४९ अ: । शिलीमुखोत्कृत्तशिरःफलाढ्या, च्युतैः शिरस्त्रैः चषकोत्तरा इव, शोणितमयकुल्या रणक्षितिः, मृत्योः पानभूमिः इव रराज ॥

४९ । शिलीमुखैः वाणैः उत्कृत्तानि शिरांसि एव फलानि तैः आढ्याः सम्पन्ना: । च्युतैः भ्रष्टैः, शिरांसि त्रायन्ते इति शिरस्त्राणि शीर्षण्यानि । 'शीर्षण्यञ्च शिरस्त्रे च' इत्यमरः । तैः चषकोत्तरा चषकः पानपात्रम् उत्तरं यस्यां सा इव । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । शोणितानि एव मयं तस्य कुल्याः प्रवाहाः यस्यां सा । कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । रणचितिः युद्धभूमिः मृत्योः पानभूमिः इव रराज ॥

৪৯। শরনিকরচ্ছিন্ন মস্তকসকল ফলস্বরূপ, পতিত শিরস্ত্রাণসমূহ পানপাত্র-স্বরূপ এবং রুধিরধারা মদ্যের প্রবাহস্বরূপ লক্ষিত হওয়াতে সেই সমরক্ষেত্র যমরাজের পানভূমির ন্যায় শোভা ধারণ করিল।

उपान्तयोर्निष्कुषितं विहङ्गैराक्षिप्य तेभ्यः पिशितप्रियापि ।
केयूरकोटिक्षततालुदेशा शिवा भुजच्छेदमपाचकार ॥ ५०

५० अ: । विहङ्गैः उपान्तयोः निष्कुषितं भुजच्छेदम् तेभ्यः आक्षिप्य, पिशितप्रिया अपि शिवा, केयूरकोटिक्षततालुदेशा ( सती ) अपाचकार ॥

५० । उपान्तयोः प्रान्तयोः विहङ्गैः पक्षिभिः निष्कुषितं खण्डितम् । 'इण्निष्ठायाम्' इतीड़ागमः । भुजच्छेदं भुजखण्डं तेभ्यः विहङ्गेभ्यः आक्षिप्य आच्छिद्य पिशितप्रिया मांसप्रिया अपि शिवा क्रोष्ट्री । 'शिवः कील: शिवा क्रोष्ट्री' इति विश्वः । केयूरकोट्या अङ्गदाग्रेण क्षतस्तालु-देशो यस्याः सा सती अपाचकार अपसारयामास । किरतेः करोतेर्वा लिट् ॥

৫০। শৃগালী, ভক্ষণলোলুপ পক্ষিসকুল কর্তৃক প্রান্তভাগে খণ্ডীকৃত একখণ্ড হস্ত তাহাদের নিকট হইতে কাড়িয়া লইয়া স্বয়ং মাংসপ্রিয় হইয়াও সেই হস্তখণ্ডস্থিত অঙ্গ-দের অগ্রভাগ দ্বারা তালুদেশ ক্ষত বিক্ষত হওয়াতে তৎক্ষণাৎ উহা পরিত্যাগ করিল।

कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।
वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत् कबन्धं समरे ददर्श ॥५१

५१ अ: । द्विषत्खड्गहृतोत्तमाङ्गः कश्चित् सद्यः विमानप्रभुताम् उपेत्य वामाङ्गसंसक्तसुराङ्गनः (सन्), समरे नृत्यत् स्वं कबन्धं ददर्श ॥

५१ । द्विषतः खड्गेन हृतोत्तमाङ्गः छिन्नशिराः कश्चित् वीरः सद्यः विमानप्रभुतां विमानाधिपत्य' देवत्वमित्यर्थः । उपेत्य प्राप्य वामाङ्ग-संसक्ता सव्योत्सङ्गसङ्गिनी सुराङ्गना यस्य सः तथोक्तः सन् समरे नृत्यत् स्वं निजं कबन्धम् विशिरस्कं कलेवरं ददर्श । 'कबन्धोऽस्त्री क्रियायुक्तमप-मूर्द्ध कलेवरम्' इत्यमरः ॥

৫১। কোন বীর বিপক্ষখড়্গাঘাতে ছিন্নমস্তক হইবামাত্র দেবত্বলাভপূর্ব্বক অঙ্গনাকে বামাঙ্গসঙ্গিনী করিয়া স্বীয় মস্তকহীন দেহকে সমরাঙ্গনে নৃত্য করিতে দেখিতে লাগিল।

**अन्योऽन्यसूतोन्मथनादभूतां**
**तावेव सूतौ रथिनौ च कौचित् ।**
**व्यश्वौ गदाव्यायतसम्प्रहारौ**
**भग्नायुधौ बाहुविमर्दनिष्ठौ ॥ ५२**

५२ अ:। कौचित् अन्योऽन्यसूतोन्मथनात् तौ एव सूतौ रथिनौ च अभूताम्, व्यश्वौ सन्तौ गदाव्यायतसंप्रहारौ (अभूतां) भग्नायुधौ (सन्तौ) बाहुविमर्द्दनिष्ठौ (अभूताम्)॥

५२। कौचित् वीरौ अन्योन्यस्य सूतयोः सारथ्योः उन्मथनात् निधनात् तौ एव सूतौ रथिनौ च योद्धारौ च अभूतां, तौ एव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतः दीर्घः संप्रहारः युद्धं ययोः तौ अभूतां ततः भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्दन निष्ठा नाशः ययोः तौ अभूताम्। 'निष्ठा निष्पत्तिनाशान्ता' इत्यमरः॥

৫২। কোন বীরদ্বয় পরস্পরের সারথি বিনষ্ট হইলে নিজেরাই সারথি ও রথীর কার্য্য করিল; পরে রথের অশ্ব নিহত হইলে বহুক্ষণ গদাযুদ্ধ করিল; শেষে গদা ভগ্ন হইলে পরস্পর বাহুযুদ্ধে বিনাশপ্রাপ্ত হইল।

**परस्परेण क्षतयोः प्रहर्त्रो-**
**रुत्क्रान्तवाय्वोः समकालमेव ।**
**अमर्त्यभावेऽपि कयोश्चिदासी-**
**देकाप्सरःप्रार्थितयोर्विवादः ॥ ५३**

५३ अ:। परस्परेण क्षतयोः समकालम् एव उत्क्रान्तवाय्वोः कयोश्चित् प्रहर्त्रोः एकाप्सरःप्रार्थितयोः (सतोः), अमर्त्त्यभावे अपि विवादः आसीत्॥

५३। परस्परेण अन्योन्यं क्षतयोः क्षततन्वोः समकालम् एककालं यथा तथा उत्क्रान्तवाय्वोः युगपदुद्गतप्राणयोः एका एव अप्सराः प्रार्थिता याभ्यां तयोः एकाप्सरःप्रार्थितयोः प्रार्थितैकाप्सरसोरित्यर्थः। 'वाहिताग्न्यादिषु' इति परनिपातः। अथवा, एकस्याम् अप्सरसि प्रार्थितं प्रार्थना ययोः इति विग्रहः। 'स्त्रियां बहुष्वप्सरसः' इति बहुत्वाभिधानं प्रायिकम्। कयोश्चित् प्रहर्त्त्रोः योधयोः अमर्त्त्यभावे अपि देवत्वे अपि विवादः कलहः आसीत्। एकामिषाभिलाषो हि महद्वैरबीजमिति भावः॥

৫৩। কোনও বীরদ্বয় পরস্পরের অস্ত্রে আহত ও যুগপৎ গতাসু হইয়া অমরত্বলাভ করিলেও উভয়েই এক অপ্সরালাভার্থী হইয়া পরস্পর বিবাদ করিতে লাগিল।

व्यूहावुभौ तावितरेतरस्माद्भङ्गं जयञ्चापतुरव्यवस्थम् ।
पश्चात्पुरोमारुतयो: प्रवृद्धौ पर्य्यायवृत्त्येव महार्णवोर्म्मी ॥ ५४

५४ अ:। पश्चात्पुरो-मारुतयो: पर्य्यायवृत्त्या प्रवृद्धौ महार्णवोर्म्मी इव, तौ उभौ व्यूहौ इतरेतरस्मात् अव्यवस्थं भङ्गं जयं च आपतु: ॥

५४। तौ उभौ व्यूहौ सेनासङ्घातौ। 'व्यूहस्तु बलविन्यास:' इत्यमर:। पश्चात् पुरश्च यौ मारुतौ तयो: पर्य्यायवृत्त्या क्रमवृत्त्या प्रवृद्धौ महार्णवोर्म्मी इव इतरेतरस्मात् अन्योन्यस्मात् अव्यवस्थं व्यवस्थारहितम् अनियतं जयं भङ्गम् पराजयं च आपतु: प्राप्तवन्तौ ॥

৫৪। মহার্ণবের তরঙ্গ যেমন পশ্চাৎ ও পুরোবর্ত্তী বায়ুবেগপ্রভাবে পর্য্যায়ক্রমে উন্নত ও অবনত হইতে থাকে, সেইরূপ সেই বূ্যহদ্বয়মধ্যে কখনও কোন পক্ষে জয় কখনও কোন পক্ষে পরাজয় হইতে লাগিল।

परेण भग्नेऽपि बले महौजा ययावज: प्रत्यरिसैन्यमेव ।
धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्नि: ॥५५

५५ अ:। बले परेण भग्ने अपि, महौजा: अज: प्रत्यरिसैन्यम् एव ययौ, समीरणेन धूम: निवर्त्येत, वह्नि: तु यत: कक्ष:, तत एव ॥

५५। बले स्वसैन्ये परेण परबलेन भग्ने अपि महौजा: महाबल: अज: अरिसैन्यं प्रति एव ययौ। तथाहि समीरणेन वायुना धूम: निवर्त्येत कक्षादपसार्य्येत। वर्त्तेर्ण्यन्तात् कर्मणि सम्भावनायां लिङ्। वह्निस्तु यत: यत्र कक्ष: तृणम् 'कक्षौ तु तृणवीरुधौ' इत्यमर:। तत एव प्रवर्त्तते इति शेष:। सार्वविभक्तिकस्तसि: ॥

৫৫। শত্রুসৈন্য কর্তৃক নিজসৈন্য পরাঙ্মুখীকৃত হইলেও মহাবল অজ স্বয়ং প্রতি-সেনার সম্মুখীন হইলেন। সমীরণ ধূমকে অপসারিত করিতে পারে বটে, কিন্তু অগ্নি কিছুতেই স্থানান্তরিত হয় না, উহা তৃণরাশিতেই সংলগ্ন থাকে।

रथी निषङ्गी कवची धनुष्मान् दृप्त: स राजन्यकमेकवीर: ।
निवारयामास महावराह: कल्पक्षयोद्वृत्तमिवार्णवाम्भ: ॥ ५६

५६ अ:। रथी निषङ्गी कवची धनुष्मान् दृप्त: एकवीर: स: महावराह: कल्पक्षयोद्वृत्तम् अर्णवाम्भ: इव राजन्यकं निवारयामास ॥

५६। रथी रथारूढ:, निषङ्गी तूणीरवान्। 'तूणोपासङ्गतूणीरनिषङ्गा

इषुधिर्द्वयोः' इत्यमरः। कवची वर्म्मधरः, धनुष्मान् धनुर्धरः इषु... एकवीरः असहायशूरः सः अजः, राजन्यकं राजसमूहकम्। 'गोत्रो... इत्यादिना वुञ्प्रत्ययः। महावराहः वराहावतारो विष्णुः, कल्पान्तकाले उद्वृत्तम् उद्वेलम् अर्णवाम्भः इव निवारयामास॥

৫৬। যেরূপ মহাবরাহ প্রলয়কালে মহাসাগরের উচ্ছলিত সলিলবেগ ... করিয়াছিলেন, সেইরূপ সেই তূণীরবান্, বর্ম্মধারী, ধনুর্দ্ধর অজ রথারোহ... একাকীই বিপক্ষভূপালবৃন্দের আক্রমণ নিবারণ করিয়াছিলেন।

स दक्षिणं तूणमुखेन वामं
व्यापारयन् हस्तमलक्ष्यताजौ।
आकर्णकृष्टा सकृदस्य योद्धु-
र्मौर्वीव बाणान् सुषुवे रिपुघ्नान्॥ ५७

५७ अ:। स दक्षिणं हस्तं तूणमुखेन वामं व्यापारयन् (सन्) अलक्ष्यत, अस्य योद्धुः आकर्णकृष्टा मौर्वी रिपुघ्नान् बाणान् सुषुवे इव॥

५७। सः अजः, आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गद्वा... रेण वामम् अतिसुन्दरम्। 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' विश्वः। व्यापारयन् अलक्ष्यत, शरसन्धानादयस्तु दुर्लक्ष्या इत्यर्थः। आकर्णकृष्टा योद्धुः अस्य अजस्य मौर्वी ज्या, रिपून् घ्नन्तीति रिपुघ्नाः ता... 'अमनुष्यकर्तृके च' इति टक्प्रत्ययः। बाणान् सुषुवे इव, इत्युत्प्रेक्षा।

৫৭। যুদ্ধকালে তাঁহার দক্ষিণকর তূণীর মুখে সুন্দররূপে সংলগ্ন রহিয়াছে ... লক্ষিত হইত, কিন্তু তিনি যে কখন শরসন্ধান বা শরপ্রয়োগ করিতেন তাহা ... লক্ষ্য হইত না। সেই বীরের শরাসন-জ্যা যেন একবারমাত্র আকর্ণ আকৃষ্ট... নিরন্তর রিপুনাশকর শরনিকর প্রসব করিতে লাগিল।

स रोषदष्टाधिकलोहितोष्ठैर्व्यक्तोर्द्ध्वरेखा भ्रुकुटीर्वहद्भिः।
तस्तार गां भल्लनिकृत्तकण्ठैर्हूङ्कारगर्भैर्द्विषतां शिरोभिः॥

५८ अ:। सः रोषदष्टाधिकलोहितोष्ठैः व्यक्तोर्द्ध्वरेखाः भ्रुकुटीः वहद्भिः भल्लनिकृत्त... हुङ्कारगर्भैः द्विषतां शिरोभिः गां तस्तार॥

५८। सः अजः, रोषेण दष्टाः अतएव अधिकलोहिताः ओष्ठाः ... तानि तैः व्यक्ता ऊर्द्ध्वा रेखा यासां ताः भ्रुकुटीः भ्रूभङ्गान् वहद्भिः भल्लनि... कृत्ताः बाणविशेषच्छिन्नाः कण्ठाः येषां तैः हुङ्कारगर्भैः सहुङ्कारैः हुङ्का... रित्यर्थः। द्विषतां शिरोभिः गां भूमिं तस्तार छादयामास॥

৫৮। তাঁহার ভল্লাগ্রে ছিন্ন বিচ্ছিন্ন বিপক্ষপক্ষের ক্রোধদষ্ট লোহিতবর্ণ ওষ্ঠপুট ...র সুস্পষ্টলক্ষিত ঊর্দ্ধরেখাশালী ভ্রুকুটিকুটিল শত্রুমস্তকে ভূমিতল সমাচ্ছন্ন হইল। ...ন এমনই ক্ষিপ্রহস্তে তাহাদের মস্তক ছেদন করিতে লাগিলেন যে, ছিন্নমুণ্ডেও ...রশব্দ উচ্চারিত হইতে লাগিল।

...र्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कङ्कटभेदिभिश्च ।
...प्रयत्नेन च भूमिपालास्तस्मिन् प्रजह्रुर्युधि सर्व एव ॥ ५९

५९ श्र:। युधि सर्वे एव भूमिपालाः द्विरदप्रधानैः सर्वैः बलाङ्गैः, कङ्कटभेदिभिः सर्वायुधैः, सर्व-...न च, तस्मिन् प्रजह्रुः ॥

५९। द्विरदप्रधानैः गजमुख्यैः सर्वैः बलाङ्गैः। 'हस्त्यश्वरथपादातं ...ङ्गं स्याच्चतुष्टयम्' इत्यमरः। कङ्कटभेदिभिः कवचभेदिभिः। 'उर-...दः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्यमरः। सर्वायुधैश्च। वाह्य-...मुक्त्वा आन्तरमाह—सर्वप्रयत्नेन च सर्वे एव भूमिपालाः युधि तस्मिन् ...नि प्रजह्रुः तं प्रजह्रुरित्यर्थः। सर्वत्र सर्वकारकशक्तिसम्भवात् कर्मणो-...धिकरणविवक्षायां सप्तमी। तदुक्तम्—'अनेकशक्तियुक्तस्य विश्वस्यानेक-...र्मणः। सर्वदा सर्वथाभावात् क्वचित् किञ्चित् विवक्ष्यते' इति ॥

৫৯। ভূপালগণ সমরাঙ্গনে সর্ব্বপ্রযত্নে অজের প্রতি দ্বিরদপ্রধান চতুরঙ্গবল ও ...বিধ বর্ম্মভেদক আয়ুধ সকল প্রয়োগ করিতে লাগিল।

...ऽस्त्रव्रजैश्छन्नरथः परेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः ।
...हारमग्नो दिनपूर्वभागः किञ्चित्प्रकाशेन विवस्वतेव ॥६०

६० श्र:। परेषाम् अस्त्रव्रजैः छन्नरथः सः अजः, नीहारमग्नः दिनपूर्वभागः किञ्चित्प्रकाशेन ...स्वता इव ध्वजाग्रमात्रेण लक्ष्यः बभूव ॥

६०। परेषां द्विषाम् अस्त्रव्रजैः छन्नरथः सः अजः, नीहारैः हिमैः ...नः दिनपूर्वभागः प्रातःकालः किञ्चित्प्रकाशेन ईषल्लक्ष्येण विवस्वता ..., ध्वजाग्रमात्रेण लक्ष्यः बभूव, ध्वजाग्रादन्यन्न किञ्चिल्लक्ष्यते स्म इत्यर्थः ॥

৬০। অজের রথ শত্রুগণ-নিক্ষিপ্ত অস্ত্রসমূহে সমাচ্ছন্ন হওয়াতে কেবল উহার ...মাত্র দেখা যাইতে লাগিল ; সূর্য্যদেব অল্পমাত্র প্রকাশিত হইলে নীহারনিমগ্ন প্রভাত ...রের ন্যায় তৎকালে তিনি শোভা পাইতে লাগিলেন।

...यंवदात् प्राप्तमसौ कुमारः प्रायुङ्क्त राजस्वधिराजसूनुः ।
...गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः॥६१

६१ अ:। स्वप्ननिवृत्तलौल्य: कुसुमास्त्रकान्त: अधिराजसूनु: असौ कुमार:, प्रियं... प्रस्वापनं गान्धर्वम् अस्त्रं प्रायुङ्क्त ॥

६१। अधिराजसूनु: महाराजपुत्र: कुसुमास्त्रकान्त: मदन... स्वप्ननिवृत्तलौल्य: स्वप्नविद्वेषण: जागरूक इत्यर्थ: असौ कुमार: प्रियंवदात् पूर्वोक्तात् गन्धर्वात् प्राप्तं गान्धर्वं गन्धर्वदेवताकम्। ... देवता' इत्यण्। प्रस्वापयतीति प्रस्वापनं निद्राजनकम् अस्त्रं प्रायुङ्क्त प्रयुक्तवान् ॥

৬১। অনন্তর নিরন্তর জাগরূক কমনীয়কলেবর অধিরাজকুমার অজ, ... গন্ধর্ব্ব হইতে প্রাপ্ত সেই নিদ্রাসাধন গন্ধর্ব্ব অস্ত্র নৃপতিগণের প্রতি প্রয়োগ করি...

**ततो धनुष्कर्षणमूढहस्तमेकांसपर्य्यस्तशिरस्त्रजालम्।**
**तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥**

६२ अ:। तत: धनुष्कर्षणमूढहस्तम् एकांसपर्य्यस्तशिरस्त्रजालं ध्वजस्तम्भनिषण्णदेहं नर... निद्राविधेयं ( सत् ) तस्थौ ॥

६२। तत: धनुष्कर्षणे चापकर्षणे मूढहस्तम् अव्यापृतहस्तम् ...स्मिन् अंसे पर्य्यस्तं स्रस्तं शिरस्त्राणां शीर्षण्यानां जालं समूह: यस्य... ध्वजस्तम्भेषु निषण्णा: अवष्टब्धा: देहा यस्य तत् नरदेवानां राज्ञां सैन्यं सैन्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्प्रत्यय:। निद्राविधेयं ... परतन्त्रं तस्थौ ॥

৬২। তখন সেই অস্ত্রপ্রভাবে সসৈন্য ভূপালগণ নিদ্রায় অভিভূত হইল, ... করনিকর আর শরাসন আকর্ষণে সমর্থ হইল না এবং শিরস্ত্রাণসমূহ স্কন্ধদেশে ... হইল। তাহারা ধ্বজস্তম্ভ অবলম্বন করিয়া নিদ্রা যাইতে লাগিল।

**तत: प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमार:**
**येन स्वहस्तार्जितमेकवीर: पिबन् यशो मूर्त्तमिवाबभासे ॥**

६३ अ:। तत: कुमार:, प्रियोपात्तरसे अधरोष्ठे जलजं निवेश्य दध्मौ, येन, एकवीर: (कुमार: ) स्वहस्तार्जितं मूर्त्तं यश: पिबन् इव आबभासे ॥

६३। तत: कुमार: अज:, प्रियया इन्दुमत्या उपात्तरसे आस्वादित... माधुर्य्ये अतिश्लाघ्ये इति भाव:। अधरोष्ठे जलजं शङ्खं निवेश्य। '... शङ्खपद्मयो:' इति विश्व:। दध्मौ मुखमारुतेन पूरयामास, तेनौष्ठनिविष्टेन शङ्खेन एकवीर: स:, स्वहस्तार्जितं मूर्त्तं मूर्त्तिमत् यश: पिबन् आबभासे, यशस: शुभ्रत्वादिति भाव: ॥

৬৩। অনন্তর রাজকুমার অজ প্রিয়াপীতরস স্বীয় অধরোষ্ঠে শঙ্খ রাখিয়া মুখ-…তে পূরিত করিতে লাগিলেন ; তখন বোধ হইল যেন, অদ্বিতীয় বীর স্বহস্তার্জ্জিত মূর্ত্তিমৎ যশ পান করিতেছেন।

**शङ्खस्वनाभिज्ञतया निवृत्ता-**
**स्तं सन्नशत्रुं ददृशुः स्वयोधाः ।**
**निमीलितानामिव पङ्कजानां**
**मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४**

६४ अः। स्वयोधाः शङ्खस्वनाभिज्ञतया निवृत्ताः (सन्तः) निमीलितानां पङ्कजानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् इव, सन्नशत्रुं तं ददृशुः ॥

६४। शङ्खस्वनस्य अजशङ्खध्वनेः अभिज्ञतया प्रत्यभिज्ञातत्वात् निवृत्ताः प्राक् पलाय्य सम्प्रति प्रत्यागताः स्वयोधाः आत्मनो भटाः सन्नशत्रुं निद्राण-शत्रुं तम् अजं, निमीलितानां मुकुलितानां पङ्कजानां मध्ये स्फुरन्तं, प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिबिम्बचन्द्रम् इव, ददृशुः ॥

৬৪। তাঁহার সেনাগণ স্বরপরিচয়ে তাঁহারই শঙ্খধ্বনি হইতেছে বুঝিতে পারিয়া তথায় প্রত্যাগমনপূর্ব্বক দেখিল ;—যুবরাজ অজ নিদ্রিত শত্রুগণমধ্যে মুকুলিত কমলদল মধ্যগত বারিপ্রতিবিম্বিত শশাঙ্কের ন্যায় শোভা পাইতেছেন।

**सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम् ।**
**यशो हृतं संप्रति राघवेण न जीवितं वः कृपयेति वर्णाः ॥ ६५**

६५ अः। 'सम्प्रति राघवेण वः यशः हृतम् कृपया जीवितं न हृतम्'—इति वर्णाः, तेन सशोणितैः शिलीमुखाग्रैः पार्थिवानां केतुषु निक्षेपिताः ॥

६५। सम्प्रति राघवेण रघुपुत्रेण पूर्वं रघुणा इति भावः। हे राजानः ! वः युष्माकं यशः हृतं, जीवितं तु कृपया न हृतं, न त्वशक्त्या इति भावः। इत्येवं रूपा वर्णाः एतदर्थप्रतिपादकं वाक्यमित्यर्थः। सशोणितैः शोणित-दिग्धैः शिलीमुखाग्रैः वाणाग्रैः साधनैः तेन अजेन प्रयोजककर्त्रा पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः प्रयोज्यैरन्यैर्निवेशिताः लेखिता इत्यर्थः। क्षिपतेर्ण्यन्तात् कर्म्मणि क्तः ॥

৬৫। অতঃপর তিনি শোণিতলিপ্ত শরাস্ত্রদ্বারা নৃপতিগণের কেতুতে "হে ভূপাল-গণ! রঘুতনয় তোমাদিগের যশোরাশি অপহরণ করিলেন, কিন্তু দয়াপরবশ হইয়া জীবননাশ করিলেন না" এই বর্ণ কয়েকটা সন্নিবেশিত করিলেন।

**स चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलि-**
**र्ललाटबद्धश्रमवारिबिन्दुर्भीतां प्रियामेत्य वचो बभाषे ॥**

६६ अ:। चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः ललाटबद्धश्रमवारिबि-
भीतां प्रियाम् एत्य वच: बभाषे ॥

६६। चापकोट्यां निहितः एकबाहुर्येन सः शिरस्त्रस्य निष्का-
अपनयनेन भिन्नमौलिः श्लथकेशबन्धः। 'चूड़ा किरीटं केशाश्च सं-
मौलयस्त्रयः' इत्यमरः। ललाटे बद्धाः श्रमवारिबिन्दवः यस्य सः
भीतां प्रियाम् इन्दुमतीम् एत्य आसाद्य वचः बभासे ॥

৬৬। যুদ্ধশ্রমে তাঁহার ললাটদেশ হইতে স্বেদবিন্দু নির্গলিত হইতে লাগিল,
শিরস্ত্রাণ অপনীত হওয়ায় কেশবন্ধন শিথিল হইয়া গেল। অনন্তর তিনি নিতান্ত ভীত
ইন্দুমতী-সন্নিধানে গমন করিয়া কার্ম্মুকের কোটিদেশে একটী হস্তসংস্থাপনপূর্ব্বক
বলিতে লাগিলেন।

**इतः परानर्भकहार्य्यशस्त्रान् वैदर्भि पश्यानुमता मयासि।**
**एवंविधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ ६**

६७। वैदर्भि! इतः अर्भकहार्य्यशस्त्रान् परान् पश्य, मया अनुमता असि, एभिः एवं-
आहवचेष्टितेन, मम हस्तगता त्वं प्रार्थ्यसे ॥

६७। हे वैदर्भि! इन्दुमति! इतः इदानीम् अर्भकहार्य्यशस्त्रान्
बालकापहार्य्यायुधान् परान् शत्रून् पश्य, मया अनुमता असि, द्रष्टुमि-
शेषः। एभिः नृपैः एवंविधेन निद्रारूपेण आहवचेष्टितेन रणकर्म्मणा म-
हस्तगता हस्तगतवत् दुर्ग्रहा इत्यर्थः, त्वं प्रार्थ्यसे अपजिहीर्ष्यसे इत्यर्थः।
एवंविधेनेत्यत्र स्वहस्तनिर्द्देशेन सोपहासमुवाचेति द्रष्टव्यम् ॥

৬৭। হে বিদর্ভরাজনন্দিনি! আমি অনুমতি করিতেছি,—তুমি এই রিপুগণের
প্রতি নেত্রপাত কর, এক্ষণে ইহাদিগের নিকট হইতে একটী বালকেও অস্ত্রশস্ত্র কাড়িয়া
লইতে পারে। আর কিনা ইহারাই এইরূপ সমরকৌশলে আমার হস্ত হইতে তোমাকে
লাভ করিতে প্রবৃত্ত হইয়াছিল!

**तस्याः प्रतिद्वन्द्विभवाद्विषादात् सद्यो विमुक्तं मुखमावभासे।**
**निःश्वासबाष्पापगमात् प्रपन्नः प्रसादमात्मीयमिवात्मदर्शः ॥ ६**

६८। प्रतिद्वन्द्विभवात् विषादात् सद्यः विमुक्तं तस्याः मुखम्, निःश्वासबाष्पापगमात् आत्मीयं
प्रसादं प्रपन्नः आत्मदर्शः इव, आबभासे ॥

६८। प्रतिद्वन्द्विभवात् रिपूत्थात् विषादात् दैन्यात् सद्यः विमुक्त-

तस्याः मुखं, निःश्वासस्य यः वाष्पः उष्मा । 'वाष्पो नेत्रजलोष्मणोः' इति विश्वः । तस्य अपगमात् हेतोः आत्मीयं प्रसादं नैर्मल्यं प्रपन्नः प्राप्तः आत्मा स्वरूपं दृश्यते अनेनेति आत्मदर्शः दर्पणः इव, आबभासे ॥

৬৮। নিশ্বাসবাষ্প অপগত হইলে দর্পণে যেরূপ স্বীয় নির্ম্মলতা পরিলক্ষিত হয়, বিপক্ষভীতিজনিত বিষাদমুক্ত হইয়া ইন্দুমতীর মুখকমলও তদ্রূপ নির্ম্মলভাব ধারণ করিল।

हृष्टापि सा ह्रीविजिता न साक्षाद्-

वाग्भिः सखीनां प्रियमभ्यनन्दत् ।

स्थली नवाम्भःपृषताभिवृष्टा

मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ६९

६९ अ:। सा इन्दुमती हृष्टा अपि ह्रीविजिता (सती) साक्षात् न, (किन्तु) नवाम्भःपृषताभिवृष्टा स्थली मयूर-केकाभिः अभ्रवृन्दम् इव, सखीनां वाग्भिः प्रियम् अभ्यनन्दत् ॥

६९। सा इन्दुमती हृष्टा अपि पत्युः पौरुषेण प्रमुदिता अपि ह्रिया विजिता यतः अतः प्रियम् अजम् साक्षात् स्वयं न अभ्यनन्दत् न प्रशशंस, किन्तु नवैः अम्भःपृषतैः पयोबिन्दुभिः अभिवृष्टा अभिषिक्ता स्थली अकृत्रिमा अभिषिक्ता स्थली अकृत्रिमा भूमिः । 'जनपदकुण्डगोणस्थल' इत्यादिना अकृत्रिमार्थे ङीष् । अभ्रवृन्दं मेघसङ्घं मयूरकेकाभिः इव, सखीनां वाग्भिः अभ्यनन्दत् ॥

৬৯। তৎকালে ইন্দুমতী সাতিশয় হর্ষপুলকিতা হইলেও লজ্জাবশতঃ প্রিয়তম অজকে অভিনন্দিত করিতে সমর্থা হইলেন না। নব সলিলবিন্দু দ্বারা অভিষিক্ত বনস্থলী যেমন ময়ূরের কেকারবে মেঘসমূহকে অভিনন্দিত করে, তিনিও তদ্রূপ সখীগণের মুখ দ্বারা তাঁহার অভিনন্দন করিলেন।

इति शिरसि स वामं पादमाधाय राज्ञा-

मुदवहदनवद्यां तामवद्यादपेतः ।

रथतुरगरजोभिस्तस्य रूक्षालकाग्रा

समरविजयलक्ष्मीः सैव मूर्त्ता बभूव ॥ ७०

७० अ:। अवद्यात् अपेतः स इति राज्ञां शिरसि वामं पादम् आधाय, अनवद्यां ताम् उदवहत् रथतुरगरजोभिः रूक्षालकाग्रा सा एव तस्य मूर्त्ता समरविजयलक्ष्मीः बभूव ॥

७०। न उद्यते न उच्यते इति अवद्यः गर्ह्यम् । 'अवद्यपण्य'— इत्यादिना निपातः । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः ।

तस्मात् अर्पितः निर्दोष इत्यर्थः । सः अजः, इति राज्ञां शिरसि
पादम् आधाय, अनवद्याम् अदोषाम् ताम् इन्दुमतीम् उदवहत् उपा
आत्मसाच्चकार इत्यर्थः । अयमर्थः 'तमुद्वहन्तं पथि भोजकन्याम्'
न श्लिष्टः । तस्य अजस्य रथतुरगाणां रजोभिः रूक्षाणि पर
अलकाग्राणि यस्याः सा, इन्दुमती एव मूर्त्ता मूर्त्तिमती समरविजयल
बभूव । एतल्लाभादन्यः को विजयलक्ष्मीलाभ इत्यर्थः ॥

১০। এইরূপ অনিন্দনীয় যুবরাজ অজ রাজাদিগের মস্তকে বামপদ অর্পণ ক
অনিন্দনীয়া ইন্দুমতীকে রথে লইয়া গমন করিলে রথের অশ্বক্ষুরোত্থিত ধূলিপটল
ইন্দুমতীর অলকজাল রুক্ষ লইয়া গেল ; তৎকালে তিনিই যেন অজের মূর্ত্তিমতী বি
লক্ষ্মী লইলেন।

प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभू-
न्न हि सति कुलधुर्ये सूर्यवंश्या गृहाय ॥ ७१

इति श्रीमहाकविकालिदासकृतौ रघुवंशे सप्तमः सर्गः ॥ ७

७१ अ:। प्रथमपरिगतार्थः रघुः, संनिवृत्तं विजयिनं श्लाघ्यजायासमेतं तम् अभिनन्द्य, त
हितकुटुम्बः (सन्) शान्तिमार्गोत्सुकः अभूत्, हि कुलधुर्ये सति, सूर्यवंश्याः गृहाय न ॥

७१। प्रथमम् अजगमनात् प्राक् एव परिगतः ज्ञातः अर्थः विवा
विजयरूपः येन सः प्रथमपरिगतार्थः रघुः, विजयिनं विजययुक्तं श्ला
जायासमेतं संनिवृत्तं प्रत्यागतं तम् अजम् अभिनन्द्य तस्मिन् अजे त
हितकुटुम्बः सन्, 'सुतविन्यस्तपत्नीकः' इति याज्ञवल्क्यस्मरणादि
भावः। शान्तिमार्गे मोक्षमार्गे उत्सुकः अभूत्। तथाहि—कुलधु
कुलधुरन्धरे सति सूर्यवंश्याः गृहाय गृहस्थाश्रमाय न भवन्ति ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये अजपाणिग्रहणो नाम सप्तमः सर्गः ॥ ७

৭১। এ দিকে মহারাজ রঘু, অজের জয়লাভ ও বিবাহবৃত্তান্ত পূর্ব্বেই অব
হইয়াছিলেন ; এক্ষণে তাঁহাকে বিজয়ী ও শ্লাঘনীয়া জায়ার সহিত আসিতে দে
তাঁহাকে অভিনন্দন করিলেন এবং পরে নিজ ভার্য্যার রক্ষণভার রঘুর উপর ন্য
করিয়া মুক্তিপথের পথিক হইলেন। যেহেতু পুত্র কুলভারবহনে সমর্থ হইলে সূ
বংশীয়েরা গৃহস্থাশ্রমে অবস্থান করেন না।

সপ্তম সর্গ সমাপ্ত ॥ ৭

# अष्टमः सर्गः ।

**अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः ।**
**वसुधामपि हस्तगामिनीमकरोदिन्दुमतीमिवापराम् ॥ १**

१ अ.। अथ पार्थिवः ललितं विवाहकौतुकं बिभ्रत एव तस्य अपराम् इन्दुमतीम् इव वसुधाम् अपि हस्तगामिनीम् अकरोत् ॥

हेरम्बमवलम्ब्येऽहं यस्मिन् पातालकेलिषु ।
दन्तेनोद्धरति क्षौणीं विश्राम्यन्ति फणीश्वराः ॥

१। अथ पार्थिवः रघुः, ललितं सुभगं विवाहकौतुकं विवाहमङ्गलं विवाहहस्तसूत्रं वा बिभ्रत एव धारयत एव। 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः। तस्य अजस्य अपराम् इन्दुमतीम् इव वसुधाम् अपि हस्तगामिनीम् अकरोत्। अस्मिन् सर्गे वियोगिनी वृत्तम् ॥

১। অনন্তর রঘু, বিবাহসূত্রধারী স্বীয় আত্মজ অজের করে দ্বিতীয়া ইন্দুমতীর ন্যায় অবনীকেও প্রদান করিলেন।

**दुरितैरपि कर्त्तुमात्मसात् प्रयतन्ते नृपसूनवो हि यत् ।**
**तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ २**

२। नृपसूनवः यत् दुरितैः अपि आत्मसात् कर्त्तुं प्रयतन्ते हि, अजः उपस्थितं तत् 'पितुराज्ञा' इति अग्रहीत् भोगतृष्णया (तु) न ॥

२। नृपसूनवः राजपुत्राः, यत् राज्यं दुरितैः अपि विषप्रयोगादिभिः पापोपायैः अपि आत्मसात् स्वाधीनम्। 'तदधीनवचने' इति साति-प्रत्ययः। कर्त्तुं प्रयतन्ते हि प्रवर्त्तन्ते एव इत्यर्थः। हिशब्दोऽवधारणे। 'हि हेतावबधारणे' इत्यमरः। उपस्थितं प्राप्तं तत् राज्यम्, अजः, पितुराज्ञा इति हेतोः अग्रहीत् स्वीचकार, भोगतृष्णया तु न अग्रहीत् ॥

২। অন্যান্য নৃপতনয়েরা বিবিধ দুষ্কার্য্যদ্বারাও যে রাজ্য আত্মসাৎ করিতে সচেষ্ট হন, যুবরাজ অজ ভোগতৃষ্ণার বশীভূত না হইয়া পিতার আদেশগৌরবেই সেই রাজ্য গ্রহণ করিয়াছিলেন।

**अनुभूय वशिष्ठसम्भृतैः सलिलैस्तेन सहाभिषेचनम् ।**
**विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥ ३ ॥**

३ अ:। मेदिनी वशिष्ठसम्भृतैः सलिलैः तेन सह अभिषेचनम् अनुभूय विशदोच्छ्वसितेन कृतार्थताम् कथयामास इव ॥

३। मेदिनी भूमिः महिषी च ध्वन्यते। वशिष्ठेन सम्भृतैः आहृतैः सलिलैः तेन अजेन सह अभिषेचनम् अनुभूय विशदोच्छ्वसितेन स्फुटमुद्दृंहणेन आनन्दनिर्मलोच्छ्वसितेन चेति ध्वन्यते, कृतार्थतां वल्लभलाभकृतं साफल्यं कथयामास इव। न चैतावता पूर्वेषामप्रशंसापरत्वात्, 'सर्वत्र जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्, इति कृतत्वाच्च ॥

৩। মেদিনী, মহর্ষি বশিষ্ঠপ্রদত্ত অভিষেকজলে অজের সহিত সিক্ত হইয়া উচ্ছ্বাস দ্বারা যেন গুণবান্ ভর্তৃলাভে আপনার কৃতার্থতা প্রকাশ করিলেন।

**स बभूव दुरासदः परैर्गुरुणाथर्व्वविदा कृतक्रियः ।**
**पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥**

४ अ:। स अथर्ववविदा गुरुणा कृतक्रियः ( सन् ) परैः दुरासदः बभूव अस्त्रतेजसा सहितं ब्रह्म अयम् पवनाग्निसमागमः हि ॥

४। अथर्वविदा अथर्ववेदाभिज्ञेन गुरुणा वशिष्ठेन कृतक्रियः अथर्वविधिना कृताभिषेकसंस्कार इत्यर्थः। सः अजः, परैः शत्रुभिः दुरासदः दुर्द्धर्षः बभूव। तथाहि, अस्त्रतेजसा क्षत्त्रतेजसा सहितं युक्तं यत् ब्रह्मतेजः अयं पवनाग्निसमागमः हि, तत्कल्प इत्यर्थः। पवनाग्निः पूर्वनिपातशास्त्रस्यानित्यत्वात् 'द्वन्द्वेति' इति नाग्निशब्दस्य पूर्वनिपातः। तथाच काशिकायां—'अयमेकस्तु लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्' इति। क्षात्त्रेणैवायं दुर्द्धर्षः, किमयं पुनर्ब्राह्मप्रभावे सति इत्यर्थः। अत्र मनुः—'नाक्षत्त्रं ब्रह्म भवति क्षत्त्रं नाब्रह्म वर्द्धते। ब्रह्मक्षत्त्रे तु संयुक्ते इहामुत्र च वर्द्धते।' इति ॥

৪। অথর্ব্ববিদ্ কুলগুরু বশিষ্ঠ কর্তৃক যথাবিধি অভিষেক কার্য্য সম্পন্ন হইলে যুবরাজ অজ বিপক্ষগণের দুর্দ্ধর্ষ হইয়া উঠিলেন; কেননা ক্ষত্রিয়তেজের সহিত ব্রহ্মতেজ মিলিত হইলে অগ্নির সহিত বায়ুর সংযোগের ন্যায় তাহা লোকের দুর্দ্ধর্ষ হইয়া থাকে।

**रघुमेव निवृत्तयौवनं तममन्यन्त नवेश्वरं प्रजाः ।**
**स हि तस्य न केवलां श्रियं प्रतिपेदे सकलान् गुणानपि ॥ ५ ॥**

५ अ:। प्रजाः नवेश्वरं तम् निवृत्तयौवनम् रघुमेव अमन्यन्त, हि सः तस्य केवलाम् श्रियं न प्रतिपेदे (किन्तु) सकलान् गुणान् अपि॥

५। प्रजाः, नवेश्वरं तम् अजम्, निवृत्तयौवनं प्रत्यावृत्तयौवनं रघुम् अमन्यन्त, न किञ्चिद्भेदकमस्तीत्यर्थः। कुतः? हि यस्मात् सः अजः, तस्य रघोः केवलाम् एकां श्रियं न प्रतिपेदे किन्तु सकलान् गुणान् शौर्य-विद्यादीन् अपि प्रतिपेदे अतस्तद्गुणयोगात् तद्बुद्धिर्युक्तेत्यर्थः॥

৫। প্রজাগণ নবীন রাজাকে যেন প্রত্যাগতযৌবন রঘু বলিয়াই বিবেচনা করিতে লাগিল; বস্তুতঃ কেবল রাজ্য নহে, অজ যাবতীয় পৈতৃকগুণের অধিকারী হইয়াছিলেন।

अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव सङ्गतम्।
पदमृद्धमजेन पैतृकं विनयेनास्य नवञ्च यौवनम्॥ ६

अ:। द्वयम् एव शुभंयुना द्वितयेन सङ्गतम् (सत्) अधिकं शुशुभे, पैतृकम् ऋद्धम् अजेन, नवं यौवनम् विनयेन च॥

६। द्वयम् एव शुभंयुना शुभवता। 'शुभंयुस्तु शुभान्वितः' इत्यमरः। 'अहंशुभयोर्युस्' इति युस्प्रत्ययः। द्वितयेन सङ्गतं युतं सत् अधिकं शुशुभे। किं केनेत्याह—पदमिति। पैतृकं पितुरागतम्। 'ऋतष्ठञ्' इति ठञ्प्रत्ययः। ऋद्धं समृद्धं पदं राज्यम् अजेन, अस्य अजस्य नवं यौवनं विनयेन इन्द्रियजयेन च॥

৬। তৎকালে সমৃদ্ধিসম্পন্ন পৈতৃক পদ কল্যাণভাজন অজের সহিত এবং অজের নব যৌবন বিনয়ের সহিত পরস্পর মিলিত হইয়া অধিকতর শোভাধারণ করিল।

सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां बधूमिव॥ ७

अ:। महाभुजः सः अचिरोपनताम् मेदिनीम् नवपाणिग्रहणाम् बधूमिव सहसा इयम् उद्वेगम् व्रजेत् इति सदयम् बुभुजे॥

७। महाभुजः सः अजः, अचिरोपनतां नवोपगतां मेदिनीं भुवं नवं पाणिग्रहणं विवाहः यस्याः ताम् नवोढ़ां बधूम् इव, सहसा बलात्कारेण 'सहो बलं सहामार्गः' इत्यमरः। इयं मेदिनी बधूः वा उद्वेगं व्रजेत् इति हेतोः सदयं सकृपं बुभुजे भुक्तवान्। 'भुजोऽनवने' इत्यात्मनेपदम्॥

৭। অচিরপ্রাপ্তে মেদিনী বলপ্রকাশ করিলে পাছে সহসা উদ্বেজিতা হন, এজন্য মহাবাহু অজ সদয়হৃদয়ে ভোগ করিতে লাগিলেন।

**अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।**
**उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥ ८ ॥**

८ अ: । प्रकृतिषु सर्वः 'अहम् एव महीपतेः मतः' इति अचिन्तयत्, उदधेः निम्नगा[illegible] अस्य क्वचित् अपि विमानना न अभवत् ॥

८ । प्रकृतिषु प्रजासु मध्ये सर्वः जनः । अथवा प्रकृतिष्वित्यस्यार्थ[illegible] नेनान्वयः, व्यवधानन्तु सह्यम् । सर्वोऽपि जनः प्रकृतिषु अहमेव म[illegible] मतः महीपतिना मन्यमानः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्त्तमा[illegible] 'क्तस्य च वर्त्तमाने' इति षष्ठी । इति अचिन्तयत् अमन्यत । [illegible] निम्नगाशतेषु इव, अस्य नृपस्य कर्त्तुः 'कर्त्तृकर्म्मणोः कृति' इति क[illegible] षष्ठी । क्वचित् अपि जनविषये विमानना अवगणना तिरस्कारः न अभ[illegible] यतो न कश्चिदवमन्यते अतः सर्वोऽप्यहमेवास्य मत इत्यमन्यत इत्यर्थः।

৮। শত শত নদী গিয়া মিলিত হইলেও সাগর যেমন কাহারও কদাচ অবজ্ঞাপ্রদান করে না, তদ্রূপ অজও কোন প্রজার অবমাননা করিতেন[illegible] এজন্য "আমিই মহারাজের প্রিয়পাত্র" প্রকৃতিপুঞ্জমধ্যে সকলেই ইহা মনে করি[illegible]

**न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहानिव ।**
**स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥ ९ ॥**

९ अ: । सः भूयसा खरः नः ( भूयसा ) मृदुः च न, पुरस्कृतमध्यमक्रमः ( सन् ) पृथिवीरुहानिव नृपान् अनुद्धरन् नमयामास ॥

९ । सः नृपः, भूयसा बाहुल्येन खरः तीक्ष्णः न भूयसा मृदुः अपि न, किन्तु पुरस्कृतमध्यमक्रमः सन्, मध्यमपरिपाटीम[illegible] इत्यर्थः । पवमानः वायुः पृथिवीरुहान् तरून् इव नृपान् [illegible] अनुत्पाटयन् एव नमयामास । अत्र कामन्दकः—'मृदुश्चेद[illegible] तीक्ष्णादुद्विजते जनः । तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च सम्मतः।'

৯। তাঁহার স্বভাব সাতিশয় উগ্র বা নিতান্ত মৃদু ছিল না, তিনি এ[illegible] মধ্যভাগ অবলম্বন করিয়াছিলেন; নাতিপ্রবল নাতিমৃদু পবন যেমন বৃ[illegible] উন্মূলিত না করিয়াই অবনমিত করে, তিনিও তদ্রূপ নৃপগণকে [illegible] করিয়াছিলেন।

**अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मव[illegible]**
**विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहो[illegible]**

१० अ:। अथ रघुः आत्मजम् आत्मवत्तया प्रकृतिषु प्रतिष्ठितम् वीक्ष्य विनाशधर्म्मसु त्रिदिवस्थेषु अपि विषयेषु निःस्पृहः अभवत् ॥

१०। अथ रघुः आत्मजं पुत्रम् आत्मवत्तया निर्विकारमनस्कतया इत्यर्थः। 'उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते। आत्मवान् सत्त्ववानुक्तः' इत्युत्पलमालायाम्। प्रकृतिषु अमात्यादिषु प्रतिष्ठितं रूढ़मूलं वीक्ष्य ज्ञात्वा विनाशो धर्म्मो येषां तेषु विनाशधर्म्मसु अनित्येष्वित्यर्थः। 'धर्मादनिच् केवलात्' इत्यनिचप्रत्ययः समासान्तः। त्रिदिवस्थेषु स्वर्गस्थेषु अपि विषयेषु शब्दादिषु निःस्पृहः निर्गतेच्छः अभवत् ॥

১০। রাজা রঘু আত্মজ অজকে নির্ব্বিকার চিত্ততাবশতঃ প্রজাবর্গের অনুরাগভাজন দেখিয়া বিনাশধর্ম্মশীল স্বর্গীয় বিষয়েও নিঃস্পৃহ হইলেন।

गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः।
पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ॥ ११

११ अ:। दिलीपवंशजाः परिणामे गुणवत्सुतरोपितश्रियः प्रयताः (च) (सन्तः) तरुवल्कवाससां संयमिनाम् पदवीम् प्रपेदिरे हि ॥

११। कुलधर्म्मश्चायमेवेत्याह—गुणवदिति। दिलीपवंशजाः परिणामे वार्द्धके गुणवत्सुतेषु रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः, तरुवल्कानि एव वासांसि येषां तेषां संयमिनां यतीनां पदवीं प्रपेदिरे यस्मात् तस्मादस्यापीदमुचितमित्यर्थः ॥

১১। দিলীপবংশজ রাজগণ শেষ জীবনে গুণবান্ তনয়ের উপর সমস্ত সম্পদ্ ন্যস্ত করিয়া সংযতচিত্তে তরুবল্কলবাসা সংযমী মুনিদিগের পদবী অনুসরণ করিয়া থাকেন।

तमरण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः।
पितरं प्रणिपत्य पादयोरपरित्यागमयाचतात्मनः ॥ १२

१२ अ:। अरण्यसमाश्रयोन्मुखं पितरं तं सुतः वेष्टनशोभिना शिरसा पादयोः प्रणिपत्य आत्मनः अपरित्यागम् अयाचत ॥

१२। अरण्यसमाश्रयोन्मुखं वनवासोद्युक्तं पितरं तं रघुं, सुतः अजः, वेष्टनशोभिना उष्णीषमनोहरेण शिरसा पादयोः प्रणिपत्य आत्मनः अपरित्यागम् अयाचत, मां परित्यज्य न गन्तव्यमिति प्रार्थितवानित्यर्थः ॥

১২। পিতাকে বনগমনে উন্মুখ দেখিয়া অজ উষ্ণীষশোভিত মস্তকদ্বারা তাঁহার চরণে প্রণিপাতপূর্ব্বক কহিলেন,—"পিতঃ! আপনি আমাকে পরিত্যাগ করিয়া গমন করিবেন না।"

**रघुरश्रुमुखस्य तस्य तत् कृतवानीप्सितमात्मजप्रियः।**
**न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम्॥**

१२ अ:। आत्मजप्रियः रघुः अश्रुमुखस्य अजस्य तत् ईप्सितं कृतवान् तु सर्पः त्वचमिव, व्यपवर्जिताम् श्रियम् पुनः न प्रतिपेदे॥

१२। आत्मजप्रियः पुत्रवत्सलः रघुः, अश्रूणि मुखे यस्य तस्य अश्रुमुखस्य अजस्य तत् अपरित्यागरूपम् ईप्सितम् अभिलषितं कृतवान्, किन्तु सर्पः त्वचम् इव, व्यपवर्जितां त्यक्तां श्रियं पुनः न प्रतिपेदे न प्राप॥

১৩। পুত্রবৎসল রঘু বাষ্পাকুললোচন আত্মজ অজের প্রার্থনায় সম্মত হইলেন বটে, কিন্তু ভুজঙ্গ যেরূপ পরিত্যক্ত নির্ম্মোক পুনরায় গ্রহণ করে না, তিনি তদ্রূপ পরিত্যক্ত রাজ্যপদ আর গ্রহণ করিলেন না।

**स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः।**
**समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया॥१४॥**

१४ अ:। सः अन्त्यम् आश्रमम् आश्रितः पराद्बहिः आवसथे निवसन् अविकृतेन्द्रियः (सन्) स्नुषया इव पुत्रभोग्यया श्रिया समुपास्यत किल॥

१४। सः रघुः, किल अन्त्यम् आश्रमं प्रव्रज्याम् आश्रितः पुरात् नगरात् बहिः आवसथे स्थाने निवसन्, अविकृतेन्द्रियः जितेन्द्रियः सन् इत्यर्थः। अतएव स्नुषया इव बध्वा इव, पुत्रभोग्यया न तु स्वभोग्यया श्रिया समुपास्यत शुश्रूषितः। जितेन्द्रियस्य तस्य स्नुषयेव श्रियापि पुष्प-फलोदकाहरणादिशुश्रूषाव्यतिरेकेण न किञ्चिदपेक्षितमासीदित्यर्थः। यद्यपि 'ब्राह्मणाः प्रव्रजन्ति' इति श्रुतेः 'आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्' इति मनुस्मरणात् 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्ग-धारणम्। बाहुजातोरुजातानामयं धर्मो न विद्यते॥' इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या, न क्षत्रियादेरित्याहुः, तथापि यदहरेव विरजेत् 'तदहरेव प्रव्रजेत्' इत्यादिश्रुतेस्त्रैवर्णिकसाधारण्यात् 'त्रयाणां वर्णानां वेद-मधीत्य चत्वार आश्रमाः' इति सूत्रकारवचनात् "ब्राह्मणः क्षत्रियो वा वैश्यो वा प्रव्रजेद्गृहात्" इति स्मरणात् 'मुखजानामयं धर्मो वैष्णवं लिङ्ग-धारणम्। बाहुजातोरुजातानां त्रिदण्डं न विधीयते॥' इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च कुत्रचिद्ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित् त्रैवर्णिकाधिकारं प्रतिपेदिरे। तथा सति 'स किलाश्रममन्त्यमाश्रितः' इति अत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः। अन्ये

वानप्रस्थाश्रमतया व्याख्याति 'विदधे विधिमस्य नैष्ठिकं यतिभिः सार्द्ध-मनग्निमग्निचित्' इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात् अग्नि-संस्काररहितस्य वानप्रस्थस्यैवाभावात् इत्यलं प्रासङ्गिकेन ॥

১৪। অনন্তর জিতেন্দ্রিয় রঘু প্রব্রজ্যাগ্রহণপূর্ব্বক গ্রামের বহির্ভাগে, একস্থানে অবস্থান করিতে লাগিলেন, তৎকালে পুত্রভোগ্যা রাজলক্ষ্মী পুত্রবধূর ন্যায় তাঁহার সেবা করিতে লাগিলেন।

**प्रशमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम् ।**
**नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥१५**

१५ अ:। प्रशमस्थितपूर्वपार्थिवम् अभ्युद्यतनूतनेश्वरम् तत् कुलं निभृतेन्दुना उदितार्केण नभसा तुलाम् समारुरोह ॥

१५। प्रशमे स्थितः पूर्वपार्थिवः रघुर्यस्य तत्, अभ्युद्यतः अभ्युदितः नूतनेश्वरः अजः यस्य तत् प्रसिद्धं कुलम्, निभृतेन्दुना अस्तमयासन्नचन्द्रेण उदितार्केण प्रकटितसूर्य्येण नभसा तुलां सादृश्यम् आरुरोह प्राप । न च तुलामित्यत्र 'तुल्यार्थैः' इत्यादिना प्रतिषेधस्तृतीयायाः, तस्य सदृशवाचि-तुलाशब्दविषयत्वात् 'कृष्णस्य तुला नास्ति' इति प्रयोगात् अस्य च सादृश्य-वाचित्वात् ॥

১৫। উদয়শীল সূর্য্য এবং অস্তগমনোন্মুখ চন্দ্রমণ্ডল দ্বারা নভোমণ্ডল যেরূপ শোভাধারণ করে, শান্তিপক্ষাবলম্বী পূর্ব্বতন রাজা রঘু ও নবাভ্যুদয়শালী অজ কর্তৃক সেই রাজকুল তদ্রূপ শোভিত হইয়াছিল।

**यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः ।**
**अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्म्मयोर्गतौ ॥ १६**

१६ अ:। यति-पार्थिव-लिङ्गधारिणौ रघुराघवौ अपवर्गमहोदयार्थयोः धर्म्मयोः भुवं गतौ अंशौ इव जनैः ददृशाते ॥

१६। यतिः भिक्षुः, पार्थिवः राजा, तयोः लिङ्गधारिणौ रघुराघवौ रघुतत्सुतौ अपवर्गमहोदयार्थयोः मोक्षाभ्युदयफलयोः धर्म्मयोः निवर्त्तक-प्रवर्त्तकरूपयोरित्यर्थः । भुवं गतौ भूलोकम् अवतीर्णौ अंशौ इव जनैः ददृशाते दृष्टौ ॥

১৬। সেই যতিলক্ষণধারী রঘু এবং নৃপলক্ষণসম্পন্ন তৎপুত্র অজ এই উভয়কে যেন ভূতলে অবতীর্ণ অপবর্গ ও মহোদয় সাধনস্বরূপ ধর্ম্মদ্বয়ের অংশ বলিয়া লোকে নিরীক্ষণ করিতে লাগিল।

अजिताधिगमाय मन्त्रिभिर्युयुजे नीतिविशारदैरजः।
अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः॥ १७

१७ अ:। अज: अजिताधिगमाय नीतिविशारदैः मन्त्रिभिः युयुजे, रघुः अपि अनपायि... लब्धये आप्तैः योगिभिः समियाय॥

१७। अजः अजिताधिगमाय अजितपदलाभाय नीतिविशा... नीतिज्ञैः मन्त्रिभिः युयुजे सङ्गतः, रघुरपि अनपायिपदस्य उपलब्धये मो... पदस्य प्राप्तये यथार्थदर्शिनः यथार्थवादिनश्च आप्ता तैः योगिभिः समिय... सङ्गतः। उभयत्राप्युपायचिन्तार्थमिति शेषः॥

১৭। অনন্তর অজ, অনধিকৃত রাজ্যসমূহ অধিকার করিবার জন্য নীতিবি... মন্ত্রিগণসহ এবং মুক্তিপদপ্রার্থী রঘু তত্ত্বদর্শী যোগিগণসহ মিলিত হইলেন।

नृपतिः प्रकृतीरवेक्षितुं व्यवहारासनमाददे युवा।
परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम्॥ १८

१८ अ:। युवा नृपतिः प्रकृतीः अवेक्षितुम् व्यवहारासनम् आददे, प्रवयाः (नृपति...) धारणाम् परिचेतुम् उपांशु कुशपूतम् विष्टरम् (आददे)॥

१८। युवा नृपतिः अजः प्रकृतीः प्रजाः कार्य्यार्थिनीः अवेक्षितुं दु... दुष्टपरिज्ञानार्थमित्यर्थः। व्यवहारासनं धर्म्मासनम् आददे स्वीचका... प्रवयाः स्थविरः नृपतिः रघुस्तु। 'प्रवयाः स्थविरो वृद्धः' इत्यमरः। धार... चित्तस्यैकाग्रतां परिचेतुम् अभ्यसितुम उपांशु विजने। 'उपांशु वि... प्रोक्तम्' इति हलायुधः। कुशैः पूतं विष्टरम् आसनम् आददे। 'यमा... गुणसंयुक्तो मनसः स्थितिरात्मनि। धारणा प्रोच्यते सद्भिर्योगशा... विशारदैः॥' इति वशिष्ठः॥

১৮। যুবরাজ অজ প্রজাদিগের প্রকৃতি পরিজ্ঞানের জন্য বিচারমণ্ডপে ধ... এবং বৃদ্ধ নরপতি রঘু চিত্তের একাগ্রতাসম্পাদন জন্য পূত কুশাসন গ্রহণ করিলেন।

अनयत् प्रभुशक्तिसम्पदा वशमेको नृपतीननन्तरान्।
अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान्॥ १९

१९ अ:। एकः अनन्तरान् नृपतीन् प्रभुशक्तिसम्पदा वशम् अनयत् अपरः प्रणिधान... शरीरगोचरान् पञ्च मरुतः वशम् अनयत्॥

१९। एकः अन्यतरः, अज इत्यर्थः। अनन्तरान् स्वभूम्यनन्त... नृपतीन् यातव्यपार्ष्णिग्राहादीन् प्रभुशक्तिसम्पदा कोशदण्डमहिम्ना

...यमताम् अनयत्। 'कोशो दण्डो बलञ्चैव प्रभुशक्तिः प्रकीर्त्तिता।' ...मिताक्षरायाम्। अपरः रघुः, प्रणिधानयोग्यया समाध्यभ्यासेन। ...रगोचरान् देहाश्रयान् पञ्च मरुतः प्राणादीन् वशम् अनयत्। 'प्राणो-...नः समानश्चोदानव्यानौ च वायवः। शरीरस्थाः', इत्यमरः॥

१९। একজন প্রভুশক্তিপ্রভাবে সন্নিহিত নৃপতিগণকে আয়ত্ত করিতে প্রবৃত্ত ...লেন, অপর ব্যক্তি সমাধি অভ্যাস দ্বারা শরীরস্থ পঞ্চ বায়ুকে বশীভূত করিতে ...লেন।

...करोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात्।
...तरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना॥ २०

...अः। अचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् अकरोत्, इतरः ज्ञानमयेन वह्निना ...णां दहने ववृते॥

२०। अचिरेश्वरः अजः, क्षितौ द्विषताम् आरम्भाः कर्माणि तेषां ...लानि भस्मसात् अकरोत् कार्त्स्न्येन भस्मीकृतवान्। 'विभाषा साति ...र्त्स्न्ये' इति सातिप्रत्ययः। इतरः रघुः ज्ञानमयेन तत्त्वज्ञानप्रचुरेण ...ह्निना पावकेन करणेन स्वकर्मणां भववीजभूतानां दहने भस्मीकरणे ...ति स्वकर्माणि दग्धुं प्रवृत्त इत्यर्थः। 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् ...तेऽर्जुन' इति गीतावचनात्॥

২০। নব নৃপতি ক্ষিতিতলস্থিত অরাতিকুলের সকল কর্ম্মফল বিফল করিয়া-...লেন; এবং রঘু তত্ত্বজ্ঞানময় অনলে আপনার কর্ম্মফল ভস্মীভূত করিতে প্রবৃত্ত ...লেন।

...णबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।
...घुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः॥ २१

२१ अः। अजः पणबन्धमुखान् षड्गुणान् तत्फलं समीक्ष्य उपायुङ्क्त, समलोष्टकाञ्चनः रघुः ...गुणत्रयम् प्रकृतिस्थम् अजयत्॥

२१। 'पणबन्धः सन्धिः' इति कौटिल्यः। अजः पणबन्धमुखान् ...न्ध्यादीन् षड्गुणान् 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्-...णाः' इत्यमरः। तत्फलं तेषां गुणानां फलं समीक्ष्य आलोच्य देशकाल-...आदिकमनतिक्रम्य उपायुङ्क्त फलिष्यन्तमेव गुणं प्रायुङ्क्त इत्यर्थः। ...भ्यां युजिरयज्ञपात्रेषु' इत्यात्मनेपदम्। समं तुल्यतया भावितं लोष्टं ...त्पिण्डः काञ्चनं सुवर्णञ्च यस्य सः समलोष्टकाञ्चनः निःस्पृह इत्यर्थः। ...ष्टानि लेष्टवः पुंसि' इत्यमरः। रघुः अपि गुणत्रयं सत्त्वादिकम्। 'गुणाः

सत्त्वं रजस्तमः' इत्यमरः। प्रकृतौ साम्यावस्थायामेव तिष्ठतीति प्र
पुनर्विकारशून्यं यथा तथा अजयत्॥

২১। অজ ফলানুসন্ধানপূর্ব্বক সন্ধিবিগ্রহপ্রভৃতি ছয়গুণ প্রয়োগ করিতে
লেন এবং রঘু মৃৎপিণ্ড ও সুবর্ণে সমদৃষ্টি ও বিকারশূন্য হইয়া সত্ত্ব রজঃ ও
গুণত্রয়কে পরাজিত করিতে প্রবৃত্ত হইলেন।

**न नवः प्रभुरा फलोदयात् स्थिरकर्मा विरराम कर्मण**
**न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात्॥**

২২ অ:। स्थिरकर्म्मा नवः प्रभुः आ फलोदयात् कर्म्मणः न विरराम, स्थिरधीः नवे
परमात्मदर्शनात् योगविधेः न विरराम॥

२२। स्थिरकर्मा आफलोदयकर्मकारी नवः प्रभुः अजः, आफलो
दयात् फलसिद्धिपर्य्यन्तं कर्मणः आरम्भात् न विरराम न निवृत्त
'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इत्यपादानात् पञ्चमी।
परिभ्यो रमः' इति परस्मैपदम्। स्थिरधीः निश्चलचित्तः नवेतरः
आ परमात्मदर्शनात् परमात्मसाक्षात्कारपर्य्यन्तं योगविधेः ऐक्यानुसन्
विरराम॥

২২। কার্য্যদক্ষ নবীন রাজা অজ, ফলসিদ্ধিপর্য্যন্ত কার্য্য হইতে বিরত
না। স্থিরবুদ্ধি রঘুও পরমাত্মার দর্শন না হওয়া অবধি যোগসাধন হইতে
হইতেন না।

**इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ।**
**प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः॥ २३**

२३ अ:। इति प्रतिषिद्धप्रसरेषु शत्रुषु च इन्द्रियेषु च जाग्रतौ उदयापवर्गयोः प्रसि
उभयीं सिद्धिम् अवापतु॥

२३। इति एवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिः येषां तेषु शत्रु
इन्द्रियेषु च जाग्रतौ अप्रमत्तौ उदयापवर्गयोः अभ्युदयमोक्षयोः प्र
आसक्तौ। 'तत्परे प्रसितासक्तौ' इत्यमरः। उभौ अजरघू उभयीं द्वि
अभ्युदयमोक्षरूपाम्। 'उभादुदात्तो नित्यम्' इति तयप्प्रत्ययस्यायज
'टिड्ढा' इति ङीप्। सिद्धिं फलम् अवापतुः उभौ उभे सिद्धी यथा
अवापतुरित्यर्थः॥

২৩। এইরূপে তাঁহারা অভ্যুদয় ও অপবর্গলাভে নিতান্ত আসক্ত হইয়া শত্রু
ইন্দ্রিয়নিচয়ের প্রতি সতত সতর্ক রহিলে। এবং উহাদের স্বেচ্ছাচার নিবারণ
অচিরে উভয়বিধ সিদ্ধিলাভ করিলেন।

अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः ।
तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥ २४

२४ अ: । अथ रघुः समदर्शनः ( सन् ) अजव्यपेक्षया काश्चित् समाः गमयित्वा योगसमाधिना अव्ययम् तमसः परम् पुरुषम् आपत् ॥

२४। अथ रघुः, समदर्शनः सर्वभूतेषु समदृष्टिः सन्, अजव्यपेक्षया अजाकाङ्क्षानुरोधेन काश्चित् समाः कतिचित् वर्षाणि। 'समा वर्षं समं समम्' इति विश्वः। गमयित्वा नीत्वा, योगसमाधिना ऐक्यानुसन्धानेन 'योगो योग इत्युक्तो जीवात्मपरमात्मनोः' इति वशिष्ठः। अव्ययम् अविनाशिनं तमसः परम् अविद्यायाः परं मायातीतमित्यर्थः। पुरुषं परमात्मानम् आपत् प्राप सायुज्यं प्राप्त इत्यर्थः ॥

২৪। অনন্তর সর্ব্বভূতে সমদর্শী রঘু, তনয়ের অনুরোধে এইরূপে কতিপয় বৎসর অতিবাহিত করিয়া যোগ ও সমাধিবলে সেই অবিনাশী মায়াতীত অব্যয় পরমপুরুষ পরমাত্মাকে প্রাপ্ত হইলেন।

श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः ।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्द्धमनग्निमग्निचित् २५

२५ अ: । अग्निचित् राघवः पितुः श्रुतदेहविसर्जनः ( सन् ) चिरम् अश्रूणि विमुच्य अस्य अनग्निं नैष्ठिकम् विधिम् यतिभिः सार्द्धं विदधे ॥

२५। अग्निचित् अग्निं चितवान् आहितवान्। 'अग्नौ चेः' इति क्विप्प्रत्ययः। राघवः अजः पितुः श्रुतदेहविसर्जनः आकर्णितपितृतनुत्यागः सन्, चिरम् अश्रूणि वाष्पान् विमुच्य विसृज्य अस्य पितुः अनग्निम् अग्निसंस्काररहितमित्यर्थः नैष्ठिकं निष्ठायाम् अन्ते भवं विधिम् आचारम् अन्त्येष्टिं यतिभिः सन्यासिभिः सार्द्धं सह विदधे चक्रे। अनग्निं विधिमत्राह शौनकः—'सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च। न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया। निदध्यात् प्रणवेनैव विले भिक्षोः कलेवरम्। प्रोक्षणं खननञ्चैव सर्वं तेनैव कारयेत्॥' इति ॥

২৫। সাগ্নিক রঘুতনয় অজ, পিতার তনুত্যাগ সংবাদশ্রবণে বহুক্ষণ অজস্র অশ্রু বিসর্জ্জন করিলেন এবং সমাধিবলে ত্যক্ততনু ব্যক্তির অগ্নিসংকার নিষিদ্ধ জানিয়া সন্ন্যাসিগণের সাহায্যে তদীয় অন্ত্যেষ্টিক্রিয়া সম্পন্ন করিলেন।

अकरोत् स तदौर्द्ध्वदैहिकं पितृभक्त्या पितृकार्य्यकल्पवित्।
न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः ॥२६

२६ अ: । पितृकार्य्यकल्पवित् स: पितृभक्त्या सदौर्द्ध्वदेहिकम् अकरोत् तेन ...
तनयावर्ज्जितपिण्डकाङ्क्षिण: न हि ॥

२६ । पितृकार्य्यस्य तातश्राद्धस्य कल्पवित् विधानज्ञ: स ...
पितृभक्त्या पितरि प्रेम्णा करणेन, न पितु: परलोकसुखापेक्षया, ...
दिति भाव: । तस्य रघो: और्द्ध्वदेहिकं देहादूर्द्ध्वं भवतीति ...
देहाच्च' इति वक्तव्यात् ठक्प्रत्यय:, अनुशतिकादित्वादुभयपदवृद्धि: ...
तिलोदकपिण्डदानादिकम् अकरोत् । ननु कथं भक्तिरेव ...
प्रेप्सापि कस्मान्नाभूदित्याशङ्क्याह न हीति । तेन पथा योगरूपेण ...
तनुत्यज: शरीरत्यागिन: पुरुषा: तनयेन आवर्जितं दत्तं पिण्डं का...
तथोक्ता: न हि भवन्ति ॥

২৬। যদিও যোগবলে তনুত্যাগকারী মহাত্মগণ পুত্রপ্রদত্ত পিণ্ডের ...
করেন না, তথাপি শ্রাদ্ধবিধানজ্ঞ অজ পিতৃভক্তিবশতঃ পিতার ঔর্দ্ধদৈহিকক্রিয়া ...
করিলেন।

**स परार्द्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभि: ।**
**शमिताधिरधिज्यकार्मुक: कृतवानप्रतिशासनं जगत् ॥**

२७ अ: । परार्द्ध्यगते: पितु: अशोच्यताम् उद्दिश्य सदर्थवेदिभि: शमिताधि: स: अधि... (सन्) जगत् अप्रतिशासनं कृतवान् ॥

२७ । परार्द्ध्यगति: प्रशस्तगति: प्राप्तमोक्षस्य पितु: अशोच्यताम् ...
चनीयत्वम् उद्दिश्य अभिसन्धाय, शोको न कर्त्तव्य इत्युपदिश्य ...
सदर्थवेदिभि: परमार्थज्ञै: विद्वद्भि: शमिताधि: निवारितमनः...
'पुंस्याधिर्मानसी व्यथा' इत्यमर: । स: अज:, अधिज्यकार्मुक: ...
आरोपितमौर्वीकं कार्मुकं यस्य स: तथोक्त: सन्, जगत् कर्मभूतम् ...
शासनं द्वितीयाज्ञारहितम् आत्माज्ञाविधेयमित्यर्थ: । कृतवान् च...

২৭। মহারাজ অজ মুক্তিপ্রাপ্ত পিতার উদ্দেশে শোক করা বিধেয় ন...
অবধারণ করিয়া তত্ত্বদর্শী বুধগণের সাহায্যে স্বীয় মনঃকষ্ট দূরীভূত করি...
শরাসনে জ্যা আরোপণ করিয়া সমস্ত জগৎ আপনার শাসনের অধীনে আনি...

**क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् ।**
**प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत् सुतम् ॥ २८ ॥**

२८ अ: । क्षिति: भामिनी इन्दुमती च अग्र्यपौरुषं तम् पतिम् आसाद्य प्रथमा ...
अभूत्, अपरा वीरं सुतमजीजनत् ॥

२८ । क्षिति: मही, भामिनी कामिनी इन्दुमती च ...

मिनी च' इति हलायुध: । अग्रपौरुषं महापराक्रमम् उत्कृष्टभोग-
व तम् अजं पतिम् आसाद्य तत्र प्रथमा क्षिति: बहूनि रत्नानि श्रेष्ठ-
नि सूते इति बहुरत्नसू: अभूत् । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमर: ।
रा इन्दुमती वीरं सुतम् अजीजनत् जनयति स्म । जायतेर्णौ लुङि
म् सहोक्त्या साद्दश्यमुच्यते ॥

২৮। বসুমতী ও ইন্দুমতী সেই প্রবল পরাক্রম অজকে পতি পাইয়া একজন
প্রসবিনী ও অপরজন বীরপ্রসবিনী হইলেন।

**रश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।**
**पूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधा: ॥ २९**

२९ अ: । बुधा: दशरश्मिशतोपमद्युतिम् यशसा दशसु अपि दिक्षु श्रुतं दशकण्ठारिगुरुं यम्
दशपूर्वरथं विदु: ॥

२९ । किं नामकोऽसावत आह—दश रश्मिशतानि यस्य स: दश-
शत: सूर्य्य: स: उपमा यस्या: सा दशरश्मिशतोपमा द्युतिर्यस्य तं
सा करणेन दशसु अपि दिक्षु आशासु श्रुतं प्रसिद्धं दशकण्ठारे:
णारे: रामस्य गुरुं पितरं यं सुतम् आख्यया नाम्ना दशपूर्व: दशशब्द-
रथ: रथशब्द: तं दशरथमित्यर्थ: । बुधा विद्वांस: विदु: विदन्ति ।
दो लटो वा' इति झेर्जुसादेश: ॥

২৯। ইন্দুমতী যে বীরপুত্র প্রসব করিয়াছিলেন, তিনি দশস্কন্ধারি রামের পিতা
ছিলেন, তিনি দশসহস্র সূর্য্যের ন্যায় দ্যুতিসম্পন্ন এবং তাঁহার যশঃপ্রভাব দশদিকে
ত হইয়াছিল; 'রথ'শব্দের পূর্ব্বে দশ'শব্দ যোগ করিলে যাহা হয়, পণ্ডিতগণ
াকে সেই "দশরথ" নামে অভিহিত করিয়াছিলেন।

**ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवै: स पार्थिव: ।**
**नृणत्वमुपेयिवान् बभौ परिधेर्मुक्त इवोष्णदीधिति: ॥३०**

३० अ: । श्रुतयागप्रसवै: ऋषिदेवगणस्वधाभुजाम् अनृणत्वम् उपेयिवान् स: पार्थिव: परिधे:
उष्णदीधिति: इव बभौ ।

३० । श्रुतयागप्रसवै: अध्ययनयज्ञसन्तानै: करणै: यथासंख्यमृषीणां
गणानामिन्द्रादीनां स्वधाभुजां पितृणाम् अनृणत्वम् ऋणविमुक्तत्वम्
यिवान् प्राप्तवान् । 'एष वा अनृणो य: पुत्री यज्वा ब्रह्मचारी वा'
श्रुते: । स: पार्थिव: अज: परिधे: परिवेशात् । परिवेशस्तु परिधि:'
यमर: । मुक्त: निर्गत: ( कर्म्मकर्त्ता ) उष्णदीधिति: सूर्य्य इव, बभौ
दीपे इत्युपमा ॥

৩০। মহীশ্বর অজ অধ্যয়নদ্বারা ঋষিগণের, যজ্ঞানুষ্ঠানদ্বারা দেবগণের এবং পুত্রোৎপাদনদ্বারা পিতৃগণের ঋণ হইতে মুক্ত হইয়া পরিধিবিরহিত রবির ন্যায় শোভিত হইলেন।

**बलमार्त्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम्।**
**वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना॥**

३१ अ:। तस्य विभो: बलम् आर्त्तभयोपशान्तये, बहुश्रुतम् विदुषाम् सत्कृतये, केवलं वसु न, गुणवत्तापि परप्रयोजना (अभूत्)॥

३१। तस्य विभो: अजस्य केवलं वसु धनम् एव परप्रयोजनं कारकं न अभूत् किन्तु गुणवत्तापि गुणवत्त्वमपि परप्रयोजना अन्येषां प्रयोजनं यस्यां सा विधेयांशत्वेन प्राधान्याद्गुणवत्ताया विशेषणं वसु इत्यत्र तूहनीयम्। (परप्रयोजनमिति पदमित्यर्थ:, तच्च प्रदर्शयति) तथाहि—बलं पौरुषम् आर्त्तानाम् आपन्नानां भयस्य उपशान्तये निवारणाय, न तु स्वार्थं परपीड़नाय वा। बहु भूरि श्रुतं विद्या सत्कृतये सत्काराय, न तूत्सेकाय बभूव, तस्य धनं परोपयोगीति वक्तव्यम् बलश्रुतादयोऽपि गुणा: परोपयोगिण इत्यर्थ:॥

৩১। মহারাজ অজের বল বিপন্নদিগের রক্ষণার্থ এবং প্রভূত শাস্ত্রজ্ঞান পণ্ডিতগণের সম্মাননার্থ হইয়াছিল। অতএব তাঁহার বিভবই যে কেবল পরোপকারার্থ ছিল এরূপ নহে তাঁহার সকল গুণই পরপ্রয়োজনসাধক ছিল।

**स कदाचिदवेक्षितप्रज: सह देव्या विजहार सुप्रजा:।**
**नगरोपवने शचीसखो मरुतां पालयितेव नन्दने॥**

३२ अ:। अवेक्षितप्रज: सुप्रजा: स: कदाचित् देव्या सह नगरोपवने नन्दने शचीसख: मरुतां पालयिता इव विजहार॥

३२। अवेक्षितप्रज: अकुतोभयत्वेनानुसंहितप्रज:। 'नित्यमसिच् प्रजामेधयो:' इति असिच्प्रत्यय:। न केवलं स्त्रैण इति भाव:। शोभना प्रजा यस्य असौ सुप्रजा: सुपुत्त्रवान् पुत्त्रन्यस्तभार इति भाव:। स: कदाचित् देव्या महिष्या इन्दुमत्या सह नगरोपवने, नन्दने नन्दनाख्ये अमरावत्युपकण्ठवने शचीसख: शच्या सह इत्यर्थ:। मरुतां पालयिता इन्द्र इव, विजहार चिक्रीड़॥

৩২। সুরপতি যেরূপ শচীদেবীর সমভিব্যাহারে নন্দনকাননে বিহার করিয়া থাকেন, তদ্রূপ সেই সুপুত্রক প্রজারঞ্জন মহারাজ অজ একদা মহিষী ইন্দুমতীর সহিত রাজধানীর নিকটস্থ উপবন বিহারে গমন করিয়াছিলেন।

रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ।
वीणयितुं ययौ रवेरुदगावृत्तिपथेन नारदः ॥ ३३

अ॰। अथ दक्षिणोदधेः रोधसि श्रितगोकर्णनिकेतम् ईश्वरम् उपवीणयितुम् नारदः रवेः उदगावृत्तिपथेन ययौ ॥

३३। अथ दक्षिणस्य उदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतम् अधिष्ठितगोकर्णाख्यस्थानम् ईश्वरं शिवम् उपवीणयितुं वीणया उपगातुम् 'सत्यापपाश' इत्यादिना वीणाशब्दादुपगानार्थे णिच्प्रत्ययः, तुमुन्। नारदः देवर्षिः रवेः सूर्य्यस्य उदगावृत्तिपथेन उदीचः दिशः आवृत्तिः निवर्त्तनं तस्याः पन्थाः गतिप्रकारः तेन। यथा उत्तस्या दिशः व्यावृत्य दक्षिणायनमार्गं गच्छति, तथा ययौ। [उदगावृत्तिपथेन' इति वल्लभसम्मतः पाठः स च अस्मद्देशीयपुस्तके दृश्यते, व्याख्या,—रवेः सम्बन्धिना उदयावृत्तेः पन्थाः तेन उदयावृत्तिपथेन मार्गेण ययौ जगाम। ] सूर्य्योपमानेन अस्य अतितेजस्त्वमुच्यते ॥

৩৩। তখন দেবর্ষি নারদ দক্ষিণসাগরের তীরবর্ত্তী গোকর্ণনামক নগরে প্রতিষ্ঠিত মহাদেবকে বীণাবাদনদ্বারা আরাধনা করার মানসে দক্ষিণায়ন সময়ে সূর্য্যদেব যেরূপ উত্তরদিক হইতে উত্তরদিকে গমন করেন, তদ্রূপ দক্ষিণদিক হইতে উত্তরদিকে যাইতেছিলেন।

कुसुमैर्ग्रथितामपार्थिवैः स्रजमातोद्यशिरोनिवेशिताम् ।
अहरत् किल तस्य वेगवानधिवासस्पृहयेव मारुतः ॥ ३४

अ॰। अपार्थिवैः कुसुमैः ग्रथिताम् तस्य आतोद्यशिरोनिवेशिताम् स्रजम् वेगवान् मारुतः अधिवासस्पृहया इव अहरत् किल ॥

३४। अपार्थिवैः अभौमैः दिव्यैरित्यर्थः। कुसुमैः ग्रथितां रचितां नारदस्य आतोद्यस्य वाद्यस्य वीणायाः शिरसि अग्रे निवेशिताम्। 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः। स्रजं मालां वेगवान् मारुतः, अधिवासे वासनायां स्पृहया इव स्रजा स्वाङ्गं संस्कर्त्तुमित्यर्थः। 'संस्कारो गन्धमाल्याद्यैर्यः स्यात् तदधिवासनम्' इत्यमरः। अहरत् किल, किलेत्यैतिह्ये ॥

৩৪। সেই বীণার অগ্রভাগে স্বর্গীয় কুসুমদ্বারা গ্রথিত পুষ্পমালা সন্নিবেশিত ছিল, বায়ু নিজে সেই মালার সৌরভে সৌরভিত হইবার নিমিত্তই যেন অতি বেগে আসিয়া হরণ করিল।

भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ।
ददृशे पवनावलेपजं सृजती बाष्पमिवाञ्जनाविलम् ॥ ३५

३५ अ:। कुसुमानुसारिभि: भ्रमरै: परिकीर्णा मुने: परिवादिनी पवनावलेपजम्
बाष्पम् सृजती इव ददृशे ॥

३५। कुसुमानुसारिभि: पुष्पानुयायिभि: भ्रमरै: अलिभि: परि
व्याप्ता मुनेर्नारदस्य परिवादिनी वीणा। 'वीणा तु वल्लकी।
सा तु तन्त्रीभि: सप्तभि: परिवादिनी' इत्यमर:। पवनस्य वायो:
अधिक्षेप: तज्जम् अञ्जनेन कज्जलेन आविलं कलुषं बाष्पम् अश्रु
मुञ्चती इव ददृशे दृष्टा। भ्रमराणां साञ्जनबाष्पविन्दुसादृश्य' स्त्रि
परिभूता: स्त्रियोऽपि हि रुदन्ति इति भाव:। 'वा नपुंसकस्य' इति
मानि 'आच्छीनद्योर्नुम्' इति नुम्विकल्प: ॥

৩৫। অলিকুল সেই মালার অনুসরণ করিতে ছিল, তখন বোধ হইল
মহর্ষির বীণাযন্ত্র পবনকৃত এই পরাভবদুঃখে অঞ্জন মলিন অশ্রুবিন্দু বিসর্জ্জন করিতে

**अभिभूय विभूतिमार्त्तवीं मधुगन्धातिशयेन वीरुधाम्।**
**नृपतेरमरस्रगाप सा दयितोरुस्तनकोटिसुस्थितिम्॥**

३६ अ:। सा अमरस्रक् मधुगन्धातिशयेन वीरुधाम् आर्त्तवीं विभूतिम् अभिभूय
दयितोरुस्तनकोटिसुस्थितिम् आप ॥

३६। सा अमरस्रक् दिव्यमाला मधुगन्धयो: मकरन्दसौ
अतिशयेन आधिक्येन वीरुधां लतानाम्। 'लता प्रतानिनी वीरुत्'
मर:। ऋतो: प्राप्ताम् आर्त्तवीम् ऋतुसम्बन्धिनीं विभूतिं समृद्धिम्
भूय तिरस्कृत्य नृपते: अजस्य दयिताया: इन्दुमत्या: उर्वो: वि
स्तनयो: ये कोटी चूचुकौ तयो: सुस्थितिं गोप्यस्थाने पतितत्वात्
स्थानम् आप प्राप्ता ॥

৩৬। অতঃপর সেই সুরকুসুমমালা মকরন্দ ও সৌরভের আতিশয্যনিবন্ধন
বনস্থিত লতাবলীর ঋতুসম্ভূত সম্পত্তিকে পরাভূত করিয়া অজপ্রিয়তমার
স্তনাগ্রভাগে পতিত হইল।

**क्षणमात्रसखीं सुजातयो: स्तनयोस्तामवलोक्य विह्वला।**
**निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी॥**

३७ अ:। सुजातयो: स्तनयो: क्षणमात्रसखीम् तां स्रजम् अवलोक्य विह्वला नरो
तमसा हृतचन्द्रा कौमुदी इव निमिमील ॥

३७। सुजातयो: सुजन्मनो: सुन्दरयोरित्यर्थ:। स्तनयो: क्षण
सखीं सखीमिव स्थिताम्। सुजातत्वसाधर्म्यात् स्रज: स्तनसखीत्व
भाव:। तां स्रजम् अवलोक्य ईषद्दृष्ट्वा विह्वला परवशा नरोत्तम
इन्दुमती, तमसा राहुणा। 'तमस्तु राहु: स्वर्भानु:' इत्यमर:। इ

कौमुदी चन्द्रिका इव, निमिमील सुमोह ममार इत्यर्थः । 'निमीलो दीर्घनिद्रा च' इति हलायुधः । कौमुद्या निमीलनं प्रतिसंहार ॥

৩৭। মহিষী স্বীয় সুশোভন স্তনযুগলের ক্ষণসমাগম সখী সেই মালা অবলোকন করিয়া একান্ত বিহ্বলা এবং রাহুগ্রস্ত চন্দ্রের চন্দ্রিকার ন্যায় নিমীলিতা হইলেন।

**वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।**
**ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥ ३८**

३८ अः। सा करणोज्झितेन वपुषा निपतन्ती पतिम् अपि अपातयत्, दीपार्चिः तैलनिषेकविन्दुना सह मेदिनीम् उपैति ननु ॥

३८। करणैः इन्द्रियैः उज्झितेन मुक्तेन। 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः। वपुषा निपतन्ती सा इन्दुमती पतिम् अजम् अपि अपातयत् पातयति स्म। तथाहि, निषिच्यते निषेकः तैलस्य निषेकः तैलनिषेकः चरत्तैलमित्यर्थः। तस्य विन्दुना सह दीपार्च्चिः दीपज्वाला मेदिनीं भुवम् उपैति ननु उपैत्येव। नन्वत्रावधारणे। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। इन्दुमत्या दीपार्च्चिरुपमानम् अजस्य तैलविन्दुः तत एव तस्या जीवितसमाप्तिस्तस्य जीवितशेषस्य सूच्यते ॥

৩৮। ইন্দুমতী তৎক্ষণাৎ চৈতন্যশূন্যা ও ভূতলে নিপতিতা হইয়া পতিকেও পতিত করিলেন; দীপশিখা ক্ষরিত তৈলবিন্দুর সহিতই ভূতলে পতিত হইয়া থাকে।

**उभयोरपि पार्श्ववर्त्तिनां तुमुलेनार्त्तरवेण वेजिताः ।**
**विहगाः कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः ॥३९**

३९ अः। उभयोः पार्श्ववर्त्तिनाम् तुमुलेन आर्त्तरवेण वेजिताः कमलाकरालया विहगा अपि तत्र समदुःखा इव चुक्रुशुः ॥

३९। उभयोः दम्पत्योः पार्श्ववर्त्तिनां परिजनानां तुमुलेन सङ्कुलेन आर्त्तरवेण करुणस्वनेन वेजिताः भीताः कमलाकरालयाः सरःस्थिताः विहगाः हंसादयः अपि, तत्र उपवने समदुःखाः इव तत्पार्श्ववर्त्तिनां समानशोका इव चुक्रुशुः क्रोशन्ति स्म ॥

৩৯। তদ্দর্শনে তাহাদের উভয়ের পার্শ্বস্থিত পরিচারকেরা মুক্তকণ্ঠে রোদন করিতে লাগিল। ঐ তুমুল আর্ত্তস্বরশ্রবণে সরোবরস্থিত হংস সারসপ্রভৃতি পক্ষিগণ যেন সমবেদনায় ব্যথিত হইয়া চীৎকার করিতে লাগিল।

**नृपतेर्व्यंजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता ।**
**प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥ ४०**

४० अ: । नृपते: तम: व्यजनादिभि: नुनुदे सा तु तथा एव संस्थिता, हि प्रतिकार(विधानम्)
आयुष: शेषे सति फलाय कल्पते ॥

४० । नृपते: अजस्य तम: अज्ञानं, व्यजनाभि: साधनै: नुनुदे (अप-)
सारितम् आदिशब्देन जलसेककर्पूरक्षोदादयो गृह्यन्ते । सा तु इन्दु(मती)
तु तथैव तदवस्था एव संस्थिता स्थिता । तथाहि—प्रतिकारविधानं चिकि(त्सा)
आयुष: जीवितकालस्य शेषे अवशेषे सति विद्यमाने । 'आयुर्जीवितका(लो)
ना' इत्यमर: । फलाय सिद्धये कल्पते, आरोग्याय भवति नान्य(था)
नृपतेरायु:शेषसद्भावात् प्रतीकारस्य साफल्यं तस्यास्तु तदभावाद्वैफल्य-
मित्यर्थ: ॥

৪০ । অনন্তর ব্যজনাদি দ্বারা শুশ্রূষার মহারাজ অজের মোহ অপনীত হ(ইল),
কিন্তু ইন্দুমতী সেই অচেতন অবস্থায়ই রহিলেন । পরমায়ু অবশিষ্ট থাকিলেই প্র(তী)-
কারচেষ্টা সফল হয় ।

**प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।**
**स निनाय नितान्तवत्सल: परिगृह्योचितमङ्कमङ्गनाम् ॥४१॥**

४१ अ: । अथ नितान्तवत्सल: स: सत्त्वविप्लवात् प्रतियोजयितव्यवल्लकीसमवस्थाम् अ(ङ्गनाम्)
परिगृह्य उचितम् अङ्कम् निनाय ॥

४१ । अथ सत्त्वस्य चैतन्यस्य विप्लवात् विनाशात् हेतो: । 'द्र(व्या)-
सुव्यवसायेषु सत्त्वम्' इत्यमर: । प्रतियोजयितव्या तन्त्रीभि: योजनीया(,)
तु योजिततन्त्रीत्यर्थ: । या वल्लकी वीणा तस्या: समा अवस्था दशा यस्या(:)
ताम् अङ्गनां वनितां, नितान्तवत्सल: अतिप्रेमवान् स: अज:, परिगृ(ह्य)
हस्ताभ्यां गृहीत्वा, उचितं परिचितम् अङ्कमुत्सङ्गं निनाय नीतवा(न्)।
वल्लकीपक्षे तु सत्त्वम् तन्त्रीणामवष्टम्भक: शलाकाविशेष: ॥

৪১ । অনন্তর সেই ললনাবৎসল নরপতি ইন্দুমতীর চিরপরিচিত নিজ ক্রো(ড়ে)
তন্ত্রীযোজনীয়া বীণার ন্যায় ইন্দুমতীকে তুলিয়া লইলেন ।

**पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया ।**
**समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमा: ॥४२॥**

४२ अ: । पति: करणापायविभिन्नवर्णया अङ्कनिषण्णया तया उषसि आविलाम् मृगलेखा(म्)
बिभ्रच्चन्द्रमा इव समलक्ष्यत ॥

४२ । पति: अज:, अङ्कनिषण्णया उत्सङ्गस्थितया करणाना(म्)
इन्द्रियाणामपायेन अपगमेन हेतुना विभिन्नवर्णया विच्छायया त(या)

वनितया, उषसि प्रातःकाले आविलां मलिनाम् मृगलेखां लाञ्छनं मृगरेखारूपं बिभ्रत् धारयन् चन्द्रमाः इव, समलक्ष्यत अदृश्यत इत्युपमा ॥

৪২। তখন নরপতি নিজ ক্রোড়ে সেই জীবিতশূন্যা মলিনবর্ণা ইন্দুমতীকে ধারণ করিয়া উষাকালে মলিন মৃগরেখাধারী নিশাকরের তুল্য লক্ষিত হইতে লাগিলেন।

**विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।**
**अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ ४३**

४३ अ:। सः सहजाम् अपि धीरताम् अपहाय वाष्पगद्गदं विललाप, अयः अपि अभितप्तं (सत्) मार्दवं भजते शरीरिषु का एव कथा ॥

४३। सः अजः, सहजां स्वाभाविकीम् अपि धीरतां धैर्य्यम् अपहाय बाष्पेण कण्ठगतेन गद्गदं विशीर्णाक्षरं यथा तथा ध्वनिमात्रानुकारिगद्गदशब्दैर्विललाप परिदेवितवान् 'विलापः परिदेवनम्' इत्यमरः। अभितप्तम् अग्निना सन्तप्तम् अयः लौहम् अपि अचेतनमपि इति भावः मार्दवं मृदुत्वं भजते प्राप्नोति शरीरिषु देहिषु चेतनेषु शोकादिना अभितप्तेषु इति शेषः, विषये का एव कथा सन्दिग्धनिर्णयरूपा का वार्त्ता अनुक्तसिद्धमित्यर्थः। सन्दिग्धे न्यायः प्रवर्त्तते। प्रतप्तेषु अधैर्य्यप्राप्तिसन्देहो नास्त्येव इत्यर्थः ॥

৪৩। ইন্দুমতীর বিরহে তাঁহার স্বাভাবিক ধৈর্য্য দূরীভূত হইল। তিনি বাষ্পগদ্গদকণ্ঠে রোদন করিতে লাগিলেন; শরীরীদিগের কথা দূরে থাকুক, লৌহও সন্তপ্ত হইলে মৃদুতা প্রাপ্ত হইয়া থাকে।

**कुसुमान्यपि गात्रसङ्गमात् प्रभवन्त्यायुरपोहितुं यदि ।**
**न भविष्यति हन्त साधनं किमिवान्यत् प्रहरिष्यतो विधेः ४४**

४४ अ:। कुसुमानि अपि गात्रसङ्गमात् आयुः अपोहितुम् प्रभवन्ति यदि हन्त प्रहरिष्यतः विधेः अन्यत् किम् इव साधनम् न भविष्यति ॥

५४। कुसुमानि पुष्पाणि अपि। अपिशब्दो नितान्तमार्दवद्योतनार्थः। गात्रसङ्गमात् देहसंसर्गात् तीव्राभिघातादित्यर्थः। आयुः अपोहितुम् अपहर्त्तुं प्रभवन्ति यदि। हन्त विषादे। 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो'रित्यमरः। प्रहरिष्यतः हन्तुमिच्छतो विधेर्दैवस्य अन्यत् कुसुमातिरिक्तं किम् इव वस्तु। इवशब्दो वाक्यालङ्कारे कीदृशमित्यर्थः। साधनं प्रहारसाधनं न भविष्यति सर्वमपि साधनं भविष्यत्येव इत्यर्थः ॥

৪৪। হায়! যদি কুসুমও শরীরে সঙ্গত হইয়া প্রাণবিনাশ করিতে সমর্থ, তবে বিধি সংহার করিতে ইচ্ছা করিলে কোন বস্তুদ্বারাই বা সংহার করিতে না পারে?

**अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः।**
**हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥ ४५**

४५ अः। अथवा प्रजान्तकः मृदु वस्तु मृदुना एव हिंसितुम् आरभते, अत्र हिमसेकविपत्तिः नलिनी मे पूर्वनिदर्शनम् मता ॥

४५। अथवा पक्षान्तरे। प्रजान्तकः कालः, मृदु कोमलं मृदुना एव वस्तुना हिंसितुं हन्तुम् आरभते उपक्रमते। अत्रार्थे हिमसेकेन तुषारनिस्यन्देन विपत्तिः मृत्युः यस्याः सा नलिनी, मे पूर्वं प्रथमं निदर्शनम् उदाहरणं मता। द्वितीयं निदर्शनं पुष्पमृत्युरिन्दुमतीति भावः।

৪৫। অথবা কৃতান্ত কোমল বস্তুদ্বারাই কোমল বস্তুর সংহার করিয়া থাকেন; ইহার প্রথম উদাহরণ—কমলিনী, যেহেতু উহা শিশিরবিন্দুপাতে বিনষ্ট হইয়া থাকে।

**स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम्।**
**विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ४६**

४६ अः। इयम् स्रक् यदि जीवितापहा, हृदये निहिता ( सती ) मां किं न हन्ति, ईश्वरेच्छया क्वचित् विषम् अपि अमृतं भवेत् ( क्वचित् ) अमृतं वा विषम् ( भवेत् ) ॥

४६। इयं स्रक् जीवितम् अपहन्तीति जीवितापहा यदि, हृदये वक्षसि 'हृदयं वक्षसि स्वान्ते' इत्यमरः। निहिता अर्पिता सती, मां किं न हन्ति। ईश्वरेच्छया क्वचित् प्रदेशे विषमपि अमृतं भवेत् क्वचित् अमृतं वा विषं भवेत्। दैवमेवात्र कारणमित्यर्थः ॥

৪৬। যদি এই পারিজাতমালাই প্রিয়তমার প্রাণনাশ করিল, তবে আমিও এই মালাকে হৃদয়ে স্থাপন করিতেছি, আমাকে কেন বিনাশ করিতেছে না? ঈশ্বরের অভিপ্রায়ে বিষও কখন অমৃত হয়, অমৃতও কখন বিষ হয়।

**अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा।**
**यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता ॥**

४७ अः। अथवा मम भाग्यविप्लवात् वेधसा एषः अशनिः कल्पितः, यत् अनेन तरुः न पातितः, तद्विटपाश्रिता लता क्षपिता ॥

४७। अथवा मम भाग्यस्य विप्लवात् विपर्ययात् एषः स्रक् इत्यर्थः। विधेयप्राधान्यात् पुंलिङ्गनिर्देशः। वेधसा विधात्रा अशनिः वैद्युतोऽग्निः कल्पितः। [ अपूर्वः कृत इत्यभिसन्धिः। ] 'दम्भोलिरशनिर्द्वयोः' इ

रः । अपूर्वत्वमेव स्पष्टयति—यत् यस्मात् अनेन पुरोवर्त्तिना अपि अनिना पुष्पाशनिना इत्यर्थः [ प्रसिद्धाशनिना इव ] तरुः तरुस्थानीयः यम् एव [ अहमित्यर्थः ] न पातितः किन्तु तस्य तरोः विटपाश्रिता ता, सदाश्रिता इन्दुमतीत्यर्थः । क्षपिता नाशिता ॥

৪৭। অথবা আমারই অদৃষ্টদোষে বিধাতা ইহাকে এইরূপ অপূর্ব্ব বজ্র করিয়া র্মাণ করিয়াছেন যে, ইহাদ্বারা বৃক্ষ নিপাতিত হইল না কিন্তু তাহার শাখাশ্রিত তাটী বিনষ্ট হইল।

कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥ ४८

४८ यः। यदा मयि चिरम् अपराद्धेऽपि अवधीरणां न कृतवती असि ( तत् ) कथम् एकपदे निरागसम् इमं जनम् आभाष्यं न मन्यसे ॥

४८। मयि चिरं भूरिशः अपराद्धे अपि अपराधं कृतवत्यपि। राधेः र्त्तरि क्तः। यदा यस्मात् हेतोः, यदेति हेत्वर्थः। 'स्वरादौ पठ्यते ति हेतौ' इति गणव्याख्यानात् अवधीरणाम् अवज्ञां न कृतवती असि अकार्षीः। तत् कथम् एकपदे तत्क्षणे। 'स्यात् तत्क्षणे एकपदम्' ति विश्वः। निरागसं नितरामनपराधम् इमं जनम् इममिति आत्म-र्देशः। मामित्यर्थः, आभाष्यं सम्भाष्यं न मन्यसे न चिन्तयसि ॥

৪৮। প্রিয়তমে! পূর্ব্বে আমি বার বার অপরাধ করিলেও তুমি আমাকে নও অবজ্ঞা কর নাই, কিন্তু এক্ষণে আমি তোমার নিকট কিছুই অপরাধ করি ই, তথাপি তুমি কিনিমিত্ত আমাকে সম্ভাষণযোগ্য মনে করিতেছ না!

ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव ।
परलोकमसन्निवृत्तये यदनापृच्छ्य गतासि मामितः ॥ ४९

४९ यः। हे शुचिस्मिते, शठः कैतववत्सलः तव ध्रुवं विदितः अस्मि, यत् माम् अनापृच्छ्य निवृत्तये इतः परलोकं गता असि ॥

४९। हे शुचिस्मिते! शठः गूढविप्रियकारी कैतवेन कपटेन वत्सलः तवस्निग्धः इति ध्रुवं सत्यं तव विदितः त्वया विज्ञातः अस्मि। 'मतिबुद्धि' त्यादिना कर्त्तरि क्तः, 'क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी। कुतः? यस्मात् माम् अनापृच्छ्य अनामन्त्र्य इतः अस्मात् लोकात् परलोकम् असन्निवृत्तये अपुनरावृत्तये गता असि ॥

৪৯। অয়ি মধুরহাসিনি! আমাকে কোন কথা না বলিয়াই চিরকালের জন্য

এস্থান হইতে পরলোকে প্রস্থান করিলে? নিশ্চয়ই বুঝিলাম—তুমি আমাকে কপটপ্রণয়ী বলিয়া জানিতে।

**दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना।**
**सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम्॥**

५० अ:। इदं मम हतजीवितं तावत् दयिताम् अन्वगात् यदि, (तर्हि) तया विना किं वि[निवृत्तम्] अतएव आत्मकृतेन प्रबलां वेदनां सहताम्॥

५०। इदं मम हतजीवितं कुत्सितं जीवितं तावदादौ दयितामि मतीमन्वगात् अन्वगच्छत् यदि अन्वगादेव। यद्यत्रावधारणे। मूर्च्छितत्वादिति भाव:। तर्हि तया दयितया विना किं किमर्थं विनि[वृत्तं] प्रत्यागतम्। प्रत्यागमनं न युक्तमित्यर्थ:। अतएव आत्मकृतेन स्वदुश्चे[ष्टि]तेन निवृत्तरूपेण प्रबलामधिकां वेदनां दुःखं सहतां क्षमताम्। स्व[]कृतापराधेषु सहिष्णुतैव शरणमिति भाव:॥

৫০। রে দগ্ধজীবন! যদি তুই প্রিয়তমার অনুগমন করিয়াছিলি, তবে [] তাহাকে পরিত্যাগ করিয়া কিজন্য প্রত্যাগমন করিলি? এক্ষণ এই আত্মকৃত বিরহযন্ত্রণা সহ্য কর।

**सुरतश्रमसम्भृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते।**
**अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम्॥**

५१। सुरतश्रमसम्भृत: स्वेदलवोद्गम: अपि ते मुखे ध्रियते अथच त्वम् आत्मना अस्त[मिता] (अत:) देहभृताम् इमाम् असारतां धिक्॥

५१। सुरतश्रमेण सम्भृत: जनित: स्वेदलवोद्गमोऽपि ते तव मुखे ध्रि[यते] वर्त्तते। अथच त्वमात्मना स्वरूपेण अस्तं नाशमिता प्राप्ता। [अतः] कारणाद्देहभृतां प्राणिनामिमां प्रत्यक्षामसारतामस्थिरतां धिक्॥

৫১। প্রিয়তমে! এখনও তোমার মুখে সম্ভোগশ্রমজনিত ঘর্ম্মজলবিন্দু র[হিয়াছে] কিন্তু ইতিমধ্যেই তুমি স্বয়ং প্রাণশূন্য হইয়াছ! অতএব দেহীদিগের এ[ই] অসারতায় ধিক্!

**मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि मा[म्]।**
**ननु शब्दपति: क्षितेरहं त्वयि मे भावनिबन्धना रति:॥**

५२ अ:। मया मनसा अपि तव विप्रियं न कृतपूर्वं मां किं जहासि ननु? अहं क्षिते: शब्द[पति:] भावनिबन्धना मे रति: (तु) त्वयि (अस्ति)॥

५२। आत्मनि कैतववत्सलत्वं शठत्वञ्च इन्दुमत्यभिप्रायेणैव

आरोपितं तत् अधुना निषेधयति—मनसेति । मया मनसापि तव विप्रियं न कृतपूर्व्वम् पूर्वं न कृतमित्यर्थः । सुप्सुपेति समासः । किं केन निमित्तेन मां जहासि त्यजसि । ननु मेदिनीपतिस्त्वम् अतः कथं विप्रियं नाशङ्कनीयम् इत्याह—ननु प्रिये, अहं क्षितेः शब्दपतिः शब्दत एव पतिः न त्वर्थत इत्यर्थः । [ पालयिता प्रियश्च पतिः, अतः मेदिन्याः शब्दशक्त्या पतित्वं नार्थशक्त्या इत्याशयः । तर्हि कुत्र तवार्थतः पतित्वमित्याशङ्क्याह ] भावनिबन्धना, अभिप्रायनिबन्धना स्वभावहेतुका न तु वाह्यकारणाश्रया रतिः प्रेम तु त्वय्येव अस्तीति शेषः । [ शठनायको हि एकत्र बद्धभावः अन्यत्र दर्शितवहिरनुरागो गूढ़ं विप्रियमाचरति । अहन्तु अकृतदारान्तरपरिग्रहः कथं शठः स्यामिति ? ] ॥

৫২। আমি পূর্ব্বে মনেও তোমার কোন অপকার করি নাই, তবে আমাকে কিজন্য পরিত্যাগ করিতেছ ? দেখ আমি বসুমতীর পতি নামমাত্র, কিন্তু তোমার উপরেই আমার আন্তরিক অনুরাগ নিবদ্ধ হইয়াছিল।

**कुसुमोत्खचितान् वलीभृतश्चलयन् भृङ्गरुचस्तवालकान् ।**
**करभोरु करोति मारुतः त्वदुपावर्त्तनशङ्कि मे मनः ॥ ५३**

५३ अः । हे करभोरु ! मारुतः कुसुमोत्खचितान् वलीभृतः भृङ्गरुचः तव अलकान् चलयन् (सन्) मे मनः त्वदुपावर्त्तनशङ्कि करोति ॥

५३ । कुसुमैरुत्खचितानुत्कर्षेण रचितान् वलीभृतो भङ्गीयुक्तान् कुटिलानित्यर्थः । भृङ्गरुचो नीलान् तवालकान् चलयन् कम्पयन् मारुतः, हे करभोरु ! करभसदृशोरु ! 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः । मे मनस्त्वदुपावर्त्तनशङ्कि तव पुनरागमने शङ्कावत्करोति । त्वदुज्जीवने शङ्कां सम्भावनामिति यावत् । कारयतीत्यर्थः ॥

৫৩। অয়ি করভোরু! সমীরণ তোমার কুসুমসমলঙ্কৃত ভ্রমরতুল্য কৃষ্ণবর্ণ কুটিল অলকাবলী কম্পিত করিয়া তুমি যেন পুনর্জ্জীবিত হইয়াছ এরূপ আশা আমার জন্মাইয়া দিতেছে।

**तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ।**
**ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥ ५४**

५४ अः । हे प्रिये ! तत् आशु प्रतिबोधेन मे विषादं, नक्तम् ओषधिः ज्वलितेन तुहिनाद्रेः गुहागतं तमः इव अपोहितुम् अर्हसि ॥

५४ । हे प्रिये ! तत्तस्मात्कारणात् आशु मे विषादं [illegible]

वौषधिस्तृणज्योतिराख्या लता ज्वलितेन प्रकाशेन तुहिनाद्रेर्हिमा गुहागतं तमः अन्धकारमिव प्रतिबोधेन ज्ञानेनापोहितुं निरसितुम्

৫৪। অতএব, হে প্রিয়তমে! রজনীযোগে প্রজ্বলিত ওষধি সকল যেরূপ গিরিগুহার অন্ধকার দূর করে, তদ্রূপ অবিলম্বে চৈতন্যলাভ করিয়া আমার বিষাদ দূর করা তোমার উচিত হইতেছে।

**इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम्।**
**निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम्॥**

५५ अः। इदम् उच्छ्वसितालकं विश्रान्तकथं तव मुखं निशि सुप्तं विरताभ्यन्तरषट्पदस्वनम् पङ्कजम् इव मां दुनोति॥

५५॥ इदमुच्छ्वसितालकं चलितचूर्णकुन्तलं विश्रान्तकथं निवृत्तसंलापं तव मुखं निशि रात्रौ सुप्तं निमीलितं विरतः अभ्यन्तरागामवर्त्तिनां षट्पदानां स्वनो यस्य तत्, निःशब्दभृङ्गमित्यर्थः। एकपङ्कजम् अद्वितीयं पद्ममिव, मां दुनोति परितापयति॥

৫৫। তোমার মুখমণ্ডলে অলকজাল বায়ুসহকারে সঞ্চালিত হইতেছে, বাক্য একবারে বিশ্রামলাভ করিয়াছে; এক্ষণে উহা নিশাকালে মুকুলিত এবং অন্তঃ ভ্রমরধ্বনিশূন্য পঙ্কজের ন্যায় আমাকে নিতান্ত সন্তপ্ত করিতেছে।

**शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम्।**
**इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः॥**

५६ अः। शर्वरी शशिनं, दयिता द्वन्द्वचरं पतत्रिणं पुनः एति इति तौ विरहान्तरक्षमौ, अत्यन्तगता (त्वन्तु) मां कथं न दहेः॥

५६। शर्वरी रात्रिः शशिनं चन्द्रं पुनरेति प्राप्नोति। द्वन्द्वं चरतीति द्वन्द्वचरः। तं पतत्रिणं चक्रवाकं दयिता चक्रवाकी पुनरेति इति हेतोः तौ चन्द्रचक्रवाकौ विरहान्तरक्षमौ विरहावधिसहौ। 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' इत्यमरः। अत्यन्तगता पुनरागमनरहिता त्वं तु कथं न मां दहेः न सन्तापयेः अपि तु दहेरेवेत्यर्थः॥

৫৬। রজনী চন্দ্রমাকে এবং চক্রবাকী সহচর চক্রবাককে পুনর্ব্বার প্রাপ্ত থাকে, অতএব চন্দ্রমা ও চক্রবাক বিরহ যন্ত্রণা সহ্য করিতে পারে; কিন্তু তুমি ফিরিয়া আসিবে না, অতএব তোমার বিরহ আমাকে দগ্ধ করিবে না কেন?

**नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम्।**
**तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम्॥**

५७ अः। हे वामोरु, नवपल्लवसंस्तरे अपि अर्पितं मृदु ते तव यत् अङ्गं दूयेत तत् इदं चितारोहणं कथं विषहिष्यते वद ॥

५७। नवपल्लवसंस्तरे नूतनप्रवालास्तरणेऽपि अर्पितं स्थापितं मृदु ते यदङ्गं शरीरं दूयेत परितप्तं भवेत्। वामौ सुन्दरौ ऊरू यस्याः सा वामोरु! 'वामं स्यात् सुन्दरे सव्ये' इति केशवः। 'संहितशफलक्षण—' वादिनोङ्प्रत्ययः। तदिदमङ्गं चितायाः काष्ठसञ्चयस्य अधिरोहणं विषहिष्यते वद ॥

৫৭। হে বামোরু! তোমার যে কোমল কলেবর অভিনবপল্লবরচিত শয্যায় করিয়া বেদনা অনুভব করিত, বল—এক্ষণে সেই শরীর কিরূপে চিতারোহণ সহ্য করিবে?।

अप्रतिबोधशायिनीं रशना त्वां प्रथमा रहःसखी ।
गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥ ५८

५८ अः। इयं प्रथमा रहःसखी गतिविभ्रमसादनीरवा रशना अप्रतिबोधशायिनीं त्वां शुचा मृता इव न लक्ष्यते न ॥

५८। इयं प्रथमा आद्या रहःसखी, सुरतसमयेऽप्यनुयानादिति भावः। गतिविभ्रमसादेन नीरवा विलासोपरमेण निःशब्दा रशना मेखला अप्रतिबोधम् अपुनरुद्बोधं यथा तथा शायिनीम् मृतामित्यर्थः। त्वामनु त्वया सह। तृतीयार्थ इत्यनुशब्दस्य कर्मप्रवचनीयत्वेन द्वितीया। शुचा शोकेन मृतेव न लक्ष्यते इति न, लक्ष्यत एवेत्यर्थः। सम्भाव्यनिषेधनिवर्त्तनाय द्वौ प्रतिषेधौ ॥

৫৮। এই রশনা সুরত-রঙ্গে অনুগামিনী হইয়া তোমার রহস্যসখী হইয়াছিল, এক্ষণে তোমার দীর্ঘনিদ্রা দর্শনে বিলাসগমনের বিরামে নীরব হইয়া শোকে অনুমৃতার ন্যায় লক্ষিত হইতেছে না কি?

कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।
पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥ ५९
त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥ ६०

५९—६० अः। अन्यभृतासु कलं भाषितं कलहंसीषु मदालसं गतं पृषतीषु विलोलम् ईक्षितं, पवनाधूतलतासु विभ्रमाः, अमी गुणाः त्रिदिवोत्सुकया अपि त्वया माम् अवेक्ष्य सत्यं निहिताः (किन्तु) तव विरहे गुरुव्यथं मे हृदयम् अवलम्बितुं न क्षमाः ॥

५९—६०। युग्मम्। उभयोरेकान्वयः। अन्यभृतासु कोकिलासु मधुरं भाषितं भाषणम्। कलहंसीषु विशिष्टहंसीषु मदालसं मन्दं गमनम्। पृषतीषु हरिणीषु विलोलमीक्षितं चञ्चला दृष्टिः। वायुना आधूतलतासु ईषत्कम्पितलतासु विभ्रमा विलासाः। इत्यमी कलभाषणादयो गुणाः। एषु कोकिलादिस्थानेष्विति शेषः। त्रिदिव-उत्सुकयापीह जीवन्त्येव स्वर्गं प्रति प्रस्थितयापि त्वया मामवेक्ष्य विरह-विचार्य्य सत्यं निहिताः, मत्प्राणधारणोपायतया स्थापिता इत्यर्थः। विरहे गुरुव्यथमतिदुःखं मे हृदयं मनः अवलम्बितुं स्थापयितुं न शक्ताः। ते तु त्वत्संगम एव सुखकारिणः, नान्यथा। प्रत्युत प्राणान् हरन्तीति भावः॥

৫৯—৬০। প্রিয়ে! তুমি সুরলোকগমনে একান্ত উৎসুক হইয়া আমার ক্লেশনিবৃত্তির মানসে কোকিলে মধুরালাপ, রাজহংসীমধ্যে মন্থরগতি, হরিণীগণে চঞ্চলদৃষ্টি, পবনকম্পিত লতাজালে হাবভাব রাখিয়া গিয়াছ; কিন্তু তোমার বিরহে ব্যথায় ব্যথিত আমার এ হৃদয় ঐ সকল দ্বারা ধৈর্য্যধারণে সমর্থ হইতেছে না।

**मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ।**
**अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम्॥**

६१ अ। ननु सहकारः फलिनी च इमौ त्वया मिथुनम् परिकल्पितम् अनयोर्विवाहसत्क्रियाम् अविधाय गम्यते इति असाम्प्रतम्॥

६१। ननु हे प्रिये! सहकारश्चूतविशेषः फलिनी प्रियङ्गुलता च इमौ त्वया मिथुनं परिकल्पितं मिथुनत्वेनाख्यमानि। अनयोः फलिनीसहकारयोर्विवाहसत्क्रियां विवाहमङ्गलमविधाय अकृत्वा गम्यते इत्यसाम्प्रतमयुक्तम्। मातृहीनानां न किञ्चित् सुखमस्तीति भावः॥

৬১। প্রিয়ে! এই সহকার তরু ও প্রিয়ঙ্গুলতাকে তুমি পতিপত্নী করিব এরূপ সঙ্কল্প করিয়াছিলে, কিন্তু এক্ষণে ইহাদের বিবাহসংস্কার সমাধান না করিয়া প্রস্থান করিলে, ইহা তোমার নিতান্ত অনুচিত কার্য্য হইতেছে।

**कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति।**
**अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम्॥**

६२ अः। त्वया कृतदोहदः अयम् अशोकः यत् कुसुमम् उदीरयिष्यति, तव अलकाभरणं तत् कथं निवापमाल्यतां नेष्यामि॥

६२। वृक्षादिपोषकं दोहदम्। त्वया कृतं दोहदं पादताडनं यस्य सोऽयमशोको यत् कुसुममुदीरयिष्यति प्रसविष्यति, तवालक-

रणमाभरणभूतं तत्कुसुमं कथं नु केन प्रकारेण निवापमाल्यतां दाह्ना-
रर्घ्यतां नेष्यामि। 'निवापः पितृदानं स्यात्' इत्यमरः॥

৬২। তুমি এই অশোকতরুর পুষ্পোদ্গম হওয়ার জন্য দোহদ প্রদান করিয়াছিলে।
এই বিকসিতপুষ্প তোমার অলকজালের অলঙ্কাররূপে প্রদান না করিয়া
দেহিক কার্য্যে কিরূপে নিয়োজিত করিব?

रतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम्।
मुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे॥६३

६३ अ:। हे सुगात्रि! अन्यदुर्लभं सशब्दनूपुरं चरणानुग्रहं स्मरता इव अमुना अशोकेन कुसुमाश्रु-
णा त्वं शोच्यसे॥

६३। अन्यदुर्लभं दुष्प्रापं किन्तु स्मर्त्तव्यमेवेत्यर्थः। सशब्दं ध्वनियुक्तं
ं मञ्जीरं यस्य तं चरणानुग्रहं पादेन ताड़नरूपं स्मरतेव चिन्तयतेव
मान्येव अश्रूणि तद्वर्षिणा अमुना पुरोवर्त्तिना अशोकेन, हे सुगात्रि!
ङ्गात्रकण्ठेभ्यश्च' इति वक्तव्यात् ङीप्। त्वं शोच्यसे॥

৬৩। সুন্দরি! এক্ষণে এই অশোকতরু অন্যের দুর্ল্লভ নূপুররব মুখরিত তোমার
াতরূপ অনুগ্রহ স্মরণ করিয়াই যেন নিরন্তর কুসুমাশ্রু বর্ষণপূর্ব্বক তোমার নিমিত্ত
কপ্রকাশ করিতেছে।

व निश्वसितानुकारिभिर्वकुलैरर्द्धचितां समं मया।
समाप्य विलासमेखलां किमिदं किन्नरकण्ठि सुप्यते॥६४

६४ अ:। हे किन्नरकण्ठि, तव निश्वसितानुकारिभिः वकुलैर्मया समम् अर्द्धचितां विलास
लाम् असमाप्य (त्वया) किमिदं सुप्यते॥

६४। तव निःश्वसितानुकारिभिर्वकुलैर्वकुलकुसुमैर्मया समं सार्द्धम्
चिताम् अर्द्धं यथा तथा चितां रचितां विलासमेखलामसमाप्य अपूर-
त्वा। किन्नरस्य देवयोनिविशेषस्य कण्ठ इव कण्ठो यस्यास्तत्संबुद्धिः
किन्नरकण्ठि! 'अङ्गगात्रकण्ठेभ्यश्च' इति ङीप्। किमिदं सुप्यते
द्रा क्रियते। 'वचिस्वपि'—इत्यादिना संप्रसारणम्। अनुचितमिदं
यनमित्यर्थः॥

৬৪। অয়ি কিন্নরকলনাদিনি! তোমার নিশ্বাসের ন্যায় সুগন্ধি বকুলপুষ্পের
া তুমি আমার সহিত যে এই বিলাসরশনা অর্দ্ধরচনা করিয়াছ, তাহা সম্পূর্ণ না
রিয়া কিজন্য নিদ্রাভিভূত হইলে?।

**समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः।**
**अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ ६५**

६५ अ:। सखीजनः समदुःखसुखः अयम् आत्मजः प्रतिपच्चन्द्रनिभः, अहम् एकरसः, ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥

६५। सखीजनः समदुःखसुखः, त्वद्दुःखेन दुःखी त्वत्सुखेन इत्यर्थः। अयमात्मजो बालः प्रतिपच्चन्द्रनिभः दर्शनीयो वर्द्धिष्णुश्च प्रतिपच्छब्देन द्वितीया लक्ष्यते प्रतिपदि चन्द्रस्यादर्शनात्। अहञ्च ए अभिन्नरागः समानप्रेमा इत्यर्थः। 'शृङ्गारादौ विषे वीर्य्ये गुणे रागे रसः' इत्यमरः। तथापि जीवितसामग्रीसत्त्वेऽपीत्यर्थः। ते तव व्यव ऽस्मत्परित्यागरूपो व्यापारः प्रतिपत्त्या निश्चयेन निष्ठुरः क्रूरः। 'प्रति पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च। प्रागल्भ्ये च प्रबोधे च' इति विश्वः। न शक्यः किमुताधिकर्त्तुमिति भावः ॥

৬৫। তোমার এই সকল সখী তোমার দুঃখে দুঃখী ও তোমার সুখে তোমার এই পুত্র প্রতিপদুদিত চন্দ্রমার ন্যায় প্রিয়দর্শন ; আর আমিও তোমার একান্ত অনুরাগী, তথাপি তুমি যে আমাদিগকে পরিত্যাগ করিয়া প্রস্থান করিলে তোমার নিশ্চয়ই নিতান্ত নিষ্ঠুরতার কার্য্য হইল।

**धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः।**
**गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥ ६६**

६६ अ:। अद्य मे धृतिः अस्तम् इता, रतिः च्युता, गेयम् विरतम्, ऋतुः निरुत्सवः, प्रयोजनं गतं, शयनीयं परिशून्यम् ॥

६६। अद्य मे धृतिः धैर्य्यं प्रतीतिर्वा अस्तं नाशम् इता। रतिः च्युता गता। गेयं गानं विरतम्। ऋतुर्वसन्तादिर्निरुत्सवः। आभर प्रयोजनं गतम् अपगतम्। शेतेऽस्मिन्निति शयनीयं तल्पम्। 'कृत्य बहुलम्' इत्यधिकरणार्थेऽनीयप्रत्ययः। परिशून्यम्। त्वां विना सर्व निष्फलमिति भावः ॥

৬৬। অদ্য হইতে আমার ধৈর্য্য লোপ পাইল, ভোগস্পৃহা নিবৃত্ত হইল, বিরক্তি জন্মিল, বসন্তাদি ঋতু সকল আমার পক্ষে উৎসবশূন্য হইল। আর আভরণধারণের প্রয়োজন নাই এবং শয্যাও শূন্য হইল।

**गृहिणी सचिवः सखी मिथः**
**प्रियशिष्या ललिते कलाविधौ।**

करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम् ॥ ६७

६७ अ:। (त्वमेव) गृहिणी सचिवः, मिथः सखी, ललिते कलाविधौ प्रियशिष्या, (अतएव) करुणाविमुखेन मृत्युना त्वां हरता मे किं न हृतं वद ॥

६७। त्वमेव गृहिणी दाराः। अनेन सर्वं कुटुम्बं त्वदाश्रयमिति ...। सचिवो बुद्धिसहायो मन्त्री। सर्वो हितोपदेशस्त्वदायत्त इत्यने-...। मिथो रहसि सखी नर्मसचिवः। अनेन सर्वोपभोगस्त्वदाश्रय ... प्रकटितम्। ललिते मनोहरे कलाविधौ वादित्रादिचतुःषष्टिकला-...गि प्रियशिष्या। प्रियत्वं प्राज्ञत्वादित्यभिसन्धिः। सर्वानन्दोऽनेन ...विबन्धन इत्युद्घाटितम्। अतस्त्वां तत्समष्टिरूपां हरता अतएव ...णाविमुखेन कृपाशून्येन मृत्युना मे मत्सम्बन्धि किं वस्तु न हृतं वद। ...मपि हृतमित्यर्थः ॥

৬৭। প্রিয়তমে! তুমি আমার গৃহিণী, মন্ত্রী, রহস্যসখী এবং মনোহর নৃত্যগীত ...তি কলালাপে প্রিয়শিষ্যা; বল দেখি, নির্দ্দয় কৃতান্ত তোমাকে হরণ করিয়া আমার ...না অপহরণ করিল!

...दिराक्षि मदाननार्पितं मधु पीत्वा रसवत् कथं नु मे।
...नुपास्यसि वाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥ ६८

६८ अ:। हे मदिराक्षि, मदाननार्पितं रसवत् मधु पीत्वा परलोकोपनतं मे वाष्पदूषितं जलाञ्जलिं ...नु अनुपास्यसि ॥

६८। माद्यत्यनयेति मदिरा लोकप्रसिद्धा, तथापि 'नार्यो मदिर-...चनाः' इत्यादिप्रयोगदर्शनान्माद्यत्याभ्यामिति मदिरे अक्षिणी यस्याः ...तत्संबुद्धिः हे मदिराक्षि! मदाननेनार्पितं रसवत् स्वादुतरं मधु मद्यं ...त्वा वाष्पदूषितमश्रुतप्तं परलोकोपनतं परलोकप्राप्तं मे जलाञ्जलिं तिलो-...दकाञ्जलिं कथं नु अनु अनन्तरं पास्यसि। तदनन्तरमिदमनर्हमित्यर्थः। ...याह भट्टमल्लः—'अनुपानं हिमजलं यवगोधूमनिर्मिते। दध्नि मद्ये विषे ...क्षौद्रे पिष्टे मिष्टमयेऽपि च॥' इति। तच्चेहैव युज्यते। इदं तूष्णं ...लोकान्तरोपयोगि चेत्यायुर्वेदविरोधात् कथमनुपास्यसीति भावः ॥

৬৮। হে মদিরলোচনে! তুমি আমার মুখসমর্পিত সুস্বাদু মদ্য পান করিয়া ...পরে কিরূপে মৎপ্রদত্ত লোকান্তরোপনীত অশ্রুজলদূষিত জলাঞ্জলি অনুপান করিবে?।

...বিভবেऽপि सति त्वया विना सुखमेतावदजस्य गण्यताम्।
...अहृतस्य विलोभनान्तरैर्मम सर्व्वे विषयास्त्वदाश्रयाः ॥ ६९

६९ अः। विभवे सति अपि त्वया विना अजस्य एतावत् ( एव ) सुखं गण्यताम्, वि- अहृतस्य मम सर्वे विषयाः त्वदाश्रयाः हि ॥

६९। विभवे ऐश्वर्य्ये सत्यपि त्वया विना अजस्य एतावदेः गण्यताम् । यावत्त्वया सह भुक्तं ततोऽन्यं न किञ्चिद्विषतीत्यर्थः। विलोभनान्तरैरहृतस्यानाकृष्टस्य मम सर्वे विषया भोगादयस्त्वदाश्रय- धीनाः। त्वां विना मे न किञ्चिद्रोचत इत्यर्थः।

৬৯। ঐশ্বর্য্যসত্ত্বেও তোমা ব্যতিরেকে এই পর্য্যন্তই অজের সুখভোগ প- হইল, অন্য কোনরূপ প্রলোভন আমাকে আর আকর্ষণ করিতে পারিবে না। ভোগাদি সকল বিষয় তোমারই অধীন।

**विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति।**
**अकरोत् पृथिवीरुहानपि स्रुतशाखारसबाष्पदूषितान्॥**

৭০ अः। कोशलाधिपः प्रियां प्रति इति करुणार्थग्रथितं विलपन् पृथिवीरुहानपि स्रुत- रसबाष्पदूषितान् अकरोत् ॥

৭০। कोशलाधिपोऽज इति करुणः शोकरसः स एवार्थस्तेन सम्बन्धं यथा तथा प्रियां प्रति इन्दुमतीमुद्दिश्य विलपन् पृथिवीरु- वृक्षानपि स्रुताः शाखारसा मकरन्दा एव बाष्पैर्दूषितान् अक- अचेतनानप्यरोदयदित्यर्थः ॥

৭০। কোশলাধিপতি অজ প্রিয়তমা ইন্দুমতীর নিমিত্ত এইপ্রকার ক- সম্বলিত বিলাপ করিয়া তত্রত্য পাদপগণকেও নির্য্যাস বা মকরন্দরূপ অশ্রুবর্ষণে করাইয়াছিলেন।

**अथ तस्य कथञ्चिदङ्कतः स्वजनस्तामपनीय सुन्दरीम्।**
**विससर्ज तदन्त्यमण्डनामनलायागुरुचन्दनैधसे ॥ ৭১**

৭১ अः। अथ स्वजनः तस्य अङ्कतः कथञ्चित् अपनीय तदन्त्यमण्डनां तां सुन्दरीम् अगु- धसे अनलाय विससर्ज ॥

৭১। अथ स्वजनो बन्धुवर्गस्तस्याजस्याङ्कत उत्सङ्गात् कथञ्चिदप- तद्दिव्यकुसुममेवान्त्यं मण्डनमलङ्कारो यस्यास्तां तां सुन्दरीम् अगु- चन्दनान्येधांसीन्धनानि यस्य तस्मै अनलायाग्नये विससर्ज विसृष्ट- 'क्रियाग्रहणमपि कर्त्तव्यम्' इति क्रियामात्रप्रयोगि सम्प्रदानत्वाच्चतुर्थी।

৭১। অনন্তর বন্ধুবর্গ অতিকষ্টে অজের ক্রোড় হইতে সেই রমণীকে অপ- পূর্ব্বক অন্ত্যেষ্টিক্রিয়াকালোচিত সজ্জায় সজ্জিত করিয়া অগুরুচন্দনকাষ্ঠের অ- বিসর্জ্জন করিলেন।

प्रमदामनुसंस्थितः शुचा
नृपतिः सन्निति वाच्यदर्शनात्।
न चकार शरीरमग्निसात्
सह देव्या न तु जीविताशया ॥ ७२

७२ अ:। नृपतिः 'सन् ( अपि ) शुचा प्रमदाम् अनु संस्थितः' इति वाच्यदर्शनात् देव्या सह
म् अग्निसात् न अकरोत् तु जीविताशया न ॥

७२। नृपतिरजः, 'सन्नपि विद्वानपि शुचा शोकेन प्रमदामनु प्रमदया
संस्थितो मृतः' इति वाच्यदर्शनान्निन्दादर्शनात् देव्या इन्दुमत्या सह
रमग्निसात् अग्न्यधीनं न चकार। 'तदधीनवचने' इति साति-
। जीविताशया प्राणेच्छया तु नेति ॥

२। 'অজ সুপণ্ডিত হইয়াও রমণীর শোকে আকুল হইয়া তাহার সহমৃত
ন' এই লোকনিন্দাভয়েই ভূপতি মহিষীর সহিত এক চিতানলে দেহ দগ্ধ করিলেন
নচেৎ জীবনের আশায় তিনি দেহরক্ষা করেন নাই।

थ तेन दशाहतः परे गुणशेषामुपदिश्य भामिनीम्।
दुषा विधयो महर्द्धयः पुर एवोपवने समापिताः ॥ ७३

७३ अ:। अथ विदुषा तेन गुणशेषां भामिनीम् उपदिश्य दशाहतः परे महर्द्धयः विधयः पुरः
ने एव समापिताः ॥

७३। अथ विदुषा शास्त्रज्ञेन तेनाजेन। गुणा रूपादय एव शेषा
यास्तां गुणशेषां भामिनीमिन्दुमतीमुपदिश्य उद्दिश्य। दशानामह्नां
माहारो दशाहः। 'तद्धितार्थ'—इत्यादिना समासः। समाहारस्य
त्वादेकवचनम्। 'राजाहःसखिभ्यष्टच्' इति टच्। 'रात्राह्नाहाः
सि' इति पुंवत्। ततस्तसिल्। तस्माद्दशाहतः परे ऊर्द्ध्वं कर्त्तव्या
र्द्धयो महासमृद्धयो विधयः क्रिया, पुरः पुर्य्यां उपवने उद्याने एव
मापिताः सम्पूर्णमनुष्ठिताः। 'दशाहतः' इत्यत्र 'विप्रः शुध्येद्दशाहेन
दशाहेन भूमिपः।' इति मनुवचनविरोधो नाशङ्कनीयः। तस्य
गुणक्षत्रियविषयत्वात्। गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह परा-
रः—'क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः' इति। सूचतेऽस्यापि
णवत्त्वं विदुषेत्यनेन ॥

৭৩। অতঃপর দশদিবস অতীত হইলে পর সেই পরমপণ্ডিত নরপতি গুণমাত্রা-
শেষা প্রিয়তমা ইন্দুমতীর উদ্দেশে সেই উপবনমধ্যেই মহাসমারোহে শ্রাদ্ধাদিক্রিয়া-
লাপ নির্ব্বাহ করিলেন।

**स विवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः।
परिवाहमिवावलोकयन् स्वशुचः पौरवधूमुखाश्रुषु॥**

७४ अः। तया विना क्षणदापायशशाङ्कदर्शनः सः पौरवधूमुखाश्रुषु स्वशुचः परिवाहम् अवलोकयन् पुरीं विवेश॥

७४। तया इन्दुमत्या विना। क्षणदाया रात्रेरपायेऽपगमे यः शशाङ्कः स इव दृश्यत इति क्षणदापायशशाङ्कदर्शनः। प्रातःकालिकचन्द्र इव दृश्यमान इत्यर्थः। दृश्यत इति कर्मार्थे ल्युट्। सोऽजः पौरवधूमुखाश्रुषु स्वशुचः स्वशोकस्य परिवाहं जलोच्छ्वासमिवावलोकयन्। 'जलोच्छ्वासाः परीवाहाः' इत्यमरः। स्वदुःखपूरातिशयमिव पश्यन् पुरीं विवेश। पौरवधूग्रहणात्तस्यामिन्दुमत्यां सख्याभिमानादजसमानदुःखसूचकपरिवाहोक्तिर्निर्वहति॥

१४। পরে তিনি প্রেয়সীর বিরহে প্রভাতকালীন শশধরের ন্যায় ক্ষীণ হইয়া পুররমণীগণের বাষ্পাকুললোচনে স্বীয় শোকসাগরের উচ্ছ্বাস অবলোকন করিয়াই যেন অন্তঃপুরে প্রবেশ করিলেন।

**अथ तं सवनाय दीक्षितः
प्रणिधानाद्गुरुराश्रमस्थितः।
अभिषङ्गजड़ं विजज्ञिवा-
निति शिष्येण किलान्वबोधयत्॥ ७५**

७५। अथ सवनाय दीक्षितः गुरुः आश्रमस्थितः ( सन् ) तम् अभिषङ्गजड़ं प्रणिधानात् विजज्ञिवान् इति शिष्येण अन्वबोधयत् किल॥

७५। अथ सवनाय यागाय दीक्षितो गुरुर्वशिष्ठ आश्रमे स्वकीये स्थितः सन्। तमजमभिषङ्गजडं दुःखमोहितं प्रणिधानात् चित्तैकाग्र्यात् विजज्ञिवान् ज्ञातवान्। 'क्वसुश्च' इति क्वसुप्रत्ययः। 'इति वक्ष्यमाण प्रकारेण शिष्येण अन्वबोधयत् किल। बुधेर्ण्यन्तात् णिचि लङ्॥

१৫। অনন্তর যজ্ঞে দীক্ষিত কুলগুরু বশিষ্ঠ, স্বীয় আশ্রমে অবস্থান করিয়া যোগবলে মহারাজ অজকে সহধর্ম্মিণীশোকে কাতর অবগত হইয়া প্রবোধপ্রদানার্থ এক শিষ্যকে প্রেরণ করিলেন।

**असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम्।
न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम्।**

७६। यतः मुनिः असमाप्तविधिः (ततः) तव तापकारणं विद्वान् अपि पथच्युतं भवन्तं प्रकृतौ स्थापयितुम् स्वयं न उपस्थितः ॥

७६। वशिष्ठशिष्य आह—यतो हेतोर्मुनिरसमाप्तविधिरसमाप्तक्रतुस्तव तापकारणं दुःखहेतु कलत्रनाशरूपं विद्वान् जानन्नपि। 'विदेः शतुर्वसुः' इति वस्वादेशः। 'न लोक'—इत्यादिना षष्ठीप्रतिषेधः। पथच्युतं स्वभावाद् भ्रष्टं भवन्तं प्रकृतौ स्वभावे स्थापयितुम्। समाश्वासयितुमित्यर्थः। स्वयं नोपस्थितो नागतः ॥

৭৬। মহর্ষিশিষ্য ভূপতির নিকট উপস্থিত হইয়া কহিলেন,—মহারাজ! মহর্ষির যজ্ঞ সমাপন হয় নাই, এজন্য তিনি আপনার সন্তাপ কারণ অবগত হইয়াও আপনাকে প্রকৃতিস্থ করিবার নিমিত্ত স্বয়ং উপনীত হইতে পারিলেন না।

मयि तस्य सुवृत्त वर्त्तते लघुसन्देशपदा सरस्वती।
शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि ॥ ७७

७७ अः। हे सुवृत्त, लघुसन्देशपदा तस्य सरस्वती मयि वर्त्तते, हे विश्रुतसत्त्वसार, तां शृणु एनां हृदि उपधातुं च अर्हसि ॥

७७। हे सुवृत्त! सदाचार! संदिश्यत इति सन्देशः सन्देष्टव्यार्थः तस्य पदानि वाचकानि लघूनि संक्षिप्तानि सन्देशपदानि यस्यां सा लघुसन्देशपदा तस्य मुनेः सरस्वती वाक् मयि वर्त्तते। हे विश्रुतसत्त्वसार! प्रख्यातव्यातिशय! तां सरस्वतीं शृणु। एनां वाचं हृदि उपधातुं धर्त्तुं चार्हसि ॥

৭৭। হে পূতচরিত! আমি তাঁহার সংক্ষিপ্ত উপদেশবচন বহন করিয়া আনিয়াছি। হে মনীষিতম! আপনি তাহা শ্রবণ করুন ও হৃদয়ে ধারণ করিয়া রাখুন।

पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च।
स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति ॥७८

७८ अः। अजन्मनः पुरुषस्य पदेषु समतीतञ्च यत् भवच्च भावि च (इति) त्रितयं सः निष्प्रतिघेन ज्ञानमयेन चक्षुषा पश्यति हि ॥

७८। वक्ष्यमाणार्थानुगुणं मुनेः सर्वज्ञत्वं तावदाह—पुरुषस्येति। अजन्मनः पुरुषस्य पुराणपुरुषस्य भगवतस्त्रिविक्रमस्य पदेषु विक्रमेषु। त्रिभुवनेष्वपीत्यर्थः। समतीतं भूतञ्च भवद्वर्त्तमानञ्च भावि भविष्यच्चेति त्रितयं स मुनिर्निष्प्रतिघेन अप्रतिबन्धेन ज्ञानमयेन चक्षुषा ज्ञानदृष्ट्या पश्यति हि। अतस्तदुक्तिषु न संशयितव्यमित्यर्थः ॥

৭৮। মহর্ষি জ্ঞাননয়নদ্বারা অনাদিপুরুষ ত্রিবিক্রমের বিক্রমস্থান এই ত্রিলোকমধ্যে ভূত, ভবিষ্যৎ ও বর্ত্তমান এই ত্রিবিধ বিষয়ই অব্যাঘাতে দর্শন করিতেছেন।

**चरत: किल दुश्चरं तपस्तृणविन्दो: परिशङ्कित: पुरा।**
**प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम्॥७९**

७९ अ:। पुरा दुश्चरं तपश्चरत: तृणविन्दो: परिशङ्कित: हरि: समाधिभेदिनीं हरिणीं सुराङ्गनां अस्मै प्रजिघाय॥

७९। पुरा किल दुश्चरं तीव्रं तपश्चरतस्तृणविन्दोस्तृणविन्दुनामकात् कस्मात् ऋषे: परिशङ्कितो भीत:। कर्त्तरि क्त:। 'भीत्रार्थानां भयहेतु:' इत्यपादानात्पञ्चमी। हरिरिन्द्र: समाधिभेदिनीं तपोविघातिनीं हरिणीं नाम सुराङ्गनामस्मै तृणविन्दवे प्रजिघाय प्रेरितवान्॥

৭৯। পূর্ব্বে দেবরাজ ইন্দ্র তৃণবিন্দুনামক কোন এক ঋষির কঠোর তপস্যাদর্শনে নিতান্ত ভয়বিহ্বল হইয়া তাঁহার ধ্যানভঙ্গার্থ হরিণী নাম্নী এক সুরাঙ্গনাকে তাঁহার নিকটে পাঠাইয়াছিলেন।

**स तप:प्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम्।**
**अशपद्भव मानुषीति तां शमवेलाप्रलयोर्म्मिणा भुवि॥८०**

८० अ:। स: शमवेलाप्रलयोर्म्मिणा तप:प्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमां तां "भुवि मानुषी भव" इति अशपत्॥

८०। स मुनि:। शम: शान्तिरेव वेला मर्य्यादा तस्या: प्रलयोर्म्मिणा प्रलयकालतरङ्गेण। शमविघातकेनेत्यर्थ:। 'अब्ध्यम्बुविकृतौ वेला कालमर्य्यादयोऽपि' इत्यमर:। तपस: प्रतिबन्धेन विघ्नेन यो मन्यु: क्रोधस्तेन हेतुना। प्रमुखे अग्रे आविष्कृतचारुविभ्रमां प्रकाशितमनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भव इत्यशपत् शशाप॥

৮০। সেই সুরাঙ্গনা তৃণবিন্দু মহর্ষির নিকট উপস্থিত হইয়া মনোহর হাবভাব প্রকাশপূর্ব্বক তপস্যায় প্রতিবন্ধকতাচরণ করিতে লাগিল। তখন সেই মহর্ষি শান্তিরূপ বেলার প্রলয়তরঙ্গস্বরূপ তপোভঙ্গজনিত ক্রোধে একান্ত অধীর হইয়া তাহাকে "মর্ত্ত্যলোকে মানুষী হইয়া থাক" এই অভিশাপপ্রদান করিয়াছিলেন।

**भगवन् परवानयं जन: प्रतिकूलाचरितं क्षमस्व मे।**
**इति चोपनतां क्षितिस्पृशं कृतवाना सुरपुष्पदर्शनात्॥८१**

८१ अ:। हे भगवन्, अयं जन: परवान्, मे प्रतिकूलाचरितं क्षमस्व इति उपनतां च ताम् आसुरपुष्पदर्शनात् क्षितिस्पृशं कृतवान्॥

८१। हे भगवन्! महर्षे! अयं जन:, परोऽस्यास्तीति स्वामित्वेऽर्थे परवान् पराधीन:। अयमित्यात्मनिर्देश:। अहं पराधीन इत्यर्थ:।

मम प्रतिकूलाचरितमपराधं क्षमस्वेत्यनेन प्रकारेणोपनतां शरणागतां च हरिणीम् आ सुरपुष्पदर्शनात् सुरपुष्पदर्शनपर्य्यन्तम् । क्षितिं स्पृशतीति क्षितिस्पृक् तां क्षितिस्पृशं मानुषीं कृतवानकरोत् । दिव्यपुष्पदर्शनं शापावधिरित्यनुगृहीतवानित्यर्थः ॥

८१। তখন হরিণী শরণাগতা হইয়া কহিল—ভগবন্! আমি পরাধীনা, অতএব আপনি আমার এই প্রতিকূলাচরণ অপরাধ ক্ষমা করুন। তখন মহর্ষি সুরকুসুম দর্শন পর্য্যন্ত তাহার পৃথিবীতে অবস্থান নিরূপণ করিয়া দিয়াছিলেন।

**क्रथकैशिकवंशसम्भवा तव भूत्वा महिषी चिराय सा ।**
**उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥८२**

८२ अः। क्रथकैशिकवंशसम्भवा सा तव महिषी भूत्वा चिराय दिवः च्युतं शापनिवृत्तिकारणम् उपलब्धवती विवशा ( अभूत् ) ॥

८२। क्रथकैशिकानां राज्ञां वंशे सम्भवो यस्याः सा हरिणी तव महिषी अभिषिक्ता स्त्री। 'कृताभिषेका महिषी' इत्यमरः। भूत्वा चिराय दिवः स्वर्गाच्च्युतं पतितं शापनिवृत्तिकारणं सुरपुष्परूपम् उपलब्धवती विवशा अभूदिति शेषः, मृतेत्यर्थः ॥

৮২। সেই সুরাঙ্গনা হরিণী ক্রথকৈশিকবংশে জন্মগ্রহণ করিয়া আপনার মহিষী হইয়াছিলেন, ইদানীং বহুকালপরে সেই শাপবিমোচনের নিদানভূত নভোমণ্ডল পরিচ্যুত দিব্যকুসুম দর্শন করিয়া মানবীদেহ পরিত্যাগ করিয়াছেন।

**तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।**
**वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥ ८३**

८३ अः। तत् तदपायचिन्तया अलम् उत्पत्तिमतां विपत् उपस्थिता त्वया इयम् वसुधा अवेक्ष्यतां हि नृपाः वसुमत्या कलत्रिणः ॥

८३। तत्तस्मात्तस्या अपायचिन्तया अलम्। तस्या मरणं न चिन्त्यमित्यर्थः। निषेधक्रियां प्रति करणत्वाच्चिन्तयेति तृतीया। कुतो न चिन्त्यमत आह—उत्पत्तिमतां जन्मवतां विपद्विपत्तिरुपस्थिता सिद्धा। जातस्य हि ध्रुवो मृत्युरित्यर्थः। तथापि कलत्ररहितस्य किं जीवितेन। तत्राह—त्वयेयं वसुधा भूमिरवेक्ष्यतां पाल्यताम्। हि यस्मान्नृपा वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः। अतो न शोचितव्यमित्यर्थः ॥

৮৩। অতএব এক্ষণে তাঁহার মৃত্যুর জন্য চিন্তা করা নিষ্ফল, জন্মগ্রহণ করিলেই মৃত্যু হইবে ইহা নিঃসংশয়। মহারাজ! আপনি পৃথিবী পালন করুন নরপতিবর্গ এই বসুমতী দ্বারাই কলত্রবান্ হইয়া থাকেন।

**उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्त्वया।**
**मनसस्तदुपस्थिते ज्वरे पुनरक्लीवतया प्रकाश्यताम् ॥ ८४**

८४ अ: । उदये मदवाच्यम् उज्झता त्वया यत् आत्मवत् श्रुतम् आविष्कृतं तत् मनसः ज्वरे समुपस्थिते अक्लीवतया पुनःप्रकाश्यताम् ॥

८४। उदयेऽभ्युदये सति मदेन यद्वाच्यं निद्रादुःखं तदुज्झता परिहरता सत्यपि मदहेतावमाद्यता त्वया यदात्मवदध्यात्मप्रचुरं श्रुतं शास्त्रम् तज्जनितं ज्ञानमिति यावत्। आविष्कृतं प्रकाशितम्। तच्छ्रुतं मनसो ज्वरे सन्तापे उपस्थिते प्राप्तेऽक्लीवतया धैर्य्येण लिङ्गेन पुनः प्रकाश्यताम्। विदुषा सर्वासु अवस्थासु अपि धीरेण भवितव्यमित्यर्थः ॥

৮৪। আপনি অভ্যুদয় সময়ে গর্ব্বজনিত লোকনিন্দার পাত্র না হইয়া অবিকৃত-চিত্ততাপ্রদর্শনহেতু শাস্ত্রজ্ঞান প্রকাশ করিয়াছেন। এখন এই শোকসময়ে ধৈর্য্য অবলম্বন করিয়া পুনরায় সেই শাস্ত্রজ্ঞানের প্রকাশ করুন।

**रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते।**
**परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥ ८५**

८५ अ: । भवता रुदता ( सता ) सा कुत एव लभ्यते, अनुमृता अपि पुनः नः परलोकजुषां देहिनां गतयः स्वकर्म्मभिः भिन्नपथाः हि ॥

८५। इतोऽपि न रोदितव्यमित्याह—रुदता भवता सा कुत एव लभ्यते, न लभ्यत एव। अनुम्रियत इत्यनुमृत्. क्विप्। तेनानुमृतानुमृतवतापि भवता पुनः न लभ्यते। कथं न लभ्यते इत्याह—परलोकजुषां लोकान्तरभाजां देहिनाम्। गम्यन्त इति गतयो गम्यस्थानानि स्वकर्मभिः पूर्वाचरितपुण्यपापैर्भिन्नपथाः पृथक्कृतमार्गा हि। परत्र स्वस्वकर्मानुरूपफलभोगाय भिन्नदेहगमनान्न मृतेनापि लभ्यत इत्यर्थः॥

৮৫। আপনি রোদন করিলে আর কোথায় মহিষীকে পাইবেন! অনুমৃত হইলেও তাঁহার সমাগম অসম্ভব। যেহেতু মনুষ্য পরলোক গমন করিয়া স্ব স্ব কর্ম্মফলে ভিন্ন ভিন্ন গতি লাভ করিয়া থাকে।

**अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः।**
**स्वजनाश्रुकिलातिसन्ततं दहति प्रेतमिति प्रचक्षते ॥ ८६**

८६ अ: । अपशोकमनाः ( सन् ) निवापदत्तिभिः कुटुम्बिनीम् अनुगृहीष्व, अतिसन्ततं स्वजनाश्रु प्रेतम् दहति इति प्रचक्षते किल ॥

८६। किन्तु अपशोकमना निर्दुःखचित्तः सन् कुटुम्बिनीं पत्नीं

निवापदत्तिभिः पिण्डोदकादिदानैरनुगृह्णीष्व। तर्पयेत्यर्थः। अन्यथा दोषमाह—अतिसन्ततमविच्छिन्नं स्वजनानां बन्धूनाम्। 'बन्धुस्वस्वजनाः समाः' इत्यमरः। अस्रु कर्तृ प्रेतं मृतं दहतीति प्रचक्षते मन्वादयः कथयन्ति। अत्र याज्ञवल्क्यः—'श्लेष्मास्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः। अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः॥' इति॥

৮৬। অতএব এক্ষণ আপনি শোক পরিত্যাগপূর্ব্বক জলপিণ্ডাদি প্রদান করিয়া পত্নীর প্রতি অনুগ্রহ প্রকাশ করুন, বৃথা আর রোদন করিবেন না; মনীষিগণ বলিয়া থাকেন যে, বন্ধুবর্গের অজস্র নিপাতিত অশ্রুজল মৃত ব্যক্তিকে সন্তাপিত করে।

**मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः।**
**क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ॥ ८७**

अन्वयः। शरीरिणां मरणं प्रकृतिः जीवितं विकृतिः (इति) बुधैः उच्यते जन्तुः क्षणम् अपि श्वसन् अवतिष्ठते यदि, असौ लाभवान् ननु॥

८७। शरीरिणां मरणं प्रकृतिः स्वभावः। ध्रुवमित्यर्थः। जीवितं विकृतिर्याद‍ृच्छिकं बुधैरुच्यते। एवं स्थिते जन्तुः प्राणी क्षणमपि। अत्यन्तसंयोगे द्वितीया। श्वसन् जीवन् अवतिष्ठते यद्यसौ क्षणजीवी लाभवान् ननु। जीवने यथालाभं सन्तोष्टव्यम् अलभ्यलाभात्। मरणे तु न शोचितव्यम् अस्य स्वाभाव्यादिति भावः॥

৮৭। পণ্ডিতগণ বলেন, প্রাণীদিগের মরণই প্রকৃতি, জীবনই বিকৃতি, জীব শরীর ধারণ করিয়া যদি ক্ষণকালও অবস্থান করে, উহাই তাহার পরম লাভ।

**अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम्।**
**स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम्॥ ८८**

अन्वयः। मूढचेतनः प्रियनाशं हृदि अर्पितं शल्यम् अवगच्छति स्थिरधीः तु तत् एव कुशलद्वारतया समुद्धृतं मन्यते॥

८८। मूढचेतनो भ्रान्तबुद्धिः प्रियनाशम् इष्टनाशं हृदि अर्पितं निखातं शल्यं शङ्कुमवगच्छति मन्यते। स्थिरधीर्विद्वांस्तु तदेव शल्यं समुद्धृतम् उत्खातं मन्यते। प्रियनाशे सतीति शेषः। कुतः। कुशलद्वारतया प्रियनाशस्य मोक्षोपायतयेत्यर्थः। विषयलाभविनाशयोर्यथाक्रमं हितासाधनत्वाभिमानः पामराणाम्। विपरीतन्तु विपश्चितामिति भावः॥

৮৮। মূঢ় ব্যক্তিরাই প্রিয়জনের বিয়োগ হৃদয়ের শল্য মনে করে; কিন্তু স্থিরবুদ্ধি ব্যক্তিরা প্রিয়বিনাশকে মুক্তির দ্বারবোধে উহাকেই হৃদয়নিহিত শল্যের উদ্ধার বিবেচনা করিয়া থাকেন।

**स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्य्ययौ यदा ।**
**विरहः किमिवानुतापयेद्वद वाह्यैर्विषयैर्विपश्चितम् ॥ ८९**

८९ अः । यदा स्वशरीरशरीरिणौ अपि श्रुतसंयोगविपर्य्ययौ, तदा वाह्यैः विषयैः वि[illegible] विपश्चितं किम् इव अनुतापयेत् वद ॥

८९ । स्वस्य शरीरशरीरिणौ देहात्मानावपि यदा यतः श्रुतौ श्रुत[illegible] गतौ संयोगविपर्य्ययौ संयोगवियोगौ ययोस्तौ तथोक्तौ । तदा वाह्यैर्विष[illegible] पुत्रमित्रकलत्रादिभिर्विरहो विपश्चितं विद्वांसं किमिवानुतापयेत्त्वं व[illegible] न किञ्चिदित्यर्थः । अथवा स्वशब्दस्य शरीरेणैव सम्बन्धः ॥

৮৯। যখন স্বীয় দেহের সহিত আত্মার একবার সংযোগ পুনরায় বিয়োগ হ[illegible] থাকে, তখন বলুন দেখি, পুত্রকলত্রপ্রভৃতি বাহ্যবিষয়ের বিরহ বিদ্বান্ ব্যক্তিকে [illegible] নিমিত্ত অনুতপ্ত করিবে ?।

**न पृथग्जनवच्छुचो वशं वशिनामुत्तम गन्तुमर्हसि ।**
**द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः ॥ [illegible]**

९० अः । हे वशिनामुत्तम ! पृथग्जनवत् शुचः वशं गन्तुं न अर्हसि द्रुमसानुमतां किम् अन्तर[म्] यदि वायौ ( सति ) द्वितये अपि ते चलाः ॥

९० । हे वशिनामुत्तम ! जितेन्द्रियवर्य्य ! पृथग्जनवत्पामरज[न]वच्छुचः शोकस्य वशं गन्तुं नार्हसि । तथाहि—द्रुमसानुमतां त[रु]शिखरिणां किमन्तरं को विशेषः ? वायौ सति द्वितयेऽपि द्विप्रका[रा] अपि । 'प्रथमचरम'—इत्यादिना जसि विभाषया सर्वनामसंज्ञा । [ते] द्रुमसानुमन्तश्चलाश्चञ्चला यदि । सानुमतामपि चलेन द्रुमवत्तेषामप्य[-] चलसंज्ञा न स्यादित्यर्थः ॥

৯০। হে সুধীর ! সামান্য লোকের ন্যায় শোকের বশীভূত হওয়া আপনা[র] নিতান্ত অনুচিত। যদি বাত্যা ( ঝড় ) উপস্থিত হইলে বৃক্ষ ও পর্ব্বত উভয়ই বিচলি[ত] হয়, তবে এই দুই বস্তুর প্রভেদ কি ?।

**स तथेति विनेतुरुदारमतेः**
**प्रतिगृह्य वचो विससर्ज मुनिम् ।**
**तदलब्धपदं हृदि शोकघने**
**प्रतियातमिवान्तिकमस्य गुरोः ॥ ९१**

९१ अः । सः उदारमतेः विनेतुः ( गुरोः ) वचः तथा इति प्रतिगृह्य मुनिं विससर्ज ( कि[न्]तु) तत् शोकघने अस्य हृदि अलब्धपदं ( सत् ) गुरोः अन्तिकं प्रतियातम् इव ॥

९१ सोऽजः उदारमतेर्विनेतुर्गुरोर्वशिष्ठस्य वचस्तच्छिष्यमुखेरितं प्रतिगृह्य अङ्गीकृत्य मुनिं वशिष्ठशिष्यं विससर्ज प्रेषयामास। किन्तु तद्वचः शोकघने दुःखसान्द्रेऽस्य अजस्य हृदि अलब्धपदमप्राप्तावकाशं सत् गुरोर्वशिष्ठस्यान्तिकं प्रतियातमिव प्रतिनिवृत्तं किमु इत्युत्प्रेक्षा। तोटकवृत्तमेतत्—'इह तोटकमम्बुधिसैः प्रथितम्' इति तल्लक्षणम्॥

৯১। মহারাজ অজ, উদারমতি কুলগুরু বশিষ্ঠের প্রদত্ত উপদেশ 'যে আজ্ঞা' বলিয়া গ্রহণ করিয়া তদীয় শিষ্যকে বিদায় দিলেন। কিন্তু শোকে ঘনীভূত অজ-হৃদয়ে সেই বাক্য স্থানলাভে অসমর্থ হইয়া যেন পুনরায় সেই কুলগুরু বশিষ্ঠের নিকটেই প্রত্যাগমন করিল।

तेनाष्टौ परिगमिताः समाः कथञ्चिद्-
बालत्वादवितथसूनृतेन सूनोः।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च॥ ९२

९२ श्लो। अवितथसूनृतेन तेन सूनोः बालत्वात् प्रियायाः सादृश्यप्रतिकृतिदर्शनैः स्वप्नेषु क्षणिकसमागमोत्सवैश्च कथञ्चित् अष्टौ समाः परिगमिताः॥

९२। अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेन अजेन। सूनोः पुत्रस्य बालत्वात्, राज्याक्षमत्वादित्यर्थः। प्रियाया इन्दुमत्याः सादृश्यं वस्त्वन्तरगतमाकारसाम्यं, प्रतिकृतिं चित्रं, तयोर्दर्शनैः स्वप्नेषु क्षणिकाः क्षणभङ्गुरा ये समागमोत्सवास्तैश्च। कथञ्चित् कृच्छ्रेण अष्टौ समा वत्सराः। 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः' इत्यमरः। परिगमिताः अतिवाहिताः। उक्तं च—'वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि कथितः॥' इति। प्रकृते सादृश्यादित्रितयाभिधाना तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्षणम्। प्रहर्षिणीवृत्तमेतत्॥

৯২। অনন্তর সত্য-প্রিয়বাদী অজ আত্মজ দশরথের বাল্য অবস্থাহেতু রাজ্যভার-গ্রহণে তাদৃশ ক্ষমতা জন্মে নাই বলিয়া প্রিয়তমার সাদৃশ্য ও প্রতিকৃতি দর্শনে এবং স্বপ্নাবস্থায় তৎসহ ক্ষণিক মিলনসুখের আস্বাদনে অতিকষ্টে আট বৎসর অতিবাহিত করিলেন।

तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं बिभेद।

प्राणान्तहेतुमपि तं भिषजामसाध्यं
लाभं प्रियानुगमने त्वरया स मेने ॥ ९३

९३ अ । शोकशङ्कुः तस्य हृदयं प्लक्षप्ररोहः सौधतलम् इव प्रसह्य बिभेद, स प्राणान्तहेतुम् अपि भिषजाम् असाध्यं तं प्रियानुगमने त्वरया लाभं मेने ॥

९३ । शोक एव शङ्कुः कीलः । 'शङ्कुः कीले शिवेऽस्त्रे च' इति विश्वः । तस्याजस्य हृदयम् । प्लक्षप्ररोहः सौधतलमिव । प्रसह्य बलात् किल बिभेद । सोऽजः प्राणान्तहेतुं मरणकारणमपि भिषजामसाध्यमप्रतिसमाधेयं तं शोकशङ्कुं रोगपर्य्यवसितं प्रियाया अनुगमने त्वरोत्कण्ठया लाभं मेने । तद्विरहस्यातिदुःसहत्वात् तत्प्राप्तिकारणं मरणं वरमित्यमन्यतेत्यर्थः ॥

৯৩। পরে বটবৃক্ষ যেমন সৌধতল ভেদ করিয়া থাকে, তদ্রূপ সেই শোকশঙ্কু বলপূর্ব্বক তাঁহার হৃদয় বিদীর্ণ করিল। সেই শোকশঙ্কু চিকিৎসকগণের অসাধ্য এবং প্রাণান্তহেতু হইলেও প্রিয়তমার অনুগমননিমিত্ত উৎকণ্ঠাপ্রযুক্ত তিনি অভীষ্ট বলিয়া বিবেচনা করিলেন।

सम्यग्विनीतमथ वर्महरं कुमार-
मादिश्य रक्षणविधौ विधिवत्प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः
प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४

९४ अः । अथ नृपतिः सम्यग्विनीतं वर्महरं कुमारं प्रजानां रक्षणविधौ विधिवत् आदिश्य रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः प्रायोपवेशनमतिः बभूव ॥

९४ । अथ नृपतिरजः सम्यग्विनीतं निसर्गसंस्काराभ्यां विनयवन्तं वर्म हरतीति वर्महरः कवचधारणार्हवयस्कः । 'वयसि च' इत्यच्प्रत्ययः । तं कुमारं दशरथं प्रजानां रक्षणविधौ राज्ये विधिवद्विध्यर्हम् यथाशास्त्रमित्यर्थः 'तदर्हम्' इति वतिप्रत्ययः । आदिश्य नियुज्य रोगेणोपसृष्टाया व्याप्तायास्तनोः शरीरस्य दुर्वसतिं दुःखावस्थितिं मुमुक्षुर्जिहासुः सन् प्रायोपवेशनेऽनशनावस्थाने मतिर्यस्य स बभूव । 'प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि' इति विश्वः । अत्र पुराणवचनम्—'समासक्तो भवेद्यस्तु पातकैर्महदादिभिः । दुश्चिकित्स्यैर्महारोगैः पीड़ितो वा भवेत्तु यः ॥ स्वयं देहविनाशस्य काले प्राप्ते महामतिः । आब्रह्माणं वा स्वर्गादिमहाफल-जिगीषया ॥ प्रविशेज्ज्वलनं दीप्तं कुर्य्यादनशनं तथा । एतेषामधिकारी

...र नान्येषां सर्वजन्तुषु। नराणामथ नारीणां सर्ववर्णेषु सर्वदा॥' इति। ...तयोर्वसन्ततिलकाच्छन्दः। तल्लक्षणं—'उक्ता वसन्ततिलका तभजा ...जौ गः' इति॥

৯৪। অনন্তর নরপতি অজ সর্ব্বথা বিনীত বর্ম্মধারণক্ষম আত্মজ দশরথকে যথা... ...রাজ্যপালনে নিযুক্ত করিয়া রুগ্নশরীরে জীবনধারণের কষ্ট নিবারণ কামনায় ...প্রায়োপবেশন ব্রত অবলম্বন করিলেন।

**तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-**
**र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः।**
**पूर्वाकाराधिकचतुरया सङ्गतः कान्तयासौ**
**लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु॥ ९५**

इति श्रीमहाकविकालिदासकृतौ रघुवंशे अजविलापो नामाष्टमः सर्गः॥ ८

९५। असौ जह्नुकन्यासरय्वोः तोयव्यतिकरभवे तीर्थे देहत्यागात् सद्यः अमरगणनालेख्य... ...मासाद्य पूर्वाकाराधिकतररुचा कान्तया सङ्गतः नन्दनाभ्यन्तरेषु लीलागारेषु पुनः अरमत॥

९५। असौ अजः जह्नुकन्यासरय्वोस्तोयानां जलानां व्यतिकरेण सम्भेदेन ...भवे तीर्थे गङ्गासरयूसङ्गमे देहत्यागात् सद्य एव अमरगणनायां लेख्यं लेख... ...नम्। 'तयोरेव कृत्यक्तखलर्थाः' इति भावार्थे खत्प्रत्ययः। आसाद्य ...प्राप्य। पूर्वस्मादाकारादधिकतरा रुग्यस्यास्तया कान्तया रमण्या सङ्गतः ...सन्, नन्दनस्येन्द्रोद्यानस्य अभ्यन्तरेष्वन्तर्वर्त्तिषु लीलागारेषु क्रीड़ाभवनेषु ...पुनररमत। 'यथाकथञ्चित्तीर्थेऽस्मिन् देहत्यागं करोति यः। तस्यात्म- ...घातदोषो न प्राप्नुयादीप्सितान्यपि॥' इति स्कान्दे। मन्दाक्रान्ताच्छन्दः। ...तल्लक्षणम्—'मन्दाक्रान्ता जलधिषड़गैर्म्भौ भनौ तौ गुरु चेत्' इति॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये अजविलापो नाम अष्टमः सर्गः॥ ८

৯৫। এবং গঙ্গা সরযূ নদীর সঙ্গমসম্ভূত তীর্থে কলেবর পরিত্যাগ করিয়া তৎ-...ক্ষণাৎ স্বর্গরাজ্যে অমর বলিয়া পরিগণিত হইলেন ও পূর্ব্বাপেক্ষায় অধিকতর ...সৌন্দর্য্যশালিনী রমণীর সহিত মিলিত হইয়া নন্দনকাননের অভ্যন্তরস্থ ক্রীড়াগৃহে ...পুনরায় বিহার করিতে লাগিলেন।

অষ্টম সর্গ সমাপ্ত॥ ৮

# नवमः सर्गः ।

—०००—

**पितुरनन्तरमुत्तरकोशलान् समधिगम्य समाधिजितेन्द्रियः**
**दशरथः प्रशशास महारथो यमवतामवताञ्च धुरि स्थितः ॥ १**

१ अः । समाधिजितेन्द्रियः अवतां यमवताञ्च धुरि स्थितः महारथः दशरथः पितुः अनन्तरम् उत्तरकोशलान् समधिगम्य प्रशशास ॥

एकलोचनमेकार्द्धे सार्द्धलोचनमन्यतः ।
नीलार्द्धं नीलकण्ठार्द्धं महः किमपि मन्महे ॥

१ । समाधिना संयमेन जितेन्द्रियः । 'समाधिर्नियमे ध्याने' इति कोषः । यमवतां संयमिनामवतां रक्षतां राज्ञां च धुरि अग्रे स्थितो महारथः । 'एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥' इति । दशरथः पितुरनन्तरमुत्तरकोसलान् जनपदान् समधिगम्य प्रशशास । अत्र मनुः—'क्षत्रियस्य परो धर्मः प्रजानां परिपालनम् ।' इति । द्रुतविलम्बितमेतद्वृत्तं, तल्लक्षणं—'द्रुतविलम्बितमाह नभौ भरौ' इति ॥

১ । সমাধিযোগে জিতেন্দ্রিয়, সংযমী ও প্রতিপালকদিগের অগ্রণী মহারথ দশরথ পিতার লোকান্তরগমনের পর উত্তরকোশল অধিকারপূর্ব্বক শাসন করিতে লাগিলেন।

**अधिगतं विधिवद्यदपालयत्प्रकृतिमण्डलमात्मकुलोचितम् ।**
**अभवदस्य ततो गुणवत्तरं सनगरं नगरन्ध्रकरौजसः ॥ २**

२ अः । अधिगतम् आत्मकुलोचितं स नगरं प्रकृतिमण्डलं यत् विधिवत् अपालयत्, ततः नगरन्ध्रकरौजसः अस्य गुणवत्तरम् अभवत् ॥

२ । अधिगतं प्राप्तमात्मकुलोचितं स्वकुलागतं सनगरं नगरजनसहितं प्रकृतिमण्डलं जानपदमण्डलम् । अत्र प्रकृतिशब्देन प्रजामात्रवाचिना नगरशब्दयोगाद्गोबलीवर्दन्यायेन जानपदमात्रमुच्यते । यद्यस्माद्विधिवद्यथाशास्त्रमपालयत् । ततो हेतोः । रन्ध्रं करोतीति रन्ध्रकरः । रन्ध्रहेतुरित्यर्थः । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टप्रत्ययः । नगस्य रन्ध्रकरो नगरन्ध्रकरः कुमारः । 'कुमारः क्रौञ्चदारणः' इत्यमरः । तदोजसस्तत्तुल्यबलस्यास्य दशरथस्य गुणवत्तरमभवत् । तत्पौरजानपदमण्डलं तस्मिन्नतीवासक्तमभूदित्यर्थः ॥

২। কার্ত্তিকেয়তুল্য তেজস্বী রাজা দশরথ পৈতৃক পুর ও প্রজামণ্ডলীকে হস্তগত করিয়া যথাবিধি প্রতিপালন করিতে থাকিলে প্রকৃতিপুঞ্জও তাঁহার প্রতি একান্ত অনুরক্ত হইয়া উঠিল।

**उभयमेव वदन्ति मनीषिणः समयवर्षितया कृतकर्मणाम्।**
**बलनिषूदनमर्थपतिञ्च तं श्रमनुदं मनुदण्डधरान्वयम् ॥ ३**

३ अः। मनीषिणः बलनिषूदनं मनुदण्डधरान्वयम् अर्थपतिं च (इति) उभयम् एव समय-वर्षितया कृतकर्म्मणां श्रमनुदं वदन्ति ॥

३। मनस ईषिणो मनीषिणो विद्वांसः। पृषोदरादित्वात् साधुः। बलनिषूदनमिन्द्रम्। दण्डस्य धरो राजा मनुरिति यो दण्डधरः स अन्वयः कूटस्था यस्य तमर्थपतिं दशरथं चेत्युभयमेव। समयेऽवसरे धनं च वर्षतीति समयवर्षी, तस्य भावः समयवर्षिता तया हेतुना, कृतकर्मणां स्वकर्मकारिणाम्। नुदतीति नुदम्। 'इगुपधज्ञाप्रीकिरः क' इति कप्रत्ययः। श्रमस्य नुदं श्रमनुदम्। क्विबन्तत्वे नपुंसकलिङ्गेन उभयशब्देन सामानाधिकरण्यं न स्यात्। इति वदन्ति ॥

৩। মনুবংশসম্ভূত রাজা দশরথ এবং ত্রিদশনাথ ইন্দ্র যথাকালে অর্থ ও বারিবর্ষণ করিতেন বলিয়া মনীষিগণ উভয়কেই স্বকার্য্যনিরত ব্যক্তিগণের শ্রমাপনয়নকারী বলিয়া অভিহিত করিতেন।

**जनपदे न गदः पदमादधावभिभवः कुत एव सपत्नजः।**
**क्षितिरभूत् फलवत्यजनन्दने शमरतेऽमरतेजसि पार्थिवे ॥४**

४ अः। शमरते अमरतेजसि अजनन्दने पार्थिवे (सति) जनपदे गदः पदं न आदधौ, सपत्नजः अभिभवः कुतः एव क्षितिः फलवती अभूत् ॥

४। शमरते शान्तिपरेऽमरतेजस्यजनन्दने दशरथे पार्थिवे पृथिव्या ईश्वरे सति। 'तस्येश्वरः' इत्यण्प्रत्ययः। जनपदे देशे गदो व्याधिः। 'उपतापरोगव्याधिगदामयाः' इत्यमरः। पदं नादधौ नाचक्रामेत्यर्थः। सपत्नजः शत्रुजन्योऽभिभवः कुत एव, असम्भावित इवेत्यर्थः। क्षितिः फलवत्यभूच्च ॥

৪। অমরপরাক্রম প্রশান্তচিত্ত অজাত্মজ রাজা দশরথের রাজ্যশাসনকালে রিপুকৃত পরাভব ত দূরের কথা, জনপদমধ্যে ব্যাধিও প্রবেশলাভ করিতে সমর্থ হয় নাই এবং বসুমতীও প্রচুর ফলবতী হইয়াছিল।

**दशदिगन्तजिता रघुणा यथा श्रियमपुष्यदजेन ततः परम्।**
**तमधिगम्य तथैव पुनर्बभौ न न महीनमहीनपराक्रमम् ॥५**

५ अ:। मही दशदिगन्तजिता रघुणा ततः परम् अजेन (च) यथा श्रियम् अपुष्यत्
अहीनपराक्रमं तम् इनम् अधिगम्य पुनः न बभौ (इति) न॥

५। मही दशदिगन्ताञ्जितवानिति दशदिगन्तजित्। तेन रघुणा यथा श्रियं कान्तिमपुष्यत्। ततः परं रघोरनन्तरमजेन च यथा श्रिय-मपुष्यत् तथैवाहीनपराक्रमं न हीनः पराक्रमो यस्य तमन्यूनपराक्रमं दशरथम् इनं स्वामिनमधिगम्य पुनर्न बभाविति न, बभावेत्यर्थः। नञौ प्रकृतमर्थं गमयतः॥

৫। বিশ্ববিজয়ী রঘু এবং তদনন্তর মহারাজ অজের রাজ্যকালে পৃথিবী যে শোভিত হইয়াছিল, এক্ষণে অতুলপরাক্রম রাজা দশরথের করগত হইয়াও তদ্রূপ শোভা ধারণ করিল।

**समतया वसुवृष्टिविसर्जनैर्नियमनादसतां च नराधिपः।**
**अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा॥ ६॥**

६ अ:। नराधिपः समतया वसुवृष्टिविसर्जनैः असतां नियमनात् च सवरुणौ यमपुण्यजनेश्वरौ अनुययौ, रुचा अरुणाग्रसरम् अनुययौ॥

६। नराधिपो दशरथः समतया समवर्त्तित्वेन। मध्यस्थत्वेनेत्यर्थः। वसुवृष्टेर्धनवृष्टेर्विसर्जनैः असतां दुष्टानां नियमनान्निग्रहाच्च। सवरुणौ वरुणसहितौ यमपुण्यजनेश्वरौ यमकुवेरौ यमकुवेरवरुणान् यथासंख्य-मनुययौ अनुचकार। रुचा तेजसा अरुणाग्रसरमरुणसारथिं सूर्य्यमनुययौ।

৬। নরপতি দশরথ সকলের প্রতি সমানদৃষ্টি বিতরণ করিয়া কৃতান্তের, ধনবৃষ্টি দ্বারা কুবেরের, অসাধুদিগের নিগ্রহে বরুণের এবং কান্তিতে দিবাকরের অনুকরণ করিয়াছিলেন।

**न मृगयाभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु।**
**तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत्॥ ७॥**

७ अ:। उदयाय यतमानं तं मृगयाभिरतिः न, दुरोदरं न शशिप्रतिमाभरणं मधु च न नव-यौवना प्रियतमा वा न अपाहरत्॥

७। तस्य व्यसनासक्तिर्नासीदित्याह—नेति। उदयाय यतमान-मभ्युदयार्थं व्याप्रियमाणं तं दशरथं, मृगयाभिरतिराखेटव्यसनं नापाहरत् नाचकर्ष। 'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्' इत्यमरः। दुष्टमा समन्तादुदरमस्येति। दुरोदरं द्यूतं च नापाहरत्। 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः। शशिनः प्रतिमा प्रतिविम्बमा-भरणं यस्य तन्मधु नापाहरत्। नेति पदच्छेदः, वाशब्दः समुच्चये। नव-

यौवना नवं नूतनं यौवनं तारुण्यं यस्यास्तादृशी प्रियतमा स्त्री वा नापाहरत्। जातावेकवचनम् । अत्र मनुः—'पानमक्षाः स्त्रियश्चेति मृगया यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ।' इति ॥

৭। এইরূপে তিনি যখন বিবিধ অভ্যুদয়লাভে যত্নবান্ ছিলেন, তখন মৃগয়ানুরাগ, অক্ষক্রীড়া, চন্দ্রপ্রতিমপাত্রে স্থিত মদ্য এবং নবযৌবনা রমণী তাঁহার মন আকর্ষণ করিতে সমর্থ হয় নাই।

**न कृपणा प्रभवत्यपि वासवे न वितथा परिहासकथास्वपि ।**
**न च सपत्नजनेष्वपि तेन वा-गपरुषा परुषाक्षरमीरिता ॥ ८**

८ अ०। तेन प्रभवति (सति) वासवे अपि कृपणा वाक् न ईरिता, परिहासकथासु अपि वितथा वाक् न ईरिता अपरुषा ( तेन ) सपत्नजनेषु अपि परुषाक्षरं वाक् न ईरिता ॥

८। तेन राज्ञा, प्रभवति प्रभौ सति वासवेऽपि कृपणा दीना वाक् न ईरिता नोक्ता। परिहासकथास्वपि वितथा अनृता वाक् न ईरिता। किन्तु अपरुषा रोषशून्येन तेन सपत्नजनेष्वपि शत्रुजनेष्वपि परुषाक्षरं निष्ठुराक्षरं यथा तथा वाक् न ईरिता। किमुतान्यत्रेति सर्वत्रापिशब्दार्थः। किन्त्वदीना सत्या मधुरैव वागुक्तेति फलितार्थः ॥

৮। ত্রিদশাধিপতি ইন্দ্র প্রভু হইলেও রাজা দশরথ তাঁহার নিকট দীনবাক্য উচ্চারণ করিতেন না, তিনি পরিহাসচ্ছলেও কখন মিথ্যাকথা কহিতেন না এবং স্বয়ং রোষশূন্য হওয়ায় শত্রুর প্রতিও পরুষভাষণ করিতেন না।

**उदयमस्तमयञ्च रघूद्वहा-**
**दुभयमानशिरे वसुधाधिपाः ।**
**स हि निदेशमलङ्घयतामभूत्**
**सुहृदयोहृदयः प्रतिगर्जताम् ॥ ९**

९ अ०। वसुधाधिपाः रघूद्वहात् उदयम् अस्तमयञ्च उभयम् आनशिरे, हि सः निदेशम् अलङ्घयतां सुहृत्, प्रतिगर्जताम् अयोहृदयः अभूत् ॥

९। वसुधाधिपा राजानः, उद्वहतीत्युद्वहो नायकः। पचाद्यच्। रघूणामुद्वहो रघुनायकः। तस्माद्रघुनायकादुदयं वृद्धिम् अस्तमयं नाशं च इत्युभयमानशिरे लेभिरे। कुतः, हि यस्मात् स दशरथः, निदेशमाज्ञामलङ्घयताम्। शोभनं हृदयमस्येति सुहृन्मित्रमभूत्। 'सुहृद्दुर्हृदौ मित्रामित्रयो'रिति निपातः। प्रतिगर्जतां प्रतिस्पर्द्धिनाम्, अय इव हृदयं यस्य सोऽयोहृदयः कठिनचित्तोऽभूत्। आज्ञाकारिणो रक्षति, अन्यान्मारयति इत्यर्थः ॥

৯। তিনি নিদেশপালনকারীদিগের সুহৃৎ ও প্রতিকূলাচরণকারিগণের প্রতি কঠিনহৃদয় হইয়া উঠিলেন এবং সেই রঘুকুলশ্রেষ্ঠ দশরথ হইতে অন্যান্য মহীপালগণ উন্নতি অবনতি উভয়ই লাভ করিতে লাগিলেন।

**अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः ।**
**जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः ॥**

१० अ:। अधिज्यशरासन: स: एकरथेन उदधिनेमिं मेदिनीम् अजयत् गजवती जवतीव्रहया चमू: अस्य केवलं जयम् अघोषयत् ॥

१०। अधिज्यशरासनः स दशरथः, उदधिनेमिं समुद्रवेष्टनां मेदिनीमेकरथेनाजयत्, स्वयमेकरथेनाजैषीदित्यर्थः। गजवती गजयुक्ता ज[वेन] तीव्रा जवाधिका हया यस्याः सा चमूस्तु अस्य नृपस्य केवलं जयमघोषयत् प्रथयत्। स्वयमेकवीरस्य चमूरुपकरणमात्रमिति भावः ॥

১০। অনন্তর মহারথ রাজা, শরাসনে জ্যারোপণ করিয়া সাগরাম্বরা ধরিত্রীকে [জয়] করিবার জন্য বহির্গত হইলেন; তৎকালে গজ ও বেগগামী অশ্বসম্পন্ন সৈন্যসমূহ কে[বল] তাঁহার জয়ঘোষণা করিতে লাগিল।

**अवनिमेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः ।**
**विजयदुन्दुभितां ययुरर्णवा घनरवा नरवाहनसम्पदः ॥**

११ अ:। वरूथिना एकरथेन अवनिं जितवत: धनुर्भृत: नरवाहनसम्पद: तस्य घन[रवाः] अर्णवा: विजयदुन्दुभितां ययु: किल ॥

११। वरूथिना गुप्तिमता। 'वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितिम्' इति सज्जनः। एकरथेन अद्वितीयरथेन अवनिं जितवतो धनुर्भृतो नरवाहनसम्पदः कुबेरतुल्यश्रीकस्य तस्य दशरथस्य घनरवा मेघसमघोषाः अर्णवाः, विजयदुन्दुभितां ययुः किल। अर्णवान्तविजयीत्यर्थः ॥

১১। তিনি বরূথযুক্ত একরথে মেদিনী জয় করিলেন, তখন অর্ণবচতুষ্টয় কু[বের]সদৃশ সমৃদ্ধিশালী সেই বিজয়ী ধনুর্দ্ধারী রাজা দশরথের ঘনরব বিজয়দুন্দুভির কা[র্য] করিল।

**शमितपक्षबलः शतकोटिना शिखरिणां कुलिशेन पुरन्दरः ।**
**स शरवृष्टिमुचा धनुषा द्विषां स्वनवता नवतामरसाननः ॥**

१२ अ:। पुरन्दर: शतकोटिना कुलिशेन शिखरिणां शमितपक्षबल:, नवतामरसानन: स: शरवृष्टिमुचा स्वनवता धनुषा द्विषां शमितपक्षबल: ॥

१२। पुरन्दर इन्द्रः शतकोटिना शतास्रिणा कुलिशेन वज्रेण शिखरिणां पर्वतानां शमितपक्षबलः विनाशितपक्षसारः। नवतामरसाननो नवपङ्कजाननः। 'पङ्केरुहं तामरसम्' इत्यमरः। स दशरथः शरवृष्टिमता स्वनवता धनुषा द्विषां शमितो नाशितः पक्षः सहायो बलं च येन स तथोक्तः। 'पक्षः सहायेऽपि' इत्यमरः॥

১২। পুরন্দর শতকোটি কুটিল কুলিশদ্বারা পর্ব্বত সকলের পক্ষবল ছেদন করিয়াছিলেন। নবপদ্মসদৃশ সুন্দরবদন দশরথও শরবর্ষী মহাস্বন শরাসন দ্বারা শত্রুগণের পক্ষ বিনাশ করিয়াছিলেন।

**चरणयोर्नखरागसमृद्धिभि-**
**र्मुकुटरत्नमरीचिभिरस्पृशन्।**
**नृपतयः शतशो मरुतो यथा**
**शतमखं तमखण्डितपौरुषम्॥ १३**

१३ अ:। शतशः नृपतयः अखण्डितपौरुषं तं मरुतः शतमखं यथा नखरागेण समृद्धिभिः मुकुटरत्नमरीचिभिः चरणयोः अस्पृशन्॥

१३। शतशो नृपतयः, अखण्डितपौरुषं तं दशरथम्। मरुतो देवाः, शतमखं यथा शतक्रतुमिव। नखरागेण चरणनखकान्त्या समृद्धिभिः सम्पादितर्द्धिभिर्मुकुटरत्नमरीचिभिः चरणयोरस्पृशन्। तं प्रणेमुरित्यर्थः॥

১৩। দেবগণ যেরূপ দেবরাজ ইন্দ্রের নিকট প্রণত হন, তদ্রূপ শতসহস্র নৃপতি অবিচ্ছিন্নপৌরুষ রাজা দশথের চরণে প্রণত হইল। সেই প্রণামকালে তাঁহার চরণযুগলের নখময়ূখদ্বারা ভূপগণের কিরীটনিহিত রত্নরাজির কিরণচ্ছটা সমধিক সম্পাদিত হইয়া পড়িল।

**निववृते स महार्णवरोधसः सचिवकारितबालसुताञ्जलीन्।**
**समनुकम्प्य सपत्नपरिग्रहाननलकानलकानवमां पुरीम्॥१४**

१४ अ:। सः सचिवकारितबालसुताञ्जलीन् अनलकान् सपत्नपरिग्रहान् समनुकम्प्य अलकानवमां पुरीं (प्रति) महार्णवरोधसः निववृते॥

१४। स दशरथः, सचिवैः सम्प्रयोजितैः कारिता बालसुतानामञ्जलयो यैस्तान्। स्वयमसम्मुखागतानित्यर्थः। अनलकान् हतभर्तृकतया अलकसंस्कारशून्यान् सपत्नपरिग्रहान् शत्रुपत्नीः। 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः। समनुकम्प्य अनुगृह्य अलकानवमाम्

अलकानगरात् अन्यूनां पुरिमयोध्यां प्रति महार्णवानां रोधसः पर्य्यन्ता निववृते। शरणागतवत्सल इति भावः॥

১৪। রাজা দশরথ কর্ত্তৃক যে সকল মহীপতি নিহত হইয়াছিল, তাহাদের অ সংস্কারশূন্য মহিলারা সচিবগণসমভিব্যাহারে স্ব স্ব শিশুসন্তানদিগকে তাঁহার নি প্রেরণ করিল, বালকেরা আসিয়া অমাত্যগণের আদেশানুসারে বদ্ধাঞ্জলি হইয়া দশরথের নিকট দণ্ডায়মান হইলে তিনি তাহাদের প্রতি নিরতিশয় অনুকম্পাপ্রদ পূর্ব্বক সেই সাগরের উপকূল হইতে কুবেরনগরীসদৃশ অযোধ্যায় প্রত্যাগমন করিলে

**उपगतोऽपि च मण्डलनाभितामनुदितान्यसितातपवार श्रियमवेक्ष्य स रन्ध्रचलामभूदनलसोऽनलसोमसमद्युतिः॥**

१५ अः। अनुदितान्यसितातपवारणः अनलसोमसमद्युतिः सः मण्डलनाभितां च उपगतो श्रियम् अवेक्ष्य अनलसः अभूत्॥

१५। अनुदितमनुच्छ्रितमन्यत् स्वच्छत्रातिरिक्तं सितातपवार श्वेतच्छत्रं यस्य सः। अनलसोमयोरग्निचन्द्रयोः समे द्युती तेजःकान्ति यस्य स तथोक्तः। श्रियं लक्ष्मीं रन्ध्रे ऽन्यायालस्यादिरूपे छले चलां चञ्च मवेक्ष्य अवलोक्य। श्रीर्हि केनचिन्मिषेण पुमांसं परिहरति। स दशर मण्डलस्य नाभितां द्वादशराजमण्डलस्य प्रधानमहीपतित्वमुपगतो चक्रवर्त्ती सन्नपीत्यर्थः। 'अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारि रथचक्रस्य मध्यस्थपिण्डिकायां च ना पुनः॥ आद्यक्षत्रियभेदे तु म मुख्यमहीपतौ॥' इति केशवः। अनलसोऽप्रमत्तोऽभूत्। 'अजितम नृपास्पदम्' इति पाठान्तरे'अजितं नृपास्पदमस्तीति बुद्ध्या अनलसोऽप्रमत्तो ऽभूत्। विजितनिखिलजेतव्योऽपि पुनर्जेतव्यान्तरवानिव जागरूक ए वतिष्ठते इत्यर्थः। द्वादशराजमण्डलं तु कामन्दकेनोक्तम्—'अरिर्मित्र मरेर्मित्रं मित्रमित्रमतःपरम्। तथारिमित्रमित्रं च विजिगीषोः पु सराः॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम्। आसारावनयो विजिगीषोस्तु पृष्ठतः॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः। अ ग्रहे संहतयोः समर्थो व्यस्तयोर्बधे॥ मण्डलाद्वहिरेतेषामुदासीनो बल धिकः। अनुग्रहे संहतानां व्यस्तानां च बधे प्रभुः॥' इति। अरि मित्रादयः पञ्च, विजिगीषोः पुरःसराः पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहा साराक्रन्दासारा इति पृष्ठतश्चत्वारः, मध्यमोदासीनौ द्वौ, विजि गीषुरेकः, इत्येवं द्वादशराजमण्डलम्। तत्रोदासीनमध्यमोत्तरश्चक्रवर्त्ती दशरथश्चैतादृगिति तात्पर्य्यार्थः॥

১৫। এইরূপে অনলতুল্য তেজস্বী চন্দ্রসদৃশ প্রিয়দর্শন সেই রাজা দশরথ পৃথিবীতে একচ্ছত্রা করিলেন এবং স্বয়ং চক্রবর্ত্তী হইয়াও ভগবতী কমলাকে দুর্নীতি প্রভৃতি উপদ্রব বশতঃ চঞ্চলা দেখিয়া এককালে নিরলস হইলেন।

**तमपहाय ककुत्स्थकुलोद्भवं पुरुषमात्मभवञ्च पतिव्रता ।**
**नृपतिमन्यमसेवत देवता सकमला कमलाघवमर्थिषु ॥ १६**

१६ अ:। पतिव्रता सकमला देवता अर्थिषु अलाघवं ककुत्स्थकुलोद्भवं तम् आत्मभवं पुरुषम् अपहाय अन्यं कं नृपतिम् असेवत ॥

१६। पत्यौ व्रतं नियमो यस्याः सा पतिव्रता सकमला कमलहस्ता देवता लक्ष्मीः अर्थिषु विषयेऽलाघवं लघुत्वरहितम्, अपराङ्मुखमित्यर्थः । ककुत्स्थकुलोद्भवं तं दशरथमात्मभवं पुरुषं विष्णुं च अपहाय त्यक्त्वा । अन्यं कं नृपतिमसेवत, कमपि नासेवत इत्यर्थः । विष्णाविव विष्णुतुल्ये तस्मिन्नपि श्रीः स्थिराभूदित्यर्थः ॥

১৬। পদ্মহস্তা পতিব্রতা দেবী লক্ষ্মী যেরূপ বিষ্ণুকে পরিত্যাগ করেন না, তদ্রূপ রাজলক্ষ্মীও সেই ককুৎস্থকুলোদ্ভব বিষয়ে অপরাঙ্মুখ বদান্য দশরথকে পরিত্যাগ করিয়া অন্য ভূপতির ভজনা করিলেন না।

**तमलभन्त पतिं पतिदेवताः**
**शिखरिणामिव सागरमापगाः ।**
**मगधकोशलकेकयशासिनां**
**दुहितरोऽहितरोपितमार्गणम् ॥ १७**

१७ अ:। पतिदेवताः मगधकोशलकेकयशासिनां दुहितरः अहितरोपितमार्गणं तं शिखरिणां दुहितरः आपगाः सागरमिव पतिम् अलभन्त ॥

१७। पतिरेव देवता यासां ताः पतिदेवताः पतिव्रताः । मगधाश्च कोशलाश्च केकयाश्च तान् जनपदान् शासतीति तच्छासिनः तेषां राज्ञां दुहितरः पुत्र्यः सुमित्राकौशल्याकैकेय्य इत्यर्थः । अत्र क्रमो न विवक्षितः । अहितरोपितमार्गणं शत्रुनिखातशरं 'कदम्बमार्गणशराः' इत्यमरः । तं दशरथं शिखरिणां क्ष्माभृतां दुहितरः । आ समन्तादपगच्छन्तीति । अथवा । 'आपेन अप्सम्बन्धिना वेगेन गच्छन्तीत्यापगाः' इति क्षीरस्वामी । नद्यः सागरमिव पतिं भर्त्तारमलभन्त प्रापुः ॥

১৭। নদীনিচয় যেরূপ জলনিধিকে আশ্রয় করে, তদ্রূপ মগধ, কোশল ও কেকয়-

দেশীয় পতিপরায়ণা রাজনন্দিনী সুমিত্রা, কৌশল্যা ও কেকয়ী—শত্রুবিনাশক্ষম রাজ-সম্পন্ন রাজা দশরথকে পতিপ্রাপ্ত হইলেন।

प्रियतमाभिरसौ तिसृभिर्बभौ
तिसृभिरेव भुवं सह शक्तिभिः ।
उपगतो विनिनीषुरिव प्रजा
हरिहयोऽरिहयोगविचक्षणः ॥ १८

१८ अ: । अरिहयोगविचक्षणः असौ दशरथः तिसृभिः प्रियतमाभिः सह प्रजाः विनिनी[षुः] तिसृभिः शक्तिभिः भुवम् उपगतः हरिहयः इन्द्र इव बभौ ॥

१८। अरीन् घ्नन्तीत्यरिहणो रिपुघ्नाः। हन्तेः क्विप्। 'ब्रह्मभ्रूण-वृत्रेषु क्विप्' इति नियमस्य प्रायिकत्वात्। तथाह न्यासकारः—'प्रायिक-श्चायं नियमः। क्वचिदन्यस्मिन्नप्युपपदे दृश्यते।' मधुहा। 'प्रायिकत्वं च वक्ष्यमाणस्य बहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते' इति। तेषु योगेषु उपायेषु विचक्षणः दक्षः 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। इन्द्रेऽपि योज्यमेतत्। असौ दशरथस्तिसृभिः प्रियतमाभिः सह। प्रजा विनिनीषुर्विनेतुमिच्छुस्तिसृभिः शक्तिभिः प्रभुमन्त्रोत्साहशक्तिभिरेव सह भुवमुपगतो हरिहय इन्द्र इव बभौ ॥

১৮। শত্রুবিনাশপটু রাজা দশরথ সেই সহধর্ম্মিণীত্রয়কে লাভ করিয়া নিরতিশয় শোভিত হইলেন। তখন মনে হইল যেন ত্রিদশপতি প্রজাপালননিমিত্ত উৎসাহ প্রভৃতি শক্তিত্রয় সমন্বিত হইয়া ভূতলে অবতীর্ণ হইলেন।

स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः।
स्वभुजवीर्य्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः ॥ १९

१९ अ: । महारथः सः संयुगमूर्ध्नि मघवतः सहायतां प्रतिपद्य शरैः अवधूतभयाः सुरवधूः उच्छ्रितं स्वभुजवीर्य्यम् अगापयत् किल ॥

१९। महारथः स दशरथः संयुगमूर्ध्नि। रणाङ्गने मघवत इन्द्रस्य सहायतां प्रतिपद्य प्राप्य शरैरवधूतभया निवर्त्तितत्रासाः सुरवधूः उच्छ्रितं स्वभुजवीर्य्यम् अगापयत्. किल खलु। गायतेः शब्दकर्मत्वात् 'गतिबुद्धि-' इत्यादिना सुरवधूनामपि कर्मत्वम् ॥

১৯। অনন্তর মহারথ রাজা দশরথ সমরক্ষেত্রে সুররাজের সহায়তা করিয়া শর-নিকরদ্বারা সুরবধূদিগের ভয় দূর করিলে তাঁহারা উচ্চকণ্ঠে তদীয় ভুজবীর্য্য কীর্ত্তন করিয়াছিলেন।

क्रतुषु तेन विसर्जितमौलिना भुजसमाहृतदिग्वसुना कृताः।
कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसासरयूतटाः ॥२०

अजिनदण्डभृतं कुशमेखलां यतगिरं मृगशृङ्गपरिग्रहाम्।
अधिवसंस्तनुमध्वरदीक्षितामसमभासमभासयदीश्वरः ॥ २१

२०—२१ अ:। क्रतुषु विसर्जितमौलिना भुजसमाहितदिग्वसुना वितमसा तेन तमसासरयूतटाः कनकयूपसमुच्छ्रयशोभिनः कृताः ॥ ईश्वरः अजिनदण्डभृतं कुशमेखलां यतगिरं मृगशृङ्गपरिग्रहाम् अध्वरदीक्षितां तनुम् ( दाशरथीम् ) अधिवसन्, असमभासम्, अभासयत् ॥

२०—२१। क्रतुषु अश्वमेधेषु विसर्जितमौलिना अवरोपितकिरीटेन। 'दीक्षितस्तन्नमध्वर्य्युरेव राजा भवति' इति राज्ञश्चिह्नत्यागविधानादित्यभिप्रायः 'मौलिः किरीटे धम्मिल्ले' इति विश्वः। भुजसमाहृतदिग्वसुना भुजार्जित-दिगन्तसम्पदा। अनेन क्षत्रियस्य विजितत्वमुक्तं नियमार्जितधनत्वं सद्-विनियोगकारित्वञ्च सूच्यते। वितमसा तमोगुणरहितेन तेन दशरथेन। तमसा च सरयूश्च नद्यौ। तयोस्तटा कनकयूपानां समुच्छ्रयेण समुन्नमनेन शोभिनः कृताः। कनकमयत्वञ्च यूपानां शोभार्थं विध्यभावात्। 'हेम-यूपस्तु शोभिकः' इति यादवः॥ ईश्वरो भगवानष्टमूर्त्तिरजितं कृष्णाजिनं दण्डमौदुम्बरं बिभर्त्तीति तामजिनदण्डभृतम्। 'कृष्णाजिनं दीक्षयति। औडुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति' इति वचनात्। कुशमयी मेखला यस्यास्तां कुशमेखलां शरमयी मौञ्जी वा मेखला। तया यज-मानं दीक्षयतीति विधानात्। प्रकृते कुशग्रहणं क्वचित्प्रतिनिधिदर्शनात् कृतम्। यतगिरं वाचंयमाम्। 'वाचं यच्छति' इति श्रुतिः। मृगशृङ्गं परिग्रहः कण्डूयनसाधनं यस्यास्ताम्। 'कृष्णविषाणया कण्डूयते' इति श्रुतिः। अध्वरदीक्षितां संस्कारविशेषयुक्तां तनुं दाशरथीमधिवसन्नधि-तिष्ठन् सन्। असमा भासो दीप्तयो यस्मिन् कर्मणि तद्यथा तथा। अभासयद्भासयति स्म ॥

२०—२১। তমোগুণরহিত সেই রাজা, ভুজবীর্য্যপ্রভাবে দিগ্দিগন্ত হইতে ধন আহরণ করিয়া অশ্বমেধযজ্ঞের অনুষ্ঠান করিলেন। তদীয় অত্যুচ্চ কনকময় যজ্ঞীয় যূপে তমসা ও সরযূর তট উপশোভিত হইল। তিনি যজ্ঞদীক্ষিত হইয়া যথাবিধি কিরীট উন্মোচন ও মৌনাবলম্বনপূর্ব্বক কৃষ্ণসারচর্ম্ম, উডুম্বর দণ্ড, কুশময়ী মেখলা ও মৃগশৃঙ্গ ধারণ করিলেন। ভগবান্ চন্দ্রমৌলি সেই যজ্ঞে দশরথের শরীরে অধিষ্ঠিত হইয়া দশরথের সাতিশয় শোভাবর্দ্ধন করিলেন।

अवभृथप्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः।
नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये शिरः॥ २२

२२ अ:। अवभृथप्रयतः नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः सः उन्नतं शिरः वनमुचे नमुचेः अरये केवलं नमयति स्म॥

२२। अवभृथेन प्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः देवसभाधिष्ठानार्हः स दशरथ उन्नतं शिरो वनमुचे जलवर्षिणे। 'जीवनं वनं सत्त्वम्' इति शाश्वतः। नमुचेररये केवलमिन्द्रायैव नमयति स्म। न कस्मैचिदन्यस्मै मानुषायेत्यर्थः॥

२२। यज्ञान्तস্নানে বিশুদ্ধদেহ নিয়তেন্দ্রিয় দেবসভায় উপবেশনের যোগ্য সেই রাজা দশরথ, কেবল সলিলবর্ষী নমুচিসূদন ইন্দ্রের নিকটেই স্বীয় উন্নতমস্তক অবনত করিতেন।

असकृदेकरथेन तरस्विना
हरिहयाग्रसरेण धनुर्भृता।
दिनकराभिमुखा रणरेणवो
रुरुधिरे रुधिरेण सुरद्विषाम्॥ २३

२३ अ:। एकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता दिनकराभिमुखाः रणरेणवः सुरद्विषां रुधिरेण असकृत् रुरुधिरे॥

२३। एकरथेनाद्वितीयरथेन तरस्विना बलवता हरिहयस्येन्द्रस्याग्रसरेण धनुर्भृता दशरथेन असकृद्बहुशो दिनकरस्याभिमुखाः अभिमुखं स्थिता इत्यर्थः। रणरेणवः सुरद्विषां दैत्यानां रुधिरेण रुरुधिरे निवारिताः॥

২৩। রথিশ্রেষ্ঠ মহাবলপরাক্রম শরাসনধারী রাজা যুদ্ধে সুররাজের অগ্রবর্ত্তী হইয়া অসুরগণের রুধিরপ্রবাহে উড্ডীন যুদ্ধস্থলের ধূলিজাল বহুবার নিবারিত করিয়াছিলেন।

अथ समावव्रते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम्।
यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम्॥ २४

२४ अ:। अथ मधुः यमकुबेरजलेश्वरवज्रिणां समधुरम् अञ्चितविक्रमम् एकनराधिपं तं सेवितुम् इव नवैः कुसुमैः (उपलक्षितः सन्) समाववृते॥

२४। अथ यमकुबेरजलेश्वरवज्रिणां धर्मराजधनदवरुणामरेन्द्राणां समा धूर्भारो यस्य स समधुरः। माध्यस्थ्यवितरणसंनियमनैश्वर्य्यैस्तुल्यकक्ष

र्थः । 'ऋक्पूर्'—इत्यादिना समासान्तोऽच्प्रत्ययः । तं समधुरम् । ...र्जितविक्रमं पूजितपराक्रममेकनराधिपं तं दशरथं सेवितुमिव मधु-...न्तः । 'अथ पुष्परसे मधु । दैत्ये चैत्रे वसन्ते च मधुः' इति विश्वः । ...वैः कुसुमैरुपलक्षितः सन् समावव्रते समागतः । 'रिक्तहस्तेन नोपेयात् राजानं देवतां गुरुम्' इति वचनात् पुष्पसमेतो राजानं सेवितुमागत इत्यर्थः ॥

২৪। অনন্তর বসন্ত—মাধ্যস্থ, দান, নিয়মন ঐশ্বর্য্য প্রভৃতিতে ধর্ম্মরাজ, কুবের, ...ও দেবরাজের সমকক্ষ পূজিতপরাক্রম সম্রাট্ দশরথকে শুশ্রূষা করিবার জন্যই ...অভিনব কুসুমসমূহ বিকসিত করিয়া আবির্ভূত হইল।

जिगमिषुर्धनदाध्युषितां दिशं
रथयुजा परिवर्त्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहै-
र्विमलयन् मलयन्नगमत्यजत् ॥ २५

२५ अः । धनदाध्युषितां दिशं जिगमिषुः रथयुजा परिवर्त्तितवाहनः रविः हिमनिग्रहैः दिनमुखानि विमलयन् ( सन् ) मलयं नगम् अत्यजत् ॥

२५ । धनदाध्युषितां कुवेराधिष्ठितां दिशं जिगमिषुर्गन्तुमिच्छुः । रथयुजा सारथिना अरुणेन परिवर्त्तितवाहनो निवर्त्तिताश्वो रविः । हिमस्य निग्रहैर्निराकरणैर्दिनमुखानि प्रभातानि विमलयन् विशदयन् । मलयं नगं मलयाचलम् अत्यजत् । दक्षिणां दिशमत्याक्षीदित्यर्थः ॥

২৫। দিনকর উত্তরদিগ্গমনেচ্ছু হইয়া সারথি অরুণের সাহায্যে রথাশ্ব পরিবর্ত্তিত করিয়া মলয়শৈল পরিত্যাগ করিলেন, তৎকালে তুষারজাল নিরাকৃত হওয়ায় প্রভাত-কাল সুনির্ম্মল হইল।

कुसुमजन्म ततो नवपल्लवा-
स्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधु-
र्द्रुमवतीमवतीर्य्य वनस्थलीम् ॥ २६

२६ अः । ( आदौ ) कुसुमजन्म, ततः नवपल्लवाः, तदनु षट्पदकोकिलकूजितम् इति यथाक्रमं द्रुमवतीं वनस्थलीम् अवतीर्य्य मधुः आविरभूत ॥

२६ । आदौ कुसुमजन्म । ततो नवपल्लवाः । तदनु । 'अनुर्लक्षणे'

इति कर्मप्रवचनीयत्वात् द्वितीया। यथासंख्यं तदुभयानन्तरं षट्पदानां कोकिलानाञ्च कूजितम्। इत्येवम्प्रकारेण यथाक्रमं क्रममनतिक्रम्य द्रुमवतीं द्रुमभूयिष्ठां वनस्थलीमवतीर्य्य मधुर्वसन्त आविरभूत्। केषाञ्चिद् द्रुमाणां पल्लवप्रायस्यात् केषाञ्चित् कुसुमप्रायस्यात्नोक्तक्रमस्य दृष्टिविरोधः॥

২৬। প্রথমে কুসুমসকল বিকসিত, তারপর নবপল্লবদল বিনির্গত, তদন্ত অলিসকল ও কোকিলকুলের কূজন হইতে লাগিল। এইরূপে পাদপদলবহুল স্থলীতে বসন্ত অবতীর্ণ হইয়া পর্য্যায়ক্রমে নিজ চিহ্ন প্রকাশ করিতে লাগিল।

नयगुणोपचितामिव भूपतेः
सदुपकारफलां श्रियमर्थिनः।
अभिययुः सरसो मधुसम्भृतां
कमलिनीमलिनीरपतत्त्रिणः॥ २७

२७ अ:। नयगुणोपचितां सदुपकारफलां भूपतेः श्रियम् अर्थिनः इव मधुसम्भृतां सरसः क-लिनीम् अलिनीरपतत्त्रिणः अभिययुः॥

२७। नयो नीतिरेव गुणः, तेन। अथवा नयेन गुणैः शौर्य्यादिभि उपचिताम्। सतामुपकारः फलं यस्यास्तां सदुपकारफलां भूपतेर्दशरथस्य श्रियमर्थिन इव। मधुना वसन्तेन सम्भृतां सम्यक् पुष्टां सरसः सम्बन्धिनीं कमलिनीं पद्मिनीम् अलिनीरपतत्त्रिणः। अलयो भृङ्गाः। नीरपतत्त्रिणो जलपतत्त्रिणो हंसादयश्च। अभिययुः॥

২৭। তখন অর্থিজন যেমন রাজা দশরথের নীতিগুণ-পরিবর্দ্ধিত পরোপকারক সম্পদকে প্রাপ্ত হইতে থাকিল, তদ্রূপ মধুকর, হংস ও সারসপ্রভৃতি জলচর বিহঙ্গগণ বসন্তপ্রতিপালিতা কমলিনীকে লাভ করিল।

कुसुममेव न केवलमार्त्तवं
नवमशोकतरोः स्मरदीपनम्।
किसलयप्रसवोऽपि विलासिनां
मदयिता दयिताश्रवणार्पितः॥ २८

२८ अ:। आर्त्तवं नवम् अशोकतरोः केवलं कुसुमम् एव स्मरदीपनं न, विलासिनां मदयिता दयिताश्रवणार्पितः किसलयप्रसवः अपि (स्मरदीपनः) (अभूत्)॥

२८। ऋतुरस्य प्राप्त आर्त्तवम्। 'ऋतोरण्' इत्यण्। नवं प्रत्यग्रम् अशोकतरोः केवलं कुसुममेव स्मरदीपनमुद्दीपनं न। किन्तु विलासिनां

दयिता मदजनकी दयिताश्रवणार्पितः किसलयप्रसवोऽपि पल्लवसन्तानो-
ऽपि स्मरदीपनोऽभवत् ॥

२८। কেবল বসন্তকালসমুৎপন্ন অশোক কুসুমই যে লোকের কামোদ্দীপক হইল
এমন নহে, উহার নব পল্লবও রমণীগণের কর্ণযুগলের অলঙ্কাররূপে অর্পিত হইয়া
কামীদিগকে একান্ত উন্মত্ত করিয়া তুলিল।

**विरचिता मधुनोपवनश्रिया-**
**मभिनवा इव पत्रविशेषकाः।**
**मधुलिहां मधुदानविशारदाः**
**कुरवका रवकारणतां ययुः ॥ २९**

२९ अ०। मधुना विरचिता उपवनश्रियाम् अभिनवाः पत्रविशेषकाः इव (स्थिताः) मधुदान-
विशारदाः कुरवकाः मधुलिहां रवकारणतां ययुः ॥

२९। मधुना वसन्तेन विरचिता उपवनश्रियामभिनवाः। पत्र-
विशेषकाः पत्ररचना इव स्थिता मधूनां मकरन्दानां दाने विशारदाश्चतुराः
कुरवकास्तरवो मधुलिहां मधुपानां रवकारणतां ययुः। भृङ्गाः कुरवकाणां
मधूनि पीत्वा जगुरित्यर्थः। दानशीलानर्थिजनाः स्तुवन्तीति भावः॥

২৯। কুরবক কুসুম বিকসিত হইতে থাকিলে বোধ হইল—যেন বসন্তই উপবন
লক্ষ্মীর নূতন পত্র রচনা করিয়া দিয়াছে। তৎকালে ঐ মধুদানবিশারদ কুরবকের
মধুপান করিয়াই মধুকরেরা গুন্ গুন্ রবে গান করিতে প্রবৃত্ত হইল।

**सुवदनावदनासवसम्भृतस्तदनुवादिगुणः कुसुमोद्गमः।**
**मधुकरैरकरोन्मधुलोलुपैर्बकुलमाकुलमायतपङ्क्तिभिः ॥ ३०**

३० अ०। सुवदनावदनासवसम्भृतः तदनुवादिगुणः कुसुमोद्गमः मधुलोलुपैः आयतपङ्क्तिभिः
मधुकरैः बकुलम् आकुलम् अकरोत् ॥

३०। सुवदनावदनासवेन कान्तामुखमद्येन सम्भृतो जनितः।
तत्तस्य दोहदमिति प्रसिद्धिः तस्यासवस्यानुवादी सदृशो गुणो यस्य तदनु-
वादिगुणः कुसुमोद्गमः कर्त्ता। मधुलोलुपैरायतपङ्क्तिभिर्दीर्घपङ्क्तिभिः
मधुकरैर्मधुपैः करणैः। बकुलं बकुलवृक्षमाकुलमकरोत् ॥

৩০। কামিনীকুলের মুখমদ্যে বকুল কুসুম বিকসিত হইলে সেই কুসুমগন্ধ আসব-
গন্ধের অনুকরণ করিল। তখন মধুপানলোলুপ মধুকরেরা সুদীর্ঘ শ্রেণীবদ্ধ হইয়া
বকুলবৃক্ষকে নিতান্ত আকুল করিয়া তুলিল।

उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके ।
प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया ॥ ३१

३१ अ: । शिशिरापगमश्रिया किंशुके उपहितं मुकुलजालं मदयापितलज्जया प्रमदया प्रणयिनि (उपहितं) नखक्षतमण्डनम् इव अशोभत ॥

३१ । शिशिरापगमश्रिया वसन्तलक्ष्म्या किंशुके पलाशवृक्षे 'पलाशः किंशुकः पर्णः' इत्यमरः । उपहितं दत्तं मुकुलजालं कुड्मलसंहतिः । मदेन यापितलज्जया अपसारितत्रपया प्रमदया प्रणयिनि प्रियतमे उपहितं नखक्षतमेव मण्डनं तदिव । अशोभत ॥

৩১। মধুপানে মত্তা ও লজ্জাহীনা কামিনী কর্তৃক প্রদত্ত প্রণয়ি-শরীরে নখক্ষতের ন্যায় বসন্তলক্ষ্মী কর্তৃক কিংশুকবৃক্ষে সমর্পিত কুসুমসমূহ শোভিত হইতে লাগিল।

व्रणगुरुप्रमदाधरदुःसहं
जघननिर्विषयीकृतमेखलम् ।
न खलु तावदशेषमपोहितुं
रविरलं विरलं कृतवान् हिमम् ॥ ३२

३१ अ: । रविः व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलं हिमं तावत् अशेषम् अपोहितुं न अलं (किन्तु) विरलं कृतवान् ॥

३२ । व्रणैर्दन्तक्षतैर्गुरुभिः प्रमदानामधरैरधरोष्ठैर्दुःसहं हिमस्य व्यथाकरत्वादसह्यम् । जघनेषु निर्विषयीकृता निरवकाशीकृता मेखला येन तत् । शैत्यात्त्याजितमेखलमित्यर्थः । एवम्भूतं हिमं रविस्तावत् वसन्तादशेषं निःशेषं यथा तथा अपोहितुं निरसितुं नालं खलु न शक्तो हि । किन्तु विरलं कृतवांस्तनूचकार ॥

৩২। প্রিয়দশনক্ষত অধরোষ্ঠে প্রমদাগণের যে হিম অসহ্য হইয়া উঠিয়াছিল এবং যে হিমপ্রভাবে প্রমদাগণ নিতম্বদেশে মেখলা ধারণ করিতে পারিত না, এক্ষণে দিনকর নিঃশেষরূপে সেই তুষারনিকর নিরাস করিতে না পারিলেও একান্ত বিরল করিয়া দিলেন।

अभिनयान् परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा ।
अमदयत् सहकारलता मनः
सकलिका कलिकामजितामपि ॥ ३३

३३ अ:। अभिनयान् परिचेतुम् उद्यता इव (स्थिता) मलयमारुतकम्पितपल्लवा सकलिका सहकारलता कलिकामजिताम् अपि मनः अमदयत् ॥

३३। अत्र चूतलतायां नर्त्तकीसमाधिरभिधीयते। अभिनयानर्थव्यञ्जकान् व्यापारान् 'व्यञ्जकाभिनयौ समौ' इत्यमरः। परिचेतुमभ्यसितुमुद्यतेव स्थिता। कुतः, मलयमारुतेन कम्पितपल्लवा। पल्लवशब्देन पाणी गम्यते। सकलिका सकोरका। 'कलिका कोरकः पुमान्' इत्यमरः। सहकारलता। कलिः कलहो द्वेष उच्यते। 'कलिः स्यात्कलहे शूरे कलिरन्त्ययुगे युधि' इति विश्वः। कामो रागः, तज्जितामपि जितरागद्वेषाणामपीत्यर्थः। मनः अमदयत् ॥

৩৩। মুকুলমালা সুশোভিত সহকারলতা মলয়মারুতপ্রভাবে পল্লবদল কম্পিত করিয়া যেন অভিনয় অভ্যাসচ্ছলে রাগদ্বেষহীন ব্যক্তিগণের মন উন্মত্ত করিয়া তুলিল।

प्रथममन्यभृताभिरुदीरिताः
प्रविरला इव मुग्धवधूकथाः
सुरभिगन्धिषु शुश्रुविरे गिरः
कुसुमितासु मिता वनराजिषु ॥ ३४

३४ अ:। सुरभिगन्धिषु कुसुमितासु वनराजिषु अन्यभृताभिः प्रथमम् उदीरिताः मिताः गिरः प्रविरलाः मुग्धवधूकथाः इव शुश्रुविरे ॥

३४। सुरभिर्गन्धो यासां तासु सुरभिगन्धिषु। 'गन्धस्य'—इत्यादिनेकारः। कुसुमानि आसां सञ्जातानि कुसुमिताः। तासु वनराजिषु वनपङ्क्तिषु। अन्यभृताभिः कोकिलाभिः प्रथमं प्रारम्भेषु उदीरिता उक्ता अतएव मिताः परिमिता गिर आलापाः। प्रविरला मौग्ध्यात् स्तोकोक्ता मुग्धवधूनां कथा वाच इव। शुश्रुविरे श्रुता इति भावः ॥

৩৪। কুসুমসমূহ বিকসিত হইলে সৌরভে বনরাজি আমোদিত হইল; তখন মুগ্ধবধূর বিরলবাক্যের ন্যায় কোকিলালাপ শ্রুতিগোচর হইতে লাগিল।

श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो बभुः।
उपवनान्तलताः पवनाहतैः
किसलयैः सलयैरिव पाणिभिः ॥ ३५

३५ अः । श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचः उपवनान्तलताः पवनाहतैः कि[सलयैः] सलयैः पाणिभिः इव बभुः ॥

३५ । श्रुतिसुखाः कर्णमधुरा भ्रमरस्वना एव गीतयो यासां ताः । कुसुमान्येव कोमला दन्तरुचो दन्तकान्तयो यासां ताः । अनेन सन्नि[धानं] विवक्षितम् उपवनान्तलताः पवनेनाहतैः कम्पितैः किसलयैः स[ल]साभिनयैः । लयशब्देन लयानुगतोऽभिनयो लक्ष्यते उपवनान्ते पवनाह[तै]रिति सक्रियत्वाभिधानात् । पाणिभिरिव बभुः । अनेन लतानां नर्त[की]साम्यं गम्यते ॥

৩৫। উপবনস্থ লতাসকলের কিসলয়দল পবনহিল্লোলে বিচলিত হইয়া নর্ত[কী]গণের লয়যুক্ত হস্তের ন্যায় সুশোভিত হইল; কুসুমসকল তাহাদের কোমল দ[ন্তের] ন্যায় এবং মধুকরনিকরের শ্রুতিসুখকর ঝঙ্কারশব্দ সঙ্গীতের ন্যায় অনুমিত হই[তে] লাগিল।

ललितविभ्रमबन्धविचक्षणं
सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः
स्मरसखं रसखण्डनवर्जितम् ॥ ३६

३६ अः । अङ्गनाः ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरं स्मरसखं मधुं प[तिषु] रसखण्डनवर्जितं निर्विविशुः ॥

३६ । अङ्गना ललितविभ्रमबन्धविचक्षणं मधुरविलासघटनापटु[ं] सुरभिणा मनोहरेण गन्धेन पराजितकेसरं निर्जितवकुलपुष्पम् । 'अथ केसरे वकुलः' इत्यमरः । स्मरस्य सखायं स्मरसखम् । स्मरोद्दीपक[म्] इत्यर्थः । मधुं मद्यम् । 'अर्धर्चाः पुंसि च' इति पुंलिङ्गता । उक्तञ्च— 'मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात् पुं[न]पुंसकयोर्मधुः ॥' इति पतिषु विषये रसखण्डनवर्जितमनुरागभङ्गरहि[तं] यथा तथा निर्विविशुः । परस्परानुरागपूर्वकं पतिभिः सह पपुरित्यर्थः ॥

৩৬। রমণীগণ মনোহর হাবভাববর্দ্ধক এবং অনঙ্গোদ্দীপনের প্রধান সহায় [মধু] স্ব স্ব প্রিয়তমের সহিত অনুরাগভরে পান করিতে লাগিল। ঐ মদ্যের মনোহর গ[ন্ধে] বকুলকুসুমের গন্ধ নির্জ্জিত হইয়া গেল।

शुशुभिरे स्मितचारुतराननाः
स्त्रिय इव श्लथशिञ्जितमेखलाः ।

विकचतामरसा गृहदीर्घिका
मदकलोदकलोलविहङ्गमाः ॥ ३७

३७ अ:। विकचतामरसाः मदकलोदकलोलविहङ्गमाः गृहदीर्घिकाः स्मितचारुतराननाः श्लथशिञ्जितमेखलाः स्त्रिय इव शुशुभिरे ॥

३७। विकचतामरसा विकसितकमलाः। मदेन कला अव्यक्तमधुरं यत्तत् उदकलोलविहङ्गमा जलप्रियपक्षिणो हंसादयो यासु ता मदकलोदकलोलविहङ्गमा गृहेषु दीर्घिका वाप्यः। स्मितेन चारुतराण्याननानि यासां ताः। श्लथाः शिञ्जिता मुखरा मेखला यासां ताः। शिञ्जितेति कर्त्तरि क्तः। स्त्रिय इव। शुशुभिरे ॥

३७। গৃহদীর্ঘিকা সকল বিকসিত কমলদলে সুশোভিত হইল, হংস সারসসমূহ জলপক্ষিগণ অব্যক্ত মধুর স্বর সহকারে উহার নীরে বিহার করিতে লাগিল; তৎকালে দীর্ঘিকা সকল যেন শিথিলশব্দায়মান মেখলাদামে বিভূষিত স্মিতাননা রমণীগণের ন্যায় রমণীয় হইয়া উঠিল।

उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः।
सदृशमिष्टसमागमनिर्वृतिं वनितयानितया रजनीवधूः ॥३८

३८ अ:। मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः रजनीवधूः इति समागमनिर्वृतिम् अनितया वनितया सदृशं तनुताम् उपययौ ॥

३८। मधुना मधुसमयेन खण्डिता ह्रासं गमिता। क्षीयन्ते खलु उत्तरायणे रात्रयः। खण्डिताख्या नायिका च ध्वन्यते। हिमकरोदयेन चन्द्रोदयेन पाण्डुर्मुखस्य प्रदोषस्य वक्त्रस्य च छविर्यस्याः सा रजन्येव वधूः, इष्टसमागमनिर्वृतिं प्रियसङ्गमसुखमनितया अप्राप्तया। 'इण् गतौ' इति धातोः कर्त्तरि क्तः। वनितया सदृशं तुल्यं तनुतां न्यूनतां कार्श्यं चोपययौ ॥

৩৮। প্রিয়-সমাগমসুখে বঞ্চিত রমণীর ন্যায় বসন্তরজনীবধূ একান্ত কৃশা হইয়া গেল এবং শশধরের উদয়ে উহার মুখকান্তি পাণ্ডুবর্ণ ধারণ করিল।

अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः।
कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥ ३९

३९ अ:। हिमकरः अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः अंशुभिः मकरोर्जितकेतनं कुसुमचापम् अतेजयत् ॥

३९। हिमकरश्चन्द्रः। अपतुषारतया अपगतनीहारतया विशदप्रभैर्निर्मलकान्तिभिः सुरतसङ्गपरिश्रमनोदिभिः सुरतसङ्गखेदहारिभिः

अंशुभिः किरणैः। मकरोर्जितकेतनम्। मकरेणोर्जितं केतनं ध्वजो य
तम्। लब्धावकाशत्वादुच्छ्रितध्वजमित्यर्थः। कुसुमचापं कामम् अतेज-
यत् अशातयत्। 'तिज निशाने' इति धातोर्ण्यन्ताल्लङ्। सहकारि-
लाभात् कामोऽपि तीक्ष्णोऽभूदित्यर्थः॥

৩৯। হিমকর নীহারবিরহে নির্ম্মলকান্তি হইল এবং সুরতশ্রমাপনোদক কির
জাল বিস্তার করিয়া অনঙ্গের কুসুমশরকে উত্তেজিত করিয়া তুলিল।

**हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य य**
**युवतयः कुसुमं दधुराहितं तदलके दलकेशरपेशलम्॥ ४०**

४० अः। हुतहुताशनदीप्ति यत् कुसुमं वनश्रियः कनकाभरणस्य प्रतिनिधिः अभूत्, द
केशरेषु च पेशलम् आहितं यत् युवतयः अलके दधुः॥

४०। हुतहुताशनदीप्ति आज्यादिप्रज्वलिताग्निप्रभं यत् कुसुम
कर्णिकारमित्यर्थः। वनश्रिय उपवनलक्ष्म्याः कनकाभरणस्य प्रतिनिधि
अभूदिति शेषः। दलेषु केसरेषु च पेशलं सुकुमारपत्रं किञ्जल्कमित्यर्थः
आहितं, प्रियैरिति शेषः। तत्कुसुमं युवतयः अलके कुन्तले दधुः॥

৪০। কামিনীগণ উপবনলক্ষ্মীর স্বর্ণালঙ্কারের প্রতিনিধিরূপ, ঘৃতাহুতিপ্রজ্বলি
হুতাশনের ন্যায় উজ্জ্বল, কোমলদল ও কেশরসম্পন্ন প্রিয়তমপ্রদত্ত, সুকুমার, কর্ণিকা
কুসুম অলকে সন্নিবেশিত করিতে লাগিল।

**अलिभिरञ्जनविन्दुमनोहरैः**
**कुसुमपङ्क्तिनिपातिभिरङ्कितः।**
**न खलु शोभयति स्म वनस्थलीं**
**न तिलकस्तिलकः प्रमदामिव॥ ४१**

४१ अः। अञ्जनविन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिः अलिभिः अङ्कितः तिलकः वनस्थ
तिलकः प्रमदाम् इव न शोभयति स्म (इति) न॥

४१। अञ्जनविन्दुमनोहरैः कज्जलकणसुन्दरैः। कुसुमपङ्क्तिषु निप-
तन्ति ये तैः अलिभिरङ्कितश्चिह्नितस्तिलकः श्रीमान्नामवृक्षः। 'तिलकः
क्षुरकः श्रीमान्' इत्यमरः। वनस्थलीम्। तिलको विशेषकः। 'तमाल-
पत्रतिलकचित्रकाणि विशेषकम्। द्वितीयञ्च तुरीयञ्च न स्त्रियाम्' इत्य-
मरः। प्रमदामिव न शोभयति स्मेति न खलु अपि त्वशोभयदेवेत्यर्थः।
'लट् स्मे' इति स्मशब्दयोगात् भूतार्थे लट्॥

৪১। তিলকভূষণ অঙ্গনাগণকে যেরূপ সুশোভিত করে, তদ্রূপ অঞ্জনবিন্দুসুন্দর

ভ্রমরবৃন্দ তিলকবৃক্ষের পুষ্পের উপর উপবেশন করিয়া বনস্থলীর অধিকতর শোভা বর্দ্ধিত করিল।

**अमदयन्मधुगन्धसनाथया**
**किसलयाधरसङ्गतया मनः ।**
**कुसुमसम्भृतया नवमल्लिका**
**स्मितरुचा तरुचारुविलासिनी ॥ ४२**

४२ अ। तरुचारुविलासिनी नवमल्लिका मधुगन्धसनाथया किसलयाधरसङ्गतया कुसुमसम्भृतया स्मितरुचा मनः अमदयत् ॥

४२। तरुचारुविलासिनी तरोः पुंसश्च चारुविलासिनी नवमल्लिका नामाख्या लता। 'सप्तला नवमल्लिका' इत्यमरः। मधुनो मकरन्दस्य मद्यस्य च गन्धेन सनाथया गन्धप्रधानयेर्थः। किसलयमिवाधरस्तत्र सङ्गतया प्रसृतरागयेत्यर्थः। कुसुमैः सम्भृतया सम्पादितया कुसुमरूपयेत्यर्थः। स्मितरुचा हासकान्त्या मनः पश्यतामिति शेषः। अमदयत् ॥

४२। তরুগণের মনোহারিণী বিলাসিনী নবমল্লিকা মধুগন্ধামোদিত কুসুমসম্ভারে বিভূষিত হইয়া কিসলয়াধরে নিপতিত হাস্যকান্তিচ্ছটায় যেন পথিকগণের চিত্ত হরণ করিতে লাগিল।

**अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धपदैश्च यवाङ्कुरैः ।**
**परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥४३**

४३ अ। विलासिनः अरुणरागनिषेधिभिः अंशुकैः श्रवणलब्धपदैः यवाङ्कुरैश्च परभृताविरुतैः च स्मरबलैः अबलैकरसाः कृताः ॥

४३। विलासिनः विलसनशीलाः पुरुषाः। 'वौ कषलस'—इत्यादिना घिनुण् प्रत्ययः। अरुणस्यानूरोः रागमारुण्यं निषेधन्ति तिरस्कुर्वन्तीति अरुणरागनिषेधिनः तैः कुसुम्भादिरञ्जनात्तत्सदृशैरित्यर्थः। 'तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति। तस्येवानुकरोतीति शब्दाः सादृश्यवाचकाः॥' इति दण्डी। अंशुकैः अम्बरैः, श्रवणेषु कर्णेषु लब्धपदैः निवेशितैरित्यर्थः। यवाङ्कुरैश्च परभृताविरुतैः कोकिलाकूजितैश्च इत्येतैः स्मरबलैः कामसैन्यैः। अबलास्वेक एव रसो रागो येषां ते अबलैकरसाः स्त्रीपरतन्त्राः कृताः ॥

४३। অরুণরাগরঞ্জিত বসন, কর্ণার্পিত যবাঙ্কুর এবং কোকিলকুলের মধুরালাপ—এই সকল মন্মথসৈন্যে বিলাসীদিগের মন রমণীগণের একান্ত অধীন করিয়া তুলিল।

उपचितावयवा शुचिभिः कणै-
रलिकदम्बकयोगमुपेयुषी।
सदृशकान्तिरलक्ष्यत मञ्जरी
तिलकजालकजालकमौक्तिकैः॥ ४४

४४ अ:। शुचिभिः कणैः उपचितावयवा अलिकदम्बकयोगम् उपेयुषी तिलकजा मञ्जरी अलकजालकसदृशमौक्तिकैः सदृशकान्तिः अलक्ष्यत॥

४४। शुचिभिः शुभ्रैः कणैः रजोभिः उपचितावयवा पुष्टावयवा अलिकदम्बकयोगमुपेयुषी प्राप्ता तिलकजा तिलकवृक्षोत्था मञ्जरी अलकेषु यज्जालकमाभरणविशेषस्तस्मिन्मौक्तिकैः सदृशकान्तिः अलक्ष्यत। भृङ्गसङ्गिनी शुभ्रा तिलकमञ्जरी नीलालकसक्तमुक्ताजालमिव अलक्ष्यतेति वाक्यार्थः॥

४४। শুভ্রপরাগপরিপূর্ণ মধুকরসমাকীর্ণ তিলকমঞ্জরী—মহিলাকুলের অলকাগ্রে অলঙ্কারের মুক্তমালার ন্যায় শোভা পাইতে লাগিল।

ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः।
कुसुमकेशररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः॥ ४५

४५ अ:। अलिव्रजा धनुर्भृतः मदनस्य ध्वजपटम् ऋतुश्रियः छविकरं मुखचूर्णं सपवनं पवनोत्थितं रेणुम् अन्वयुः॥

४५। अलिव्रजाः षट्पदनिवहाः, धनुर्भृतो धानुष्कस्य मदनस्य कामस्य ध्वजपटं पताकाभूतम् ऋतुश्रियो वसन्तलक्ष्म्याश्छविकरं शोभाकरं मुखचूर्णं मुखालङ्कारचूर्णभूतं, सपवनोपवनोत्थितं सपवनं पवनेन सहितं यदुपवनं तस्मिन्नुत्थितम्। कुसुमानां केसरेषु किञ्जल्केषु यो रेणुस्तम्। अन्वयुः अन्वगच्छन्। यातेर्लङ्॥

৪৫। মধুকরগণ ধনুর্দ্ধর মদনের পতাকাস্বরূপ বসন্ত লক্ষ্মীর বদনশোভা-সম্পাদনকারী কুঙ্কুমাদিচূর্ণসদৃশ উপবন হইতে উত্থিত কুসুমরেণুর অনুসরণ করিল।

अनुभवन् नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया।
अनयदासनरज्जुपरिग्रहे भुजलतां जड़तामवलाजनः॥ ४६

४६ अ:। नवदोलम् ऋतूत्सवम् अनुभवन् अवलाजनः पटुः अपि प्रियकण्ठजिघृक्षया आसनरज्जुपरिग्रहे भुजलतां जड़ताम् अनयत्॥

४६। नवा दोला प्रेङ्खा यस्मिन् तं नवदोलमृतूत्सवं वसन्तोत्सवम्

...भवन् अबलाजनः पटुरपि निपुणोऽपि प्रियकण्ठस्य जिघृक्षया ग्रहीतु-... आलिङ्गितुमिच्छया आसनरज्जुपरिग्रहे पीठरज्जुग्रहणे भुजलतां बाहुलतां ...ड़तां शैथिल्यम्। डलयोरभेदः। अनयत्। दोलाक्रीड़ासु पतनभय-...नाटितकेन प्रियकण्ठमाश्लिष्यदित्यर्थः ॥

৪৬। অবলাগণ দোলারোহণনিপুণ হইলেও বসন্তরচিত দোলার আন্দোলনসুখ অনুভব সময়ে প্রিয়কণ্ঠালিঙ্গনে সমুৎসুক হইয়া দোলাসনের রজ্জুগ্রহণে বাহুলতা শিথিল করিয়াছিল।

त्यजत मानमलं वत विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥४७

४७ अ:। वत ! मानं त्यजत विग्रहैः अलं गतं चतुरं वयः पुनः न एति इति स्मरमते पर-...ताभिः निवेदिते (सति) इव वधूजनः रमते स्म ॥

४७। वतेत्यामन्त्रणे। 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे वत' इत्य-मरः। वत अङ्गनाः मानं कोपं त्यजत। तदुक्तं—'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इति। विग्रहैर्विरोधैरलम्। विग्रहो न कार्य इत्यर्थः। गतमतीतं चतुरमुपभोगक्षमं वयो यौवनं पुनर्नैति न आगच्छति इत्येवंरूपे स्मरमते स्मराभिप्राये। नपुंसके भावे क्तः। पर-भृताभिः कोकिलाभिर्निवेदिते सतीव वधूजनो रमते स्म रेमे। कोकिला-कोकिलाकूजितोद्दीपितस्मरः स्त्रीजनः कामशासनभयादिवोच्छृङ्खलम-खेलदित्यर्थः ॥

৪৭। "হে মানিনীগণ! মান পরিহার কর, বৃথা কলহ করিও না; এই উপ-ভোগক্ষম যৌবন অতীত হইলে আর ফিরিবে না।" কোকিলগণ মনোভবের এইরূপ অভিপ্রায় প্রচার করিলেই যেন রমণীরা বিহার করিতে আরম্ভ করিল।

अथ यथासुखमार्त्तवमुत्सवं समनुभूय विलासवतीसखः ।
नरपतिश्चकमे मृगयारतिं स मधुमन्मधुमन्मथसन्निभः ॥४८

४८ अ:। अथ मधुमन्मधुमन्मथसन्निभः नरपतिः विलासवतीसखः (सन्) आर्त्तवम् उत्सवं यथासुखं समनुभूय मृगयारतिं चकमे ॥

४८। अथानन्तरम्। मधुं मथ्नातीति मधुमद्विष्णुः। सम्पदादि-त्वात् क्विप्। मधुर्वसन्तः। मथ्नातीति मथः। पचाद्यच्। मनसो मथो मन्मथः कामः। तेषां सन्निभः सदृशो मधुमन्मधुमन्मथसन्निभः स नरपति-र्दशरथो विलासवतीसखस्त्रीसहचरः सन्। ऋतुः प्राप्तोऽस्यार्त्तवः। तम्

उत्सवं वसन्तोत्सवं यथासुखं समनुभूय मृगयारतिं मृगयाविहारं चकमे आचकाङ्क्ष ॥

৪৮। মধুরিপু, বসন্ত ও মন্মথসমপ্রভ নরপতি দশরথ বিলাসিনীগণের সহিত যথারীতি ঋতুসুখ সম্ভোগ করিয়া মৃগয়াবিহারে সমুৎসুক হইলেন।

परिचयं चललक्ष्यनिपातने
भयरुषोश्च तदिङ्गितबोधनम् ।
श्रमजयात् प्रगुणाञ्च करोत्यसौ
तनुमतोऽनुमतः सचिवैर्ययौ ॥ ४९

४९ अ:। असौ चललक्ष्यनिपातने परिचयं भयरुषोः तदिङ्गितबोधनञ्च श्रमजयात् तनुं प्रगुणाञ्च करोति अतः सचिवैः अनुमतः (सन्) ययौ ॥

४९। व्यसनासङ्गदोषं परिहरन्नाह—परिचयमिति। असौ मृगया चललक्ष्याणि मृगगवयादीनि तेषां निपातने परिचयमभ्यासं करोति भयरुषोर्भयक्रोधयोस्तदिङ्गितबोधनं तेषां चललक्ष्याणामिङ्गितस्य चेष्टितस्य भयादिलिङ्गभूतस्य बोधनं ज्ञानञ्च करोति। तनुं शरीरं श्रमस्य जयान्निरासात् प्रगुणां प्रकृष्टलाघवादिगुणवतीञ्च करोति। अतो हेतोः सचिवैरनुमतोऽनुमोदितः सन् ययौ। सर्वञ्चैतद्युद्धोपयोगीत्यतस्तदपेक्षया मृगयाप्रवृत्तिः। न तु व्यसनितयेति भावः॥

৪৯। "মৃগয়া দ্বারা ধাবনতৎপর, মৃগ-গবয়প্রভৃতি চল লক্ষ্য ভেদ অভ্যস্ত হয়, পশুদিগের ভয়ক্রোধজনিত ইঙ্গিত বিদিত হইতে পারা যায় এবং শ্রমসহিষ্ণুতাহেতু শরীর সাতিশয় লাঘব হইয়া থাকে।" এই সকল কারণে সচিবগণ রাজার মৃগয়াগমনে অনুমোদন করিলে তিনি রাজভবন হইতে বহির্গত হইলেন।

मृगवनोपगमक्षमवेषभृद्-
विपुलकण्ठनिषक्तशरासनः ।
गगनमश्वखुरोद्धतरेणुभि-
र्नृसविता स वितानमिवाकरोत् ॥ ५०

५० अ:। मृगवनोपगमक्षमवेषभृत् विपुलकण्ठनिषक्तशरासनः नृसविता सः अश्वखुरोद्धतरेणुभिः गगन वितानम् इव अकरोत् ॥

५०। मृगाणां वनं तस्योपगमः प्राप्तिः तस्य क्षममर्हं वेषं बिभर्तीति स तथोक्तः। मृगयाविहारानुगुणवेषधारीत्यर्थः। विपुलकण्ठे निषक्तशरासनो लग्नधन्वा। ना सवितेव नृसविता पुरुषश्रेष्ठः। उपमित-

...। स राजा, अश्वखुरोद्धतरेणुभिर्गगनं वितानं तुच्छमसदिव ...रोत्। गगनं नालक्ष्यतीत्यर्थः। 'वितानं तुच्छमन्दयोः' इति विश्वः। ...वा सवितानमित्येकं पदम्। सवितानमुल्लोचसहितमिवाकरोत्। ...स्त्री वितानमुल्लोच:' इत्यमरः॥

...। राजा मृगयायात्राकाले वनविहारोचित वेशभূষা রচনা করিলেন এবং ... বিপুল স্কন্দদেশে শরাসন সংস্থাপন করিয়া অশ্বখুরোত্থিত ধূলিজালে গগনমণ্ডল ...দিত করিয়া চলিলেন।

...थितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः।
...गवल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु॥ ५१

...यः। वनमालया ग्रथितमौलिः तरुपलाशसवर्णतनुच्छदः तुरगवल्गनचञ्चलकुण्डलः असौ रुरु-...भूमिषु विरुरुचे॥

५१। वनमालया वनपुष्पस्रजा ग्रथितमौलिर्बद्धधम्मिल्लः। तरूणां ...णां पत्रैः सवर्णः समानस्तनुच्छदो वर्म यस्य स तथोक्तः। इदञ्च ...च पलाशसावर्ण्याभिधानं मृगादीनां विश्वासार्थम्। तुरगस्य वल्गनेन ...गतिविशेषेण चञ्चलकुण्डलोऽसौ दशरथो रुरुभिर्मृगविशेषैश्चेष्टिताश्चरिता ...भूमयस्तासु विरुरुचे विदिद्युते॥

...। অনন্তর তিনি বনমালায় কেশপাশ বন্ধন এবং পল্লবসমবর্ণ বর্ম্মদ্বারা শরীর ...ত করিলেন। অশ্বের প্লুতগতিনিবন্ধন তাঁহার শ্রবণকুণ্ডল আন্দোলিত হইল। ...া এইরূপ শোভা ধারণ করিয়া রুরুমৃগের প্রচারভূমিতে বিচরণ করিতে লাগিলেন।

...नुलताविनिवेशितविग्रहा भ्रमरसंक्रमितेक्षणवृत्तयः।
...ददृशुरध्वनि तं वनदेवताः सुनयनं नयनन्दितकोशलम्॥५२

५२ अ:। तनुलताविनिवेशितविग्रहाः भ्रमरसंक्रमितेक्षणवृत्तयः वनदेवताः सुनयनं नयनन्दित-...शलं तम् अध्वनि ददृशुः॥

५२। तनुषु लतासु विनिवेशितविग्रहाः संक्रमितदेहाः भ्रमरेषु ...क्रमिता ईक्षणवृत्तयो दृग्व्यापारा यासां ता वनदेवताः, सुनयनं सुलोचनं ...येन नीत्वा नन्दितास्तोषिताः कोसला येन तं दशरथम् अध्वनि ददृशुः। ...तिशयावनतया तं देवता अपि गूढ़वृत्त्या ददृशुरित्यर्थः॥

৫২। তখন বনদেবতারা সূক্ষ্ম লতাজালে কলেবর বিনিবেশিত এবং ভৃঙ্গগণে নয়ন ...র্পণ করিয়া নীতিগুণে কোশলবাসী প্রজাগণের মনোরঞ্জনকারী সুলোচন অজনন্দন ...া দশরথকে নিরীক্ষণ করিতে লাগিলেন।

श्वगणिवागुरिकैः प्रथमास्थितं व्यपगतानलदस्यु विवेश सः।
स्थिरतुरङ्गमभूमि निपानवन्-मृगवयोगवयोपचितं वनम्॥ ५३॥

५३ अः। सः श्वगणिवागुरिकैः प्रथमास्थितं व्यपगतानलदस्यु स्थिरतुरङ्गभूमिनिपानवत् मृग-वयो गवयोपचितं वनं विवेश॥

५३। स दशरथः, शुनां गणः स एषामस्तीति श्वगणिनः श्वग्राहिणः तैः, वागुरा मृगबन्धनरज्जुः। 'वागुरा मृगबन्धनी' इत्यमरः। तया चरन्तीति वागुरिका जालिकाः। 'चरति' इति ठक्प्रत्ययः। 'द्वौ वागुरिक-जालिकौ' इत्यमरः। तैश्च प्रथममास्थितमधिष्ठितम्। व्यपगता अनला दावाग्नयो दस्यवस्तस्कराश्च यस्मात् तथोक्तम्। 'दस्युतस्करमोषकाः' इत्य-मरः। 'कारयेद्वनविशोधनमादौ मातुरन्तिकमपि प्रविविक्षुः। आप्तै-शस्त्यनुगतः प्रविशेद्वा सङ्कटे च गहने च न तिष्ठेत्॥' इति कामन्दकः। स्थिता दृढ़ा पङ्कादिरहिता तुरङ्गमयोग्या भूमिर्यस्य तत्, निपानवदाहाव-युक्तम्। 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः। मृगैः हरिणादिभिः वयोभिः पक्षिभिः गवयैः गोसदृशैः अरण्यपशुविशेषैश्च उप-चितं समृद्धं वनं विवेश प्रविष्टवान्॥

৫৩। প্রথমে লগুড়হস্ত ব্যাধগণ কক্কুরদল সমভিব্যাহারে বনমধ্যে প্রবেশ করিল। তারপর তিনি সেই কানন অনল ও দস্যুভয়শূন্য জানিয়া তথায় প্রবেশ করিলেন। সেই বনে অশ্বগণের গমনোপযোগী সুদৃঢ় ভূমি ও কূপ বিদ্যমান ছিল এবং মৃগ গবয় প্রভৃতি পশুগণও বিচরণ করিত।

अथ नभस्य इव त्रिदशायुधं कनकपिङ्गतड़िद्गुणसंयुतम्।
धनुरधिज्यमनाधिरुपाददे नरवरो रवरोषितकेशरी॥ ५४॥

५४ अः। अथ अनाधिः रवरोषितकेशरी नरवरः कनकपिङ्गतड़िद्गुणसंयुतं त्रिदशायुधं नभस्य इव अधिज्यं धनुः उपाददे॥

५४। अथ अनाधिर्मनोव्यथारहितो नरवरो नरश्रेष्ठः। रवेण धनु-ष्टङ्कारेण रोषिताः केसरिणः सिंहा येन स राजा। कनकमिव पिङ्गः पिशङ्गो यस्तड़िदेव गुणो मौर्वी तेन संयुतं त्रिदशायुधमिन्द्रचापं नभस्य भाद्रपदमास इव। 'स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः' इत्यमरः। अधिज्यमधिगतमौर्वीकं धनुः उपाददे जग्राह॥

৫৪। অনন্তর ভাদ্রমাস যেমন কনক ও পিঙ্গপ্রভা সৌদামিনীরূপ মৌর্ব্বীযুক্ত ইন্দ্রায়ুধ ধারণ করে, তদ্রূপ নরবর দশরথও প্রফুল্লমনে মৌর্ব্বী আরোপণপূর্ব্বক শরাসন ধারণ করিলেন। তখন সেই শরাসনের টঙ্কারশব্দে কেশরীরা সাতিশয় রোষাবিষ্ট হইল।

तस्य स्तनप्रणयिभिर्मुहुरेणशावै-
र्व्याहन्यमानहरिणीगमनं पुरस्तात्।
आविर्बभूव कुशगर्भमुखं मृगाणां
यूथं तदग्रसरगर्वितकृष्णसारम्॥ ५५

[अ]न्वयः। स्तनप्रणयिभिः एणशावैः मुहुः व्याहन्यमानहरिणीगमनं कुशगर्भमुखं तदग्रसर-[गर्वितकृष्ण]सारं मृगाणां यूथं तस्य पुरस्तात् आविर्बभूव॥

५५। स्तनप्रणयिभिः स्तनपायिभिः एणशावैः हरिणशिशुभिः। [पोतः पाक]कः शावकः शिशुः' इत्यमरः। मुहुर्व्याहन्यमानं तद्वत्सलतया तद्गमनानु-[रोधात्] मुहुर्मुहुः प्रतिषिध्यमानं हरिणीनां गमनं गतिर्यस्य तत्। कुशा[ग्राणि ये]षां तानि मुखानि यस्य तत् कुशगर्भमुखम्। तस्य यूथस्य अग्रेसरः [अतएव] गर्वितो दृप्तश्च कृष्णसारो यस्य तत् मृगाणां यूथं कुलम्। 'स-[जातीयैः] कुलं यूथं तिरश्चां पुन्नपुंसकम्' इत्यमरः। तस्य दशरथस्य पुर-[स्तादग्र]तः आविर्बभूव। वसन्ततिलकं वृत्तम्॥

৫৫। এই সময় এক মৃগযূথ কুশকবল চর্ব্বণ করিতে করিতে তাঁহার সম্মুখে [উপস্থ]িত হইল। মদগর্ব্বিত কৃষ্ণসার মৃগগণ ঐ যূথের অগ্রে অগ্রে গমন করিতেছিল [এবং] হরিণশিশুরা স্তন্যপানাভিলাষে মৃগীগণের গমনে বাধা জন্মাইতে লাগিল।

तत् प्रार्थितं जवनवाजिगतेन राज्ञा
तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति।
श्यामीचकार वनमाकुलदृष्टिपातै-
र्वातेरितोत्पलदलप्रकरैरिवार्द्रैः॥ ५६

५६ अः। जवनवाजिगतेन तूणीमुखोद्धृतशरेण राज्ञा प्रार्थितं विशीर्णपङ्क्ति तत् मृगयूथम् [आर्द्रै]ः आकुलदृष्टिपातैः वातेरितोत्पलदलप्रकरैः इव वनं श्यामीचकार॥

५६। जवनो जवशीलः। 'जुचंक्रम्य'—इत्यादिना युच्प्रत्ययः। 'तरस्वी [त्व]रितो वेगी प्रजवी जवनो जवः' इत्यमरः। तं वाजिनमश्वं गतेन आरू-[ढे]न। तूणी इषुधिः। 'बह्वादिभ्यश्च' इति स्त्रियां ङीष्। तस्या मुखात् [वि]वरात् उद्धृतशरेण राज्ञा प्रार्थितमभियातम्। 'याञ्चायामभियाने च [प्रार्थ]ना कथ्यते बुधैः' इति केशवः। अतएव विशीर्णा पङ्क्तिः सन्धीभावो [यस्य] तत्। मृगयूथं कर्तृ। आर्द्रैर्भयादश्रुसिक्तैः आकुला भयचकिता ये दृष्टि-[पा]तास्तैः। वातेरितोत्पलदलप्रकरैः पवनकम्पितेन्दीवरदलवृन्दैरिव। वनं श्यामीचकार॥

৫৬। তদ্দর্শনে রাজা তূণীর হইতে শর উদ্ধৃত করিয়া বেগগামী অশ্বসাহায্যে উহাদের অভিমুখে ধাবিত হইলেন। তখন সেই যূথভ্রষ্ট মৃগগণের সমীরণকম্পিত বারিসিক্ত উৎপলদলের ন্যায় সাকুলদৃষ্টিপাতে বনভূমি শ্যামবর্ণ হইয়া গেল।

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
वाणं कृपामृदुमनाः प्रतिसञ्जहार ॥ ५७

५७ अः। हरिप्रभावः धन्वी सः लक्ष्यीकृतस्य हरिणस्य देहं व्यवधाय स्थितां सहचरीम् कामितया कृपामृदुमनाः (सन्) आकर्णकृष्टम् अपि वाणं प्रतिसञ्जहार ॥

५७। हरिरिन्द्रो विष्णुर्वा, तस्य इव प्रभावः सामर्थ्यं यस्य स तथोक्तः धन्वी धनुष्मान् स नृपः। लक्ष्यीकृतस्य वेद्धुमिष्टस्य हरिणस्य स्वप्रेय देहं व्यवधाय अनुरागात् अन्तर्धाय स्थिताम्। सह चरतीति सहचरी पचादिषु चरतेष्टित्करणात् ङीप्। यथाह वामनः—'अनुचरीति चरी त्वात्' इति। तां सहचरीं हरिणीं प्रेक्ष्य कामितया स्वयं कामुकत्वात् कृपामृदुमनाः करुणार्द्रचित्तः सन्, आकर्णकृष्टमपि दुष्प्रतिसंहरम् इत्यर्थः। वाणं प्रतिसञ्जहार, नैपुण्यादित्यर्थः। नैपुण्यन्तु धन्वी अनेन गम्यते ॥

৫৭। অনন্তর ইন্দ্রতুল্যবলশালী মহীপতি দশরথ, শরাসন ধারণপূর্ব্বক এ হরিণকে লক্ষ্য করিলেন, তখন উহার প্রিয়সহচরী হরিণী স্বীয় প্রিয়তমের শ ব্যবধান করিয়া মধ্যস্থলে দাঁড়াইল, প্রেমানুরাগী রাজা তদ্দর্শনে করুণরসে এক আপ্লুত হইয়া আকর্ণকৃষ্টশর প্রতিসংহার করিলেন।

तस्यापरेष्वपि मृगेषु शरान् मुमुक्षोः
कर्णान्तमेत्य बिभिदे निविड़ोऽपि मुष्टिः ।
त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः
प्रौढ़प्रियानयनविभ्रमचेष्टितानि ॥ ५८

५८ अः। त्रासातिमात्रचटुलैः सुनेत्रैः प्रौढ़प्रियानयनविभ्रमचेष्टितानि स्मरतः अपरेषु अपि शरान् मुमुक्षोः तस्य निविड़ः अपि मुष्टिः कर्णान्तम् एत्य बिभिदे ॥

५८। त्रासात् भयात् अतिमात्रचटुलैः अत्यन्तचञ्चलैः सुनेत्रैः प्रौढ़ प्रियानयनविभ्रमचेष्टितानि प्रगल्भकान्ताविलोचनविलासव्यापारान् सा द्यात् स्मरतः। अपरेष्वपि मृगेषु शरान् मुमुक्षोर्मोक्तुमिच्छोः तस्य नृप

विड़ो दृढ़ोऽपि मुष्टिः कर्णान्तमेत्य प्राप्य बिभिदे । स्वयमेव भिद्यते
। भिदेः कर्म्मकर्त्तरि लिट् । कामिनस्तस्य प्रियाविभ्रमस्मृतिजनित-
व्यतिरेकात् मुष्टिभेदः, न त्वनैपुण्यादिति तात्पर्य्यार्थः ॥

৫৮। তদনন্তর তিনি অন্যান্য হরিণগণের প্রতি বাণনিক্ষেপে অভিলাষী হইলেন, কিন্তু উহাদের ত্রাসতরল লোচন অবলোকনে প্রগল্‌ভা বনিতার নেত্রবিভ্রম তাঁহার স্মরণ হওয়াতে কর্ণোপান্ত পর্য্যন্ত আকৃষ্ট সুদৃঢ়মুষ্টি শিথিল হইয়া গেল।

उत्तस्थुषः सपदि पल्वलपङ्कमध्या-
न्मुस्ताप्ररोहकबलावयवानुकीर्णम् ।
जग्राह च द्रुतवराहकुलस्य मार्गं
सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥ ५९

५९ अ: । सः मुस्ताप्ररोहकबलावयवानुकीर्णम् आयताभिः आर्द्रपदपङ्क्तिभिः सुव्यक्तं सपदि पल्वलपङ्कमध्यात् उत्तस्थुषः द्रुतवराहकुलस्य मार्गं जग्राह ॥

५९ । स नृपः । मुस्ताप्ररोहाणां मुस्ताङ्कुराणां कबला ग्रासाः, तेषाम् अवयवैः अस्मविवृतमुखभ्रंशिभिः शकलैरनुकीर्णं व्याप्तम् । आयताभिः दीर्घाभिः आर्द्रपदपङ्क्तिभिः सुव्यक्तम् । सपदि पल्वलपङ्कमध्यादुत्तस्थुषः उत्थितस्य द्रुतवराहकुलस्य पलायितवराहयूथस्य मार्गं जग्राह अनुससार ॥

৫৯। অতঃপর নৃপবর তৎক্ষণাৎ পল্বলপঙ্কমধ্য হইতে উত্থিত দ্রুতবেগে পলায়মান বরাহযূথের সুদীর্ঘ আর্দ্রপদপংক্তি লক্ষ্য করিয়া উহার অনুসরণ করিলেন। তিনি আরও দেখিলেন,—বরাহচর্ব্বিত মুস্তাঙ্কুরখণ্ড সকল উহাদের মুখবিবর হইতে ভ্রষ্ট হইয়া পথে পতিত রহিয়াছে।

तं वाहनादवनतोत्तरकायमीष-
द्विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीषुः ।
नात्मानमस्य विविदुः सहसा वराहा
वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥ ६०

६० अ: । वराहाः उद्धृतसटाः ( सन्तः ) वाहनात् ईषत् अवनतोत्तरकायं विध्यन्तं तं प्रतिहन्तुम् ईषुः । अस्य इषुभिः सहसा जघनाश्रयेषु वृक्षेषु विद्धम् आत्मानं न विविदुः ॥

६० । वराहाः, वाहनात् अश्वात् ईषदवनतोत्तरकायं किञ्चिदानत-पूर्वकायं विध्यन्तं प्रहरन्तं तं नृपम् । उद्धृतसटा ऊर्द्ध्वकेसराः सन्तः । 'सटा जटाकेसरयोः' इति केशवः । प्रतिहन्तुमीषुः प्रतिहर्त्तुमैच्छन् । अस्य

नृपस्य इषुभिः सहसा जघनानामाश्रयेषु अवष्टम्भेषु वृक्षेषु विद्धमात्मानं न विविदुः । एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥

৬০। তিনি স্বীয় বাহন অশ্ব হইতে উত্তরকায় কিঞ্চিৎ অবনত করিয়া শরদ্বারা বরাহগণকে বিদ্ধ করিতে প্রবৃত্ত হইলেন, তখন সেই বরাহেরাও সটাজাল উত্তোলিত করিয়া তাঁহার বিনাশসাধনে উদ্যুক্ত হইল, কিন্তু রাজা এমনই বাণক্ষেপণনিপুণ যে, বৃক্ষের সহিত তাহাদের জঘনদেশ বিদ্ধ হইয়াছে, উহা তাহারা জানিতে পারিল না।

तेनाभिघातरभसस्य विकृष्य पत्री
वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-
स्तं पातयाम्प्रथममास पपात पश्चात् ॥ ६१

६१ अः । तेन अभिघातरभसस्य वन्यस्य महिषस्य नेत्रविवरे विकृष्य मुक्तः पत्री विग्रहं निर्भिद्य अशोणितलिप्तपुङ्खः ( सन् ) तं प्रथमं पातयामास स्वयं पश्चात् पपात ॥

६१ । अभिघाते रभस औत्सुक्यं यस्य तस्य अभिहन्तुमुद्यतस्य इत्यर्थः । वन्यस्य वने भवस्य महिषस्य नेत्रविवरे नेत्रमध्ये तेन नृपेण विकृष्य आकृष्य मुक्तः पत्री शरो विग्रहं महिषदेहं निर्भिद्य विदार्य शोणितलिप्तो न भवतीत्यशोणितलिप्तः पुङ्खो यस्य स तथोक्तः सन्, तं महिषं प्रथमं पातयामास, स्वयं पश्चात्पपात । 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्रानुशब्दस्य व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वात् 'पातयां प्रथममास' इत्यपप्रयोग इति पाणिनीयाः । यथाह वार्त्तिककारः—'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्च' इति ॥

৬১। অনন্তর এক বন্যমহিষ তাঁহাকে প্রহার করিতে প্রবৃত্ত হইলে তিনি শরাসন আকর্ষণপূর্ব্বক তাহার নেত্রবিবরে একটী শর নিক্ষেপ করিলেন ; নিক্ষিপ্ত শর এরূপ দ্রুতবেগে গমন করিল যে, উহা মহিষদেহ ভেদ করিয়া শোণিতলিপ্ত না হইয়াই প্রথমে মহিষকে পাতিত করিল এবং তৎপশ্চাৎ স্বয়ং পতিত হইল।

प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्
खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।
शृङ्गं स दृप्तविनयाधिकृतः परेषा-
मत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ ६२

६२ अः । नृपतिः निशितैः क्षुरप्रैः खड्गान् प्रायः विषाणपरिमोक्षलघूत्तमाङ्गान् चकार । दृप्तविनयाधिकृतः स परेषाम् अत्युच्छ्रितं शृङ्गं न ममृषे तु ( किन्तु ) दीर्घम् आयुः न ममृषे इति न ॥

६२। नृपतिः निशितैः क्षुरप्रैः शरविशेषैः खड्गान् खड्गाख्यान् मृगान्। 'गण्डकी खड्गखड्गिनौ' इत्यमरः। प्रायो बाहुल्येन विषाणपरिमोचनेन शृङ्ग-हीन लघूनि अगुरूणि उत्तमाङ्गानि शिरांसि येषां तांश्चकार न त्ववधीत् इत्यर्थः। कुतः? दृप्तविनयाधिकृतो दुष्टनिग्रहनियुक्तः स राजा, परेषां प्रति-कूलानामत्युच्छ्रितमुन्नतं शृङ्गं विषाणं प्राधान्यञ्च। 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः। न ममृषे न सेहे। दीर्घमायुर्जीवितकालम्। 'आयुर्जीवित-कालो ना' इत्यमरः। न ममृषे इति न किन्तु ममृष एवेत्यर्थः॥

৬২। দুষ্টনিগ্রহনিরত নরবর দশরথ শাণিত ক্ষুরপ্র অস্ত্রদ্বারা গণ্ডারদিগের খড়্গা-কৃতি শৃঙ্গ উৎপাটন করিয়া উহাদের মস্তকভার লঘু করিয়া দিলেন, কিন্তু প্রাণ বিনাশ করিলেন না; কেননা তিনি রিপুগণের প্রাধান্যই সহ্য করিতে পারিতেন না, পরন্তু জীবনের বিরোধী ছিলেন না।

व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः
फुल्लासनाग्रविटपानिव वायुरुग्णान्।
शिक्षाविशेषलघुहस्ततया निमेषा-
त्तूणीचकार शरपूरितवक्त्ररन्ध्रान्॥ ६३

६३ अ:। अभीः धन्वी सः गुहाभ्यः अभिमुखोत्पतितान् वायुरुग्णान् फुल्लासनाग्रविटपान् इव (स्थितान्) शरपूरितरन्ध्रवक्त्रान् शिक्षाविशेषलघुहस्ततया निमेषात् तूणीचकार॥

६३। अभीः निर्भीकः स धन्वी गुहाभ्योऽभिमुखमुत्पतितान्। वायुना रुग्णान् भग्नान्। फुल्ला विकसिताः। 'अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः' इति निष्ठातकारस्य लत्वनिपातः। ये असनस्य सर्जवृक्षस्य 'सर्जकासन-बन्धूकपुष्पप्रियकजीवकाः' इत्यमरः। अग्रविटपास्तानिव स्थितान् इषुधि-भूतानित्यर्थः। व्याघ्राणां चित्ररूपत्वादुपमाने फुल्लविशेषणम्। शरैः पूरि-तानि वक्त्ररन्ध्राणि येषां तान् व्याघ्रान्। शिक्षाविशेषेण अभ्यासातिशयेन लघुहस्ततया क्षिप्रहस्ततया निमेषात् तूणीचकार तूणं शरैः पूरितवान् इत्यर्थः॥

৬৩। ভয়হীন ভূপতি দশরথ সবিশেষ অভ্যাসনিবন্ধন ক্ষিপ্রহস্ততা প্রদর্শনপূর্ব্বক প্রফুল্ল সর্জ্জতরুর বায়ুভগ্ন শাখাগ্রের ন্যায় গিরিগুহা হইতে অভিমুখাগত শার্দ্দূলগণের মুখবিবর শরনিকরে পরিপূর্ণ করিয়া ফেলিলেন।

निर्घातोग्रैः कुञ्जलीनान् जिघांसु-
र्ज्यानिर्घोषैः क्षोभयामास सिंहान्।

नूनं तेषामभ्यसूयापरोऽभू-
द्वीर्य्योदग्रे राजशब्दे मृगेषु ॥ ६४

६४। कुञ्जलीनान् सिंहान् जिघांसुः निर्घातोग्रैः ज्यानिर्घोषैः चोभयामास। तेषां वीर्य्योदग्रे मृगेषु राजशब्दे अभ्यसूयापरः अभूत् नूनम् ॥

६४। कुञ्जेषु लीनान्। 'निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे' इत्यमरः। सिंहान् जिघांसुः हन्तुमिच्छुः। निर्घातो व्योमोत्थित... पातिकः शब्दविशेषः, तद्वदुग्रैः रौद्रैः ज्यानिर्घोषैः मौर्वीशब्दैः चोभयामास। अत्रोत्प्रेक्षते—तेषां सिंहानां सम्बन्धिनिवीर्य्येण उदग्रे उन्नते मृगेषु ... यो राजशब्दः तस्मिन् अभ्यसूयापरः अभूत् नूनम्। अन्यथा कथमेतान्... न्विष्य हन्यादित्यर्थः। 'मृगाणाम्' इति पाठे समासे गुणभूतत्वाद्राजशब्देन सम्बन्धो दुर्घटः। शालिनीवृत्तम्—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणम् ॥

৬৪। অনন্তর তিনি নিকুঞ্জশায়ী কেশরীদিগের বিনাশবাসনায় বজ্রধ্বনির ... অতিভীষণ জ্যানিস্বনদ্বারা তাহাদিগকে সংক্ষোভিত করিতে লাগিলেন; তখন ... হইল যেন তিনি সকল পশু অপেক্ষা অধিক বলশালী সিংহের উন্নত মৃগ... পদবীতে ঈর্ষান্বিত হইয়াছেন।

तान् हत्वा गजकुलबद्धतीव्रवैरान्
काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान्।
आत्मानं रणकृतकर्म्मणां गजाना-
मानृण्यं गतमिव मार्गणैरमंस्त ॥ ६५

६५ अः। काकुत्स्थः गजकुलबद्धतीव्रवैरान् कुटिलनखाग्रलग्नमुक्तान् तान् हत्वा आत्मानं रण... कृतकर्म्मणां गजानाम् आनृण्यं मार्गणैः गतम् इव अमंस्त ॥

६५। काकुत्स्थो दशरथः, गजकुलेषु बद्धं तीव्रं वैरं यैस्तान्, कुटिलेषु नखाग्रेषु लग्ना मुक्ता गजकुम्भमौक्तिकानि येषां तान् सिंहान् हत्वा, आत्मानं रणेषु कृतकर्म्मणां कृतोपकाराणां गजानाम् आनृण्यमनृण... मार्गणैः शरैः। 'मार्गणो याचके शरे' इति विश्वः। गतं प्राप्तवन्तमिव अमंस्त मेने ॥

৬৫। কাকুৎস্থকুলতিলক রাজা, বক্রনখাগ্রে সংলগ্নমৌক্তিক করিকুলের চিরবৈরী সেই কেশরীসকলকে শরদ্বারা সংহার করিয়া সংগ্রামভূমির সহায় করিগণের নিকট আপনাকে ঋণমুক্ত করিলেন।

चमरान् परितः प्रवर्त्तिताश्वः
क्वचिदाकर्णविकृष्टभल्लवर्षी ।
नृपतीनिव तान् वियोज्य सद्यः
सितबालव्यजनैर्जगाम शान्तिम् ॥ ६६

६६ अ:। क्वचित् चमरान् परितः प्रवर्त्तिताश्वः आकर्णविकृष्टभल्लवर्षी सः नृपतीन् इव तान् सितबालव्यजनैः वियोज्य सद्यः शान्तिं जगाम ॥

६६। क्वचित् चमरान् परितः। 'अभितः परितः समया'—इत्यादिना द्वितीया। प्रवर्त्तिताश्वः प्रधाविताश्वः, आकर्णविकृष्टभल्लान् इषुविशेषान् वर्षतीति तथोक्तः स नृपः, नृपतीनिव तांश्चमरान् सितबालव्यजनैः शुभ्र-चामरैः वियोज्य विरह्य्य सद्यः शान्तिं जगाम। शूराणां परकीयमैश्वर्य-मेव लक्ष्यं न तु जीवितमिति भावः। औपच्छन्दसिकं वृत्तम् ॥

৬৬। কোনস্থানে তিনি চমরী মৃগগণের প্রতি অতিবেগে অশ্বসঞ্চালন করিলেন এবং আকর্ণকৃষ্ট শর ও ভল্লাস্ত্রবর্ষণে বিজিত রাজগণের ন্যায় উহাদিগকে শ্বেতচামর-রহিত করিয়া অবিলম্বে শান্তিপ্রাপ্ত হইলেন।

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥ ६७

६७ अ:। सः तुरगसमीपात् उत्पतन्तम् अपि रुचिरकलापं मयूरं चित्रमाल्यानुकीर्णे रति-विगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः न बाणलक्ष्यीचकार ॥

६७। स नृपस्तुरगसमीपादुत्पतन्तमपि। सुप्रहारमपीत्यर्थः। रुचिर-कलापं भासुरबर्हम्। मह्यामतिशयेन रौतीति मयूरो बर्ही। पृषोदरादि-त्वात् साधुः। तं चित्रेण माल्येन अनुकीर्णे रतौ विगलितबन्धे प्रियायाः केशपाशे सपदि गतमनस्कः प्रवृत्तचित्तः। 'उरःप्रभृतिभ्यः कप्' इति कप्प्रत्ययः। न बाणलक्ष्यीचकार न प्रजहारेत्यर्थः ॥

৬৭। কোথায়ও বা কতকগুলি ময়ূর তাঁহার অশ্বের সম্মুখে উড্ডীন হইতে লাগিল, কিন্তু উহাদিগের পুচ্ছদর্শনে সুরত সময়ে আলুলায়িত বন্ধন বিচিত্র মাল্যভূষিত প্রিয়-তমাগণের কেশপাশ সহসা স্মৃতিপথে উদিত হওয়ায় রাজা ঐ সুচারুবর্হ ময়ূরদিগের প্রতি আর বাণনিক্ষেপ করিলেন না।

तस्य कर्कशविहारसम्भवं स्वेदमाननविलग्नजालकम्।
आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः॥

६८ अ:। सतुषारशीकरः भिन्नपल्लवपुटः वनानिलः कर्कशविहारसम्भवम् आननविलग्न... तस्य स्वेदम् आचचाम॥

६८। कर्कशविहारादतिव्यायामात् सम्भवो यस्य तम्। आ... विलग्नजालकं बद्धकदम्बकं तस्य नृपस्य स्वेदम्। सतुषारशीकरः शि... राम्बुकणसहितः। भिन्ना निर्दलिताः पल्लवानां पुटाः कोशा येन सः व... निलः आचचाम जहारित्यर्थः। रथोद्धतावृत्तमेतत्॥

৬৮। তুষারশীকরশীতল বনসমীরণ পাদপসমূহের পল্লবপুট ভেদ করিয়া নৃ... অতিমাত্র মৃগয়াজনিত বদনসংলগ্ন স্বেদবিন্দু অপনোদিত করিল।

इति विस्मृतान्यकरणीयमात्मनः
सचिवावलम्बितधुरं धराधिपम्।
परिवृद्धरागमनुबन्धसेवया
मृगया जहार चतुरेव कामिनी॥ ६९

६९ अ:। इति आत्मनः विस्मृतान्यकरणीयं सचिवावलम्बितधुरम् अनुबन्धसेवया परिवृद्ध... धराधिपं मृगया चतुरा कामिनी इव जहार॥

६९। इति पूर्वोक्तप्रकारेणात्मनो विस्मृतमन्यत्करणीयं कार्यं ये... तम्। विस्मृतान्यकार्यान्तरमित्यर्थः 'ऋक्पूरब्धूः पथामानक्षे' इति सम... सान्तोऽच् प्रत्ययः। अनुबन्धसेवया सन्ततसेवया परिवृद्धो रागो यस्य... धराधिपम्। मृग्यन्ते यस्यां मृगा इति मृगया। 'परिचर्य्यापरिसर्य्या... मृगयाटाट्यादीनामुपसंख्यानम्' इति शप्रत्ययान्तो निपातः। चतुर... विदग्धा कामिनीव, जहार आचकर्ष। 'न जातु कामः कामानामुप... भोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते।' इति भावः।

৬৯। এইরূপে রাজা দশরথ সচিবগণের প্রতি রাজ্যভার সমর্পণ এবং কার্য্যা... বিস্মরণপূর্ব্বক নিরন্তর মৃগয়ায় দৃঢ়রূপে বদ্ধানুরাগ হইলেন; তখন মৃগয়া যেন চতু... রমণীর ন্যায় তাঁহার মন আকর্ষণ করিয়া ফেলিল।

स ललितकुसुमप्रवालशय्यां
ज्वलितमहौषधिदीपिकासनाथाम्।
नरपतिरतिवाहयाम्बभूव
क्वचिदसमेतपरिच्छदस्त्रियामाम्॥ ७०

अ॰ सः । सः ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथां त्रियामां क्वचित् असमेतपरिच्छदः (सन्) अतिवाहयाम्बभूव ॥

७०। स नरपतिः। ललितानि कुसुमानि प्रवालानि पल्लवानि शय्या यस्यां ताम्। ज्वलिताभिर्महौषधिभिरेव दीपिकाभिः सनाथां तत्सनाथामित्यर्थः। त्रियामां रात्रिं क्वचिदसमेतपरिच्छदः परिहृतपरिजनः इत्यर्थः। अतिवाहयाम्बभूव गमयामास। पुष्पिताग्रावृत्तम् ॥

৭০। অনন্তর পরিজনবিরহিত নৃপতি কোনস্থলে সুকোমল পল্লব ও পুষ্পদ্বারা রচিত শয্যায় শয়ন করিয়া প্রজ্বলিত মহৌষধিরূপ দীপালোকে রজনী অতিবাহিত করিলেন।

उषसि स गजयूथकर्णतालैः
पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृण्वन्
विहगविकूजितवन्दिमङ्गलानि ॥ ७१

७१ अ॰। उषसि पटुपटहध्वनिभिः गजयूथकर्णतालैः विनीतनिद्रः स तत्र मधुराणि विहगकूजितवन्दिमङ्गलानि शृण्वन् अरमत ॥

७१। उषसि प्रातः पटूनां पटहानामिव ध्वनिर्येषां तैः गजयूथानां कर्णा एव तालैः वाद्यप्रभेदैः विनीतनिद्रः स नृपस्तत्र वने मधुराणि विहगानां विहङ्गानां विकूजितान्येव वन्दिनां मङ्गलानि मङ्गलगीतानि शृण्वन् अरमत ॥

৭১। অতঃপর রাত্রি প্রভাত হইলে পটহশব্দতুল্য গজযূথের কর্ণাস্ফালনশব্দে বিগতনিদ্র নৃপতি বৈতালিকদিগের মঙ্গলগীতির ন্যায় সুমধুর বিহঙ্গমকূজন শ্রবণ করিতে করিতে সেই রমণীয় বনে বিহার করিতে লাগিলেন।

अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरङ्गमेण ॥७२

७२ अ॰। अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैः अलक्ष्यमाणः श्रमफेनमुचा तुरङ्गमेण तपस्विगाढां तमसां नदीं प्राप ॥

७२। अथ जातु कदाचित् रुरोर्मृगस्य गृहीतवर्त्मा स्वीकृतरुरुमार्गः, विपिने वने पार्श्वचरैः अलक्ष्यमाणः, तुरगवेगादित्यर्थः। श्रमेण फेनमुचा सफेनं खिद्यतेत्यर्थः। तुरङ्गमेण तपस्विभिः गाढामवगाढां तमसां नाम नदीं सरितं प्राप ॥

৭২। অনন্তর নরপতি দশরথ রুরুমৃগের পথানুসরণ করিয়া তুরগের গতি-বশতঃ অনুচরবর্গের অলক্ষিতরূপে গহনবনমধ্যস্থ তপস্বিজনসেবিত তমসানদীতীরে উপস্থিত হইলেন, তখন সাতিশয় ক্লান্ত অশ্বের মুখ হইতে ফেন উদ্‌গীর্ণ হইতে লাগিল॥

**कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः।**
**तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज॥**

७३ अ:। तस्याः अम्भसि कुम्भपूरणभवः पटुः उच्चैः निनदः उच्चचार। तत्र सः द्विरदबृंहितशङ्की (सन्) शब्दपातिनम् इषुं विससर्ज॥

७३। तस्यास्तमसाया अम्भसि कुम्भपूरणेन भव उत्पन्नः। पटुर्मधुरः उच्चैर्गम्भीरो निनदो ध्वनिरुच्चचार उदियाय। तत्र निनदे नृपः। द्विरदबृंहितं शङ्कत इति द्विरदबृंहितशङ्की सन्। शब्देन शब्दानुसारेण पततीति शब्दपातिनम् इषुं वाणं विससर्ज। स्वागतावृत्तम्॥

৭৩। তখন সেই তমসা হইতে কুম্ভপূরণসম্ভূত এক মধুর গম্ভীররব উত্থিত হইল, তিনি ঐ শব্দকে গজবৃংহিত মনে করিয়া সেই শব্দানুসারে একটী শব্দভেদী বাণ নিক্ষেপ করিলেন।

**नृपतेः प्रतिषिद्धमेव तत् कृतवान् पङ्क्तिरथो विलङ्घ्य यत्।**
**अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः॥**

७४ अ:। तत् नृपतेः प्रतिषिद्धम् एव यत् पङ्क्तिरथः विलङ्घ्य कृतवान्। श्रुतवन्तः अपि रजोनिमीलिताः (सन्तः) अपथे पदम् अर्पयन्ति हि॥

७४। तत्कर्म नृपतेः क्षत्रियस्य प्रतिषिद्धमेव, यदेतत् कर्म गजवधरूपं पङ्क्तिरथो दशरथो विलङ्घ्य 'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्य्यात्' इति शास्त्रमुल्लङ्घ्य कृतवान्। ननु विदुषस्तस्य कथमीदृक्चेष्टितमत आह—अपथ इति। श्रुतवन्तोऽपि विद्वांसोऽपि रजोनिमीलिता रजोगुणावृताः सन्तः। न पन्था इत्यपथम्। 'पथो विभाषा' इति वा समासान्तः। 'अपथं नपुंसकम्' इति नपुंसकत्वम् 'अपन्थास्त्वपथं तुल्ये' इत्यमरः। तस्मिन् अपथे अमार्गे पदमर्पयन्ति निक्षिपन्ति हि प्रवर्त्तन्त इत्यर्थः। वैतालीयं वृत्तम्॥

৭৪। বন্যগজ বধ করা রাজাদিগের পক্ষে শাস্ত্রে নিষিদ্ধ, কিন্তু তিনি যে শাস্ত্র উল্লঙ্ঘন করিবেন, তাহাতে আর আশ্চর্য্য কি? কেননা জ্ঞানিগণও রজোগুণে বিমলিন হইলে কুপথে পদার্পণ করিয়া থাকেন।

**हा तातेति क्रन्दितमाकर्ण्य विषण्ण-**
**स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः।**

৬৪। নৃপতি দশরথ পত্নীগণের মুখে তথাবিধ স্বপ্নবৃত্তান্ত শ্রবণ করিয়া প্রীত হইলেন এবং জগৎপিতা বিষ্ণুর জনকত্ব-লাভ-নিবন্ধন আপনাকে সাতিশয় শ্রেষ্ঠ বলিয়া মনে করিলেন।

**विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।**
**उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५**

६५ अः। एकः विभुः तासां कुक्षिषु प्रसन्नानाम् अपां ( कुक्षिषु ) प्रतिमाचन्द्रः इव अनेकधा विभक्तात्मा ( सन् ) उवास ॥

६५। एकः एकरूपः विभुः विष्णुः तासां राजपत्नीनां कुक्षिषु गर्भेषु प्रसन्नानां निर्म्मलानाम् अपां कुक्षिषु प्रतिमाचन्द्रः प्रतिविम्बचन्द्र इव अनेकधा विभक्तात्मा सन् उवास ॥

৬৫। নির্ম্মল সলিলে প্রতিবিম্বিত চন্দ্রমার ন্যায় সেই অদ্বিতীয় বিভু বিষ্ণু চারি অংশে বিভক্ত হইয়া রাজমহিষীগণের কুক্ষি মধ্যে অবস্থান করিতে লাগিলেন।

**अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती ।**
**पुत्रं तमोऽपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६**

६६ अः। अथ राज्ञः सती अग्र्यमहिषी प्रसूतिसमये ओषधिः नक्तं तमोऽपहं ज्योतिः इव ( तमोऽपहम् ) पुत्रं लेभे ॥

६६। अथ राज्ञो दशरथस्य सती पतिव्रता। अग्र्या चासौ महिषी च अग्र्यमहिषी कौसल्या, प्रसूतिसमये प्रसूतिकाले, ओषधिः नक्तं रात्रिसमये तमोऽपहन्तीति तमोऽपहम्। 'अपे क्लेशतमसोः' इति डप्रत्ययः। ज्योतिरिव। तमोऽपहं तमोनाशकरं पुत्रं लेभे प्राप ॥

৬৬। অনন্তর রাত্রিকালে ওষধি যেমন অন্ধকারনাশক জ্যোতিঃ প্রসব করে, প্রধানা মহিষী পতিপরায়ণা কৌসল্যাও পূর্ণমাসে তেমনি একটি পুত্র প্রসব করিলেন।

**राम इत्यभिरामेण वपुषा तस्य चोदितः ।**
**नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७**

६७ अः। अभिरामेण वपुषा चोदितः गुरुः तस्य जगत्प्रथममङ्गलं राम इति नामधेयं चक्रे ॥

६७। अभिरमतेऽत्र इत्यभिरामं मनोहरम्। अधिकरणार्थे घञ्-प्रत्ययः। तेन वपुषा चोदितः प्रेरितो गुरुः पिता दशरथः, तस्य पुत्रस्य जगतां प्रथमं मङ्गलं सुलक्षणं राम इति नामधेयं चक्रे। अभिरामत्वमेव रामशब्दप्रवृत्तिनिमित्तमित्यर्थः ॥

৬৭। অনন্তর কুমারের সুকুমার শরীর শোভা দর্শন করিয়া পিতা দশরথ, জগতের বিশ্বমঙ্গলভূত "শ্রীরাম" নাম রাখিলেন।

**रघुवंशप्रदीपेन तेनाप्रतिमतेजसा।**
**रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन्॥ ६८**

६८ अः। रघुवंशप्रदीपेन अप्रतिमतेजसा तेन रक्षागृहगताः दीपाः प्रत्यादिष्टाः इव अभवन्॥

६८। रघुवंशस्य प्रदीपेन प्रकाशकेन, अप्रतिमतेजसा तेन रामेण, रक्षागृहगताः सूतिकागृहगता दीपाः प्रत्यादिष्टाः प्रतिबद्धा इव अभवन्। महादीपसमीपे नाल्पाः स्फुरन्तीति भावः॥

৬৮। তৎকালে সেই অমিততেজা রঘুবংশপ্রদীপের প্রভায় সূতিকাগৃহস্থিত প্রদীপ নিষ্প্রভ হইয়া গেল।

**शय्यागतेन रामेण माता शातोदरी बभौ।**
**सैकताम्भोजबलिना जाह्नवीव शरत्कृशा॥ ६९**

६९ अः। शातोदरी माता शय्यागतेन रामेण सैकताम्भोजबलिना शरत्कृशा जाह्नवी इव बभौ॥

६९। शातोदरी गर्भमोचनात् कृशोदरी माता, शय्यागतेन रामेण सैकते पुलिने यः अम्भोजबलिः पद्मोपहारस्तेन शरदि कृशा जाह्नवी गङ्गेव बभौ॥

৬৯। পুত্রপ্রসবানন্তর কৌসল্যাদেবী সাতিশয় কৃশোদরী হইলেন, তখন রাম তাঁহার সন্নিহিত শয্যায় শয়ান থাকায় মনে হইতে লাগিল যেন তিনি সৈকতপ্রদেশস্থ পদ্ম-উপহার দ্বারা অর্চ্চিত শরৎকালীন কৃশাঙ্গী গঙ্গার ন্যায় শোভা পাইতেছেন।

**कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान्।**
**जनयित्रीमलञ्चक्रे यः प्रश्रय इव श्रियम्॥ ७०**

७० अः। कैकेय्या भरतः नाम शीलवान् तनयः जज्ञे, यः प्रश्रयः श्रियम् इव जनयित्रीम् अलञ्चक्रे॥

७०। केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी। 'तस्यापत्यम्' इत्यणि कृते 'केकयमित्रयुप्रलयानां यादेरियः' इतीयादेशः। तस्या भरतो नाम शीलवान् तनयो जज्ञे जातः। यः तनयः। प्रश्रयो विनयः श्रियमिव, जनयित्रीं मातरमलञ्चक्रे॥

৭০। অতঃপর কৈকেয়ী হইতে ভরত নামক এক সুশীল পুত্র জন্মগ্রহণ করিল। সম্পৎ যেমন বিনয় দ্বারা সুশোভিত হয়, কৈকেয়ীও ঐ তনয়দ্বারা তদ্রূপ অলঙ্কৃত হইলেন।

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१

७१ अ: । सुमित्रा लक्ष्मणशत्रुघ्नौ यमौ सुतौ सम्यगाराधिता विद्या प्रबोधविनयौ इव सुषुवे ।

७१ । सुमित्रा, लक्ष्मणशत्रुघ्नौ नाम यमौ युग्मजातौ सुतौ पुत्रौ, सम्यगाराधिता स्वभ्यस्ता विद्या प्रबोधविनयौ तत्त्वज्ञानेन्द्रियजयाविव, सुषुवे ॥

৭১। সুশিক্ষিত বিদ্যা যেরূপ জ্ঞান ও বিনয় উৎপাদন করে, তদ্রূপ সুমিত্রা লক্ষ্মণ এবং শত্রুঘ্ন এই যমজ পুত্র প্রসব করিলেন।

निर्दोषमभवत् सर्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२

७२ अ: । सर्वं जगत् निर्दोषम् आविष्कृतगुणं च अभवत्, स्वर्ग: हि गां गतं पुरुषोत्तमम् अन्वगात् इव ॥

७२ । सर्वं जगद्भूलोको निर्दोषं दुर्भिक्षादिदोषरहितम् । आविष्कृतगुणं प्रकटीकृतारोग्यादिगुणञ्च अभवत् । अत्रोत्प्रेक्ष्यते—गां भुवं गतम् अवतीर्णं पुरुषोत्तमं विष्णुं स्वर्गोऽप्यन्वगादिव । स्वर्गो हि गुणवान्निर्दोषश्चेत्यागम: । स्वर्गतुल्यमभूदित्यर्थ: ॥

৭২। তখন অখিল ভূলোক দুর্ভিক্ষাদি দোষশূন্য হইল এবং আরোগ্যাদি বিবিধ গুণ সম্পন্ন হইয়া প্রকাশিত হইতে লাগিল; তখন বোধ হইল যেন, স্বর্গই অবনীতে অবতীর্ণ হইয়া সেই পুরুষোত্তম নারায়ণের অনুগমন করিয়াছে।

तस्योदये चतुर्मूर्त्तेः पौलस्त्यचकितेश्वराः ।
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३

७३ अ: । चतुर्मूर्त्तेः तस्य उदये ( सति ) पौलस्त्यचकितेश्वरा: दिश: विरजस्कैः नभस्वद्भिः उच्छ्वसिताः इव ॥

७३ । चतुर्मूर्त्तेः रामादिरूपेण चतूरूपस्य सतस्तस्य हरेरुदये सति, पौलस्त्यात् रावणात् चकिता भीता ईश्वरा नाथा इन्द्रादयो यासां ता दिशः स्वतस्त्रः विरजस्कैरपधूलिभिर्नभस्वद्भिर्वायुभि: । मिषेण । उच्छ्वसिता इव । इत्युत्प्रेक्षा । श्वसे: कर्त्तरि क्त: । स्वनाथशरणलाभसन्तुष्टानां दिशामुच्छ्वासवाता इव वाता ववुरित्यर्थ. । चतुर्दिगीशरक्षणं मूर्त्तिचतुष्टय-प्रयोजनमिति भाव: ॥

৭৩। রামপ্রভৃতি মূর্ত্তিচতুষ্টয়ে সেই বিভু আবির্ভূত হইলে সমীরণ রজোহীন হইয়া সঞ্চরণ করিতে লাগিল এবং রাবণভীত দিক্ সকল নিজ পতির আশ্রয় লাভে সন্তুষ্ট হইয়াই যেন নিশ্বাস পরিত্যাগ করিতে লাগিল।

**कृशानुरपधूमत्वात् प्रसन्नत्वात् प्रभाकरः ।**
**रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४**

७४ अ:। रक्षोविप्रकृतौ कृशानुः प्रभाकरः ( च ) अपधूमत्वात् प्रसन्नत्वात् ( च ) अपविद्धशुचौ इव आस्ताम् ॥

७४। रक्षसा रावणेन विप्रकृतौ अपकृतौ पीड़िताविल्यर्थः। कृशानुरग्निः प्रभाकरः सूर्य्यश्च यथासंख्यमपधूमत्वात् प्रसन्नत्वात् च अपविद्धशुचौ निरस्तदुःखाविव आस्ताम् अभवताम् ॥

৭৪। হুতাশন ধূমহীন এবং সূর্য্য সুপ্রসন্ন হইলেন; ইহাতে বোধ হইল—পূর্ব্বে তাঁহারা যে রাবণকর্ত্তৃক নিপীড়িত হইয়াছিলেন, এখন তাঁহাদের সেই দুঃখ বিদূরিত হইল।

**दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।**
**मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५**

७५ अ:। तत्क्षणं राक्षसश्रियः अश्रुबिन्दवः दशाननकिरीटेभ्यः मणिव्याजेन पृथिव्यां पर्य्यस्ताः ॥

७५। तत्क्षणं तस्मिन् क्षणे रामोत्पत्तिसमये राक्षसश्रियोऽश्रुबिन्दवः, दशाननकिरीटेभ्यः मणीनां व्याजेन मिषेण पृथिव्यां पर्य्यस्ताः पतिताः। रामोदये सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तम् अभूदित्यर्थः ॥

৭৫। রাম ভূমিষ্ঠ হইলে তৎক্ষণাৎ দশাননের কিরীট হইতে রত্নচ্ছলে রাক্ষসশ্রীর অশ্রুবিন্দু ভূতলে পতিত হইল।

**पुत्रजन्मप्रवेश्यानां तूर्य्याणां तस्य पुत्रिणः ।**
**आरम्भं प्रथमश्चक्रुर्देवदुन्दुभयो दिवि ॥ ७६**

७६ अ:। पुत्रिणः तस्य पुत्रजन्मप्रवेश्यानां तूर्य्याणां प्रथमम् आरम्भं दिवि देवदुन्दुभयः चक्रुः ॥

७६। पुत्रिणो जातपुत्रस्य तस्य दशरथस्य पुत्रजन्मनि प्रवेश्यानां प्रवेशयितव्यानाम् वादनीयानामित्यर्थः। तूर्य्याणां वाद्यानामारम्भम् उपक्रमं प्रथमं दिवि देवदुन्दुभयश्चक्रुः। साक्षात् पितुर्दशरथादपि देवा अधिकं हृष्टा इत्यर्थः ॥

৭৬। নৃপতি দশরথের পুত্রজন্মোৎসবে তৎকালোচিত বাদ্যকার্য্য—দেবলোকে দেবদুন্দুভিসমূহই প্রথম সম্পন্ন করিয়া দিল।

**सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी ।**
**सन्मङ्गलोपचाराणां सैवादिरचनाभवत् ॥ ৭৭**

৭৭ अ: । अस्य भवने सन्तानकमयी वृष्टि: च पेतुषी । सा एव सन्मङ्गलोपचाराणाम् आदि-रचना अभवत् ॥

৭৭। अस्य राज्ञो भवने सन्तानकानां कल्पवृक्षकुसुमानां विकार: सन्तानकमयी वृष्टिश्च पेतुषी पपात । 'क्वसुश्च' इति क्वसुप्रत्यय: । 'उगि-तश्च' इति ङीप् । सा वृष्टिरेव सन्त: पुत्रजन्मनि आवश्यका ये मङ्गलोप-चारास्तेषाम् आदिरचना प्रथमक्रिया अभवत् ॥

৭৭। তদীয় ভবনে যে পারিজাত কুসুমবৃষ্টি হইয়াছিল, পুত্রোৎপত্তিনিবন্ধন উহাই তৎকালোচিত মাঙ্গলিক ক্রিয়ার আদিরচনা হইল।

**कुमारा: कृतसंस्कारास्ते धात्रीस्तन्यपायिन: ।**
**आनन्देनाग्रजेनेव समं ववृधिरे पितु: ॥ ৭৮**

৭৮ अ: । कृतसंस्कारा: धात्रीस्तन्यपायिन: ते कुमारा: अग्रजेन इव पितु: आनन्देन समं ववृधिरे ।

৭৮। कृता: संस्कारा जातकर्मादयो येषां ते । धात्रीणाम् उपमातृणां स्तन्यानि पयांसि पिबन्तीति तथोक्ता: । ते कुमारा: अग्रे जातेन अग्रजेन ज्येष्ठेनेव स्थितेन पितुरानन्देन समं ववृधिरे । कुमारवृद्ध्या पिता महान्तमानन्दमवापेत्यर्थ: । कुमारजन्मन: प्रागेव जातत्वादग्रजत्वोक्ति: आनन्दस्य ॥

৭৮। জাতকর্ম্মাদি সংস্কারে সংস্কৃত কুমারগণ ধাত্রীর স্তন্যপান করিয়া দিন দিন বৃদ্ধিপ্রাপ্ত হইতে লাগিল এবং তৎসঙ্গে নৃপতির পূর্ব্বজাত সুতজন্মহর্ষও বর্দ্ধিত হইল।

**स्वाभाविकं विनीतत्वं तेषां विनयकर्म्मणा ।**
**मुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ ৭৯**

৭৯ अ: । तेषां स्वाभाविकं विनीतत्वं विनयकर्म्मणा हविर्भुजां सहजं तेज: हविषा इव मुमूर्च्छ ।

৭৯। तेषां कुमाराणां सम्बन्धि स्वाभाविकं सहजं विनीतत्वं विनय-कर्म्मणा शिक्षया । हविर्भुजाम् अग्नीनां सहजं तेजो हविषा आज्यादिनेव मुमूर्च्छ ववृधे । निसर्गसंस्काराभ्यां विनीता इत्यर्थ: ॥

৭৯। ঘৃত দ্বারা হুতাশনের যেরূপ স্বাভাবিক তেজ পরিবর্দ্ধিত হয়, তদ্রূপ সংশিক্ষা দ্বারা কুমারগণের নৈসর্গিক বিনীতভাব বর্দ্ধিত হইতে লাগিল।

**परस्पराविरुद्धास्ते तद्रघोरनघं कुलम्।**
**अलमुद्द्योतयामासुर्देवारण्यमिवर्त्तवः॥ ৮০**

৮০ अ:। परस्पराविरुद्धाः ते तत् अनघं रघोः कुलम् ऋतवः देवारण्यम् इव अलम् उद्द्योतयामासुः॥

৮০। परस्परमविरुद्धा अविद्विष्टाः सौभ्रात्रगुणवन्त इत्यर्थः। ते कुमाराः तत्प्रसिद्धमनघं निष्पापं रघोः कुलम्, ऋतवो वसन्तादयः देवारण्यं नन्दनमिव, सहजविरोधानामपि ऋतूनां सहावस्थानसम्भावनार्थं इति विशेषणम्। अलम् अत्यन्तमुद्द्योतयामासुः प्रकाशयामासुः। सौभ्रात्रेण कुलभूषणायन्त इति भावः॥

৮০। পরস্পর বিরোধিগুণ পরিত্যাগ করিয়া বসন্তাদি ঋতুগণ যেমন দেবোদ্যান নন্দনকানন উদ্ভাসিত করে, ভ্রাতৃসৌহার্দ্দসম্পন্ন কুমারগণও তদ্রূপ নিষ্কলঙ্ক রঘুকুল অত্যন্ত সমুজ্জ্বল করিলেন।

**समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ।**
**तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः॥ ৮১**

৮১ अ:। सौभ्रात्रे समाने अपि यथा उभौ रामलक्ष्मणौ तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः॥

৮১। शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः। 'नद्यृतश्च' इति कप्, न भवति वन्दिते भ्रातुरिति निषेधात्। तेषां भावः सौभ्रात्रं युवादित्वादण्। तस्मिन् समाने चतुर्णां तुल्येऽपि यथा उभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं बभूवतुः, तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं द्वौ द्वौ साहचर्य्येण अभिव्यक्तौ बभूवतुः। 'द्वन्द्वं रहस्यमर्य्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' इत्यभिव्यक्तार्थे निपातः। क्वचित् कस्यचित् स्नेहो नातिरिच्यत इति भावः॥

৮১। সেই ভ্রাতৃগণের মধ্যে পরস্পর সমান সৌভ্রাত্র থাকিলেও প্রীতিনিবন্ধন রাম ও লক্ষ্মণ, ভরত ও শত্রুঘ্ন পরস্পর দ্বন্দ্বসহচর হইলেন।

**तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन।**
**यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः॥ ৮২**

৮২ अ:। यथा चन्द्रसमुद्रयोः यथा वायुविभावस्वोः (तथा) तेषां मध्ये द्वयोः द्वयोः ऐक्यं कदाचन न बिभिदे॥

८२। तेषां चतुर्णां मध्ये द्वयोर्द्वयोः रामलक्ष्मणयोः भरतशत्रुघ्नयो-श्चेत्यर्थः। यथा वायुविभावस्वोर्वातवह्न्योरिव। चन्द्रसमुद्रयोरिव च ऐक्यमैकमत्यं कदाचन न बिभिदे। एककार्य्यत्वं समानसुखदुःखत्वं क्रमादुपमाद्वयाल्लभ्यते। सहजः सहकारी हि वह्नेर्वायुः। चन्द्रवृद्धौ हि बर्द्धते सिन्धुस्तत्क्षये च क्षीयत इति॥

৮২। পবনের সঙ্গে অনলের এবং শশধরের সহিত সাগরের ন্যায় তাঁহাদের মধ্যে রাম ও লক্ষ্মণ, ভরত ও শত্রুঘ্ন এই দুইজনের পরস্পর সাহচর্য্য কদাচ অপনীত হয় নাই।

**ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।**
**मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३**

८३ अः। प्रजानाथाः ते तेजसा प्रश्रयेण च निदाघान्ते श्यामाभ्रा दिवसाः इव प्रजानां मनः जह्रुः॥

८३। प्रजानाथास्ते कुमाराः, तेजसा प्रभावेण प्रश्रयेण विनयेन च निदाघान्ते ग्रीष्मान्ते। श्यामानि अभ्राणि मेघा येषां ते श्यामाभ्राः नातिशीतोष्णा इत्यर्थः दिवसा इव। प्रजानां मनो जह्रुः॥

৮৩। গ্রীষ্মাবসানে নীলমেঘাবৃত দিবসের ন্যায় সেই প্রজানাথ রাজ-কুমারগণ, তেজ ও বিনয় বিভবে প্রজাবর্গের মনোরঞ্জন করিতে লাগিলেন

**स चतुर्द्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।**
**धर्म्मार्थकाममोक्षाणामवतार इवाङ्गवान् ॥ ८४**

८४ अः। सः चतुर्द्धा व्यस्तः पृथिवीपतेः प्रसवः (चतुर्द्धा) अङ्गवान् धर्मार्थकाममोक्षाणाम् अवतारः इव बभौ॥

८४। स चतुर्धा। 'संख्यायां विधार्थे धा' इत्यनेन धाप्रत्ययः। व्यस्तो विभक्तः पृथिवीपतेः दशरथस्य प्रसवः सन्तानः। चतुर्धा अङ्गवान् मूर्त्तिमान् धर्मार्थकाममोक्षाणाम् अवतार इव बभौ॥

৮৪। সেই নরপালপুত্রগণ যেন ধর্ম্ম, অর্থ, কাম ও মোক্ষের মূর্ত্তিমান্ অবতাররূপে চতুর্দ্ধা বিভক্ত হইয়া শোভা পাইতে লাগিলেন।

**गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।**
**तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५**

८५ अः। गुरुवत्सलाः ते गुणैः गुरुं महार्णवाः चतुरन्तेशं तम् एव रत्नैः इव आराधयामासुः॥

८५। गुरुवत्सलाः पितृवत्सलाः कुमाराः गुणैः विनयादिभिः गुरुं

[...]लम् । चतुर्णामन्तानां दिगन्तानामीशं चतुरन्तेशम् । 'तद्धितार्थ'—[...]त्यादिनोत्तरपदसमासः । तं दशरथमेव महार्णवाश्चत्वारो रत्नैरिव । [...]राधयामासुः आनन्दयामासुः ॥

৮৫। অনন্তর মহাসাগরচতুষ্টয় যেরূপ রত্নরাশি দ্বারা দিগীশ দশরথের আরাধনা [...], গুরুবৎসল কুমারগণও তদ্রূপ বিনয়াদি গুণনিবহদ্বারা পিতার সন্তোষ উৎপাদন [...]রিতে লাগিলেন।

सुरगज इव दन्तैर्भग्नदैत्यासिधारै-
र्नय इव पणबन्धव्यक्तयोगैरुपायैः ।
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ८६

इति श्रीमहाकविकालिदासकृतौ रघुवंशे श्रीरामावतारो नाम
दशमः सर्गः ॥ १०

८६ अः । भग्नदैत्यासिधारैः दन्तैः सुरगज इव पणबन्धव्यक्तयोगैः उपायैः नय इव युगदीर्घैः [...]र्भिः हरिः इव तदीयैः अंशैः चतुर्भिः तैः अवनिपतीनां पतिः चकाशे ॥

८६ । भग्ना दैत्यानामसिधारा यैः तैः चतुर्भिर्दन्तैः सुरगज ऐरावत [इ]व । पणबन्धेन फलसिद्ध्या व्यक्तयोगैः अनुमितप्रयोगैः उपायैश्चतुर्भिः [स]मादिभिः नयो नीतिरिव । युगवद्दीर्घैः चतुर्भिः दोर्भिर्भुजैः हरिर्विष्णु[र]िव । तदीयैः हरिसम्बन्धिभिरंशैः अंशभूतैः चतुर्भिः तैः पुत्रैः अवनि[प]तीनां पतिः राजराजो दशरथश्चकाशे विदिद्युते ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये श्रीरामावतारो नाम दशमः सर्गः ॥ १०

৮৬। দৈত্যদিগের অসিভেদী দন্তচতুষ্টয় দ্বারা ঐরাবত যেমন শোভিত হয়, [...]সামাদি উপায়চতুষ্টয়ে নীতি যেমন শোভা পায়, যুগকাষ্ঠ সদৃশ বাহুচতুষ্টয় [দ্ব]ারা বিষ্ণু যেরূপ শোভা ধারণ করেন, নারায়ণাংশসম্ভূত আত্মজগণ দ্বারাও রাজা [দ]শরথ তদ্রূপ শোভমান হইলেন।

দশম সর্গ সমাপ্ত ॥ ১০

# एकादशः सर्गः ।

—००६०००—

**कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये।**
**काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते॥१॥**

१ अ:। सः क्षितीश्वरः कौशिकेन एत्य अध्वरविघातशान्तये ; काकपक्षधरं रामं याचितः किल तेजसां वयः न समीक्ष्यते हि॥ वाच्य—कौशिकः काकपक्षधरं रामं तं क्षितीश्वरं याचितवान्।

रामचन्द्रचरणारविन्दयोरन्तरङ्गचरभृङ्गलीलया।
तत्र सन्ति हि रसाश्चतुर्विधास्तान् यथारुचि सदैव निर्विश॥

१। कौशिकेन कुशिकापत्येन विश्वामित्रेण, एत्य अभ्यागत्य स क्षितीश्वरो दशरथः, अध्वरविघातशान्तये यज्ञविघ्नविध्वंसाय काकपक्षधरं बालकोचितशिखाधरम्। 'बालानान्तु शिखा प्रोक्ता काकपक्षः शिखण्डकः' इति हलायुधः। रामं याचितः किल प्रार्थितः खलु। याचेर्द्विकर्मकादप्रधाने कर्मणि क्तः। 'अप्रधाने दुह्यादीनाम्' इति वचनात्। नायं बालाधिकार इत्याशङ्क्य आह—तेजसां तेजस्विनां वयो बाल्यादि न समीक्ष्यते हि। अप्रयोजकमित्यर्थः। अत्र सर्गे प्रायो रथोद्धता वृत्तम्। उक्तञ्च—'रान्नराविह रथोद्धता लगौ' इति॥

১। অনন্তর কুশিকতনয় বিশ্বামিত্র রাজা দশরথ সমীপে আগমনপূর্ব্বক যজ্ঞ-বিঘ্নশান্তির জন্য কাকপক্ষধারী কুমার রামকে প্রার্থনা করিলেন। ( ইহা অযোগ্য প্রার্থনা নহে ) কেননা, তেজস্বিগণের বয়ঃক্রম পরীক্ষা করিতে হয় না।

**कृच्छ्रलब्धमपि लब्धवर्णभाक् तं दिदेश मुनये सलक्ष्मणम्।**
**अप्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता॥२॥**

२ अ:। लब्धवर्णभाक् (सः) कृच्छ्रलब्धम् अपि सलक्ष्मणं तं मुनये दिदेश। असुप्रणयिनाम् अपि अर्थिता रघोः कुले कदाचित् न व्यहन्यत॥ वाच्य—लब्धवर्णभाजा (तेन) सलक्ष्मणः कृच्छ्रलब्धः अपि सः मुनये दिदिशे॥

२। लब्धा वर्णाः प्रसिद्धयः यैस्ते लब्धवर्णा विचक्षणाः। 'लब्धवर्णो विचक्षणः' इत्यमरः। तान् भजत इति लब्धवर्णभाक् विद्वत्सेवीत्यर्थः। स राजा कृच्छ्रलब्धमपि सलक्ष्मणं तं रामं मुनये दिदेश अतिसृष्टवान्। तथाहि—असुप्रणयिनां प्राणार्थिनामपि अर्थिता याञ्चा रघोः कुले

र्थविदपि न व्यहन्यत न विहता न विफलीकृतेत्यर्थः । ये: अर्थिभ्यः प्राणा अपि समर्प्यन्ते तेषां पुत्रादित्यागो न विस्मयावह इति भावः ॥

২। বিচক্ষণ নরপতি বহুতর আয়াসলব্ধ সলক্ষ্মণ রামচন্দ্রকে সেই মুনিবর বিশ্বামিত্রের হস্তে সমর্পণ করিলেন; কারণ প্রাণপ্রার্থীরাও রঘুবংশীয়গণের নিকট কখনও বিমুখ হয় না।

यावदादिशति पार्थिवस्तयोर्निर्गमाय पुरमार्गसंस्क्रियाम् ।
तावदाशु विदधे मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः ॥ ३

अन्वयः। पार्थिवः तयोः निर्गमाय पुरमार्गसंस्क्रियां यावत् आदिशति तावत् मरुत्सखैः सपुष्पजलवर्षिभिः घनैः सा आशु विदधे ॥ वाच्य—पार्थिवेन पुरमार्गसंस्क्रिया आदिश्यते, मरुत्सखाः सपुष्पजलवर्षिणो घनाः तां विदधिरे ॥

३। पार्थिवः पृथिवीश्वरः तयोः निर्गमाय निष्क्रमणाय पुरमार्गसंस्क्रियां धूलिसन्मार्जनगन्धोदकसेचनपुष्पोपहाररूपसंस्कारं यावत् आदिशति आज्ञापयति तावत् मरुत्सखैः वायुसखैः। अनेन धूलिसम्मार्जनं गम्यते। सपुष्पजलवर्षिभिः पुष्पसहितजलवर्षिभिः घनैः सा मार्गसंस्क्रिया आशु विदधे विहिता। एतेन देवकार्य्यप्रवृत्तयोः देवानुकूल्यं सूचितम् ॥

৩। অনন্তর রাজা যেমনি আত্মজদ্বয়ের গমন জন্য নগরপথের সংস্কার করিতে আদেশ করিলেন, অমনি সমীরণ ও মেঘসমূহ কুসুম এবং সলিলবর্ষণে পথ সংস্কার করিয়া দিল।

तौ निदेशकरणोद्यतौ पितुर्धन्विनौ चरणयोर्निपेततुः ।
भूपतेरपि तयोः प्रवत्स्यतोर्नम्रयोरुपरि वाष्पविन्दवः ॥ ४

अन्वयः। निदेशकरणोद्यतौ धन्विनौ तौ पितुः चरणयोः निपेततुः। भूपतेः अपि वाष्पविन्दवः प्रवत्स्यतोः नम्रयोः तयोः उपरि (निपेतुः)॥ वाच्य—निदेशकरणोद्यताभ्यां धन्विभ्यां ताभ्यां निपेते। वाष्पविन्दुभिः निपेते।

४। निदेशकरणोद्यतौ पित्राज्ञाकरणोद्युक्तौ धन्विनौ धनुष्मन्तौ तौ कुमारौ पितुश्चरणयोः निपेततुः प्रणतौ इत्यर्थः। भूपतेरपि वाष्पविन्दवः प्रवत्स्यतोः प्रवासं करिष्यतोः अतएव नम्रयोः। 'नमिकम्पि'--इति रप्रत्ययः। तयोरुपरि निपेतुः पतिताः ॥

৪। পিতার আদেশ পালনে উদ্যত ধনুর্দ্ধারী রাম ও লক্ষ্মণ যখনই পিতৃচরণে প্রণাম করিলেন। তখনই প্রবাসগমনোদ্যত বিনীত সেই তনয়দ্বয়ের উপর নৃপতির অশ্রুবিন্দু পতিত হইতে লাগিল।

**तौ पितुर्नयनजेन वारिणा किञ्चिदुक्षितशिखण्डकावुभौ ।**
**धन्विनौ तमृषिमन्वगच्छतां पौरदृष्टिकृतमार्गतोरणौ ॥ ५**

५ अ: । पितु: नयनजेन वारिणा किञ्चित् उक्षितशिखण्डकौ धन्विनौ तौ उभौ पौरदृष्टिकृतमार्गतोरणौ ( सन्तौ ) तम् ऋषिम् अन्वगच्छताम् ॥ वाच्य—किञ्चिदुक्षितशिखण्डकाभ्यां ताभ्याम् उभाभ्यां धन्विभ्यां पौरदृष्टिकृतमार्गतोरणाभ्यां स ऋषि: अन्वगम्यत ॥

५ । पितुर्नयनजेन वारिणा किञ्चिदुक्षितशिखण्डकौ ईषत्सिक्तचूडौ 'शिखा चूड़ा शिखण्ड: स्यात्' इत्यमर: । शेषाद्विभाषा' इति कप्प्रत्यय: धन्विनौ तौ उभौ, पौरदृष्टिभि: कृतानि मार्गतोरणानि सम्पाद्यानि कुवलयानि ययोस्तौ तथोक्तौ सद्भ्यो निरीक्ष्यमाणावित्यर्थ: । तम् ऋषिम् अन्वगच्छताम् ॥

৫ । জনকের নয়নজলে ঈষৎ-আর্দ্রশিখ সেই ধনুর্দ্ধারী রাম ও লক্ষ্মণ মহর্ষি বিশ্বামিত্রের অনুগমন করিলেন, তখন পৌরগণ তাঁহাদিগকে একদৃষ্টিতে নিরীক্ষণ করিতে থাকিলে তাহাদের নয়নপংক্তি যেন রাজপথের তোরণ দ্বারস্বরূপ হইল।

**लक्ष्मणानुचरमेव राघवं**
**नेतुमैच्छदृषिरित्यसौ नृप: ।**
**आशिषं प्रयुयुजे न वाहिनीं**
**सा हि रक्षणविधौ तयो: क्षमा ॥ ६**

६ अ: । ऋषि: लक्ष्मणानुचरम् एव तं राघवं नेतुम् ऐच्छत् इति असौ नृप: आशिषं प्रयुयुजे । वाहिनीं न, हि सा ( एव ) तयो: रक्षणविधौ क्षमा ॥ वाच्य—ऋषिणा लक्ष्मणानुचर: राघव: नेतुम् ऐष्यत । असुना नृपेण आशी: प्रयुयुजे न वाहिनी ।

६ । ऋषिर्लक्ष्मणानुचरमेव लक्ष्मणमात्रानुचरं तं राघवं नेतुमैच्छदिति हेतोरसौ नृप: आशिषं प्रयुयुजे प्रयुक्तवान् । वाहिनीं सेनां न प्रयुयुजे प्रेषितवान् । हि यस्मात् सा आशीरेव तयो: कुमारयो: रक्षणविधौ क्षमा शक्ता ॥

৬ । সেই ঋষি বিশ্বামিত্র একমাত্র লক্ষ্মণের সহিত রামকে লইয়া যাইবার অভিলাষ করিয়াছিলেন, এজন্য রাজা কেবলমাত্র আশীর্ব্বাদই প্রদান করিলেন, রক্ষণার্থ সৈন্যপ্রদান করিলেন না; যেহেতু, তাঁহার আশীর্ব্বাদই তাহাদিগের রক্ষায় সমর্থ, হইবে।

**मातृवर्गचरणस्पृशौ मुनेस्तौ प्रपद्य पदवीं महौजस: ।**
**रेजतुर्गतिवशात् प्रवर्त्तिनौ भास्करस्य मधुमाधवाविव ॥ ७**

७ अ:। मातृवर्गचरणस्पृशौ तौ महौजसः मुनेः पदवीं प्रपद्य (महौजसः) भास्करस्य गतिवशात् प्रवर्तिनौ मधुमाधवौ इव रेजतुः॥ वाच्य—मातृवर्गचरणस्पृग्भ्यां प्रवर्तिभ्यां मधुमाधवाभ्याम् इव ताभ्यां रेजे।

७। मातृवर्गस्य चरणान् स्पृशत इति मातृवर्गचरणस्पृशौ कृतमातृवन्दनमस्कारावित्यर्थः। 'स्पृशोऽनुदके क्विन्' इति क्विन्प्रत्ययः। तौ महौजसः मुनेः पदवीं प्रपद्य। महौजसो भास्करस्य गतिवशात् मेषादिराशिसंक्रान्त्यनुसारात् प्रवर्त्तिनौ मधुमाधवाविव चैत्रवैशाखाविव रेजतुः। 'फणाञ्च सप्तानाम्' इति वैकल्पिकावेत्वाभ्यासलोपौ। 'स्याच्चैत्रे चैत्रिको मधुः' इति। 'वैशाखे माधवो राधः' इति च अमरः॥

৭। রাম ও লক্ষ্মণ মাতৃগণের চরণবন্দনা করিয়া মহাতেজস্বী মুনির পশ্চাৎ পশ্চাৎ গমন করিলেন; তখন তাঁহারা মেষাদিরাশি সংক্রমণকালে সূর্য্যের গতিনিবন্ধন বর্ত্তমান চৈত্র ও বৈশাখ মাসের ন্যায় শোভমান হইলেন।

**वीचिलोलभुजयोस्तयोर्गतं शैशवाच्चपलमप्यशोभत।**
**तोयदागम इवोद्ध्यभिद्ध्ययोर्नामधेयसदृशं विचेष्टितम्॥ ८**

८ अ:। वीचिलोलभुजयोः तयोः चपलम् अपि गतं शैशवात् तोयदागमे उद्ध्यभिद्ध्ययोः नामधेयसदृशं विचेष्टितम् इव अशोभत॥ वाच्य—गतेन चपलेन विचेष्टितेन नामधेयसदृशेन इव अशुभ्यत।

८। वीचिलोलभुजयोः तरङ्गचञ्चलबाह्वोः। इदं विशेषणं नदोपमानसिद्ध्यर्थं वेदितव्यम्। तयोश्चपलं चञ्चलमपि गतं गतिः शैशवात् हेतोः अशोभत। किमिव? तोयदागमे वर्षासमये। उज्झति उदकमिति उद्ध्यः, भिनत्ति कूलमिति भिद्ध्यः। 'भिद्ध्योद्ध्यौ नदे' इति क्यबन्तौ निपातितौ। उद्ध्यभिद्ध्ययोः नदविशेषयोः नामधेयसदृशं नामानुरूपं विचेष्टितमिव। उदकोज्झनकूलभेदनरूपव्यापार इव समयोत्पन्नं चापलमपि शोभत इति भावः॥

৮। বর্ষাকালে ভিদ্য ও উদ্ধ্যনদের নামানুরূপ জলোচ্ছ্বাস ও কূলভেদ যেরূপ শোভা পায়, শৈশবনিবন্ধন রাম এবং লক্ষ্মণের গমনকালে তাঁহাদের তরঙ্গের ন্যায় চঞ্চল বাহুযুগল তদ্রূপ শোভিত হইয়াছিল।

**तौ बलातिबलयोः प्रभावतो विद्ययोः पथि मुनिप्रदिष्टयोः।**
**मम्लतुर्न मणिकुट्टिमोचितौ मातृपार्श्वपरिवर्त्तिनाविव॥ ९**

९ अ:। मणिकुट्टिमोचितौ तौ मुनिप्रदिष्टयोः बलातिबलयोः विद्ययोः प्रभावतः मातृपार्श्वपरिवर्त्तिनौ इव पथि न मम्लतुः॥ वाच्य—मणिकुट्टिमोचिताभ्यां ताभ्यां मातृपार्श्वपरिवर्त्तिभ्यां न मम्ले॥

९। मणिकुट्टिमोचितौ मणिबद्धभूमिसञ्चारोचितौ तौ, मुनिप्रदिष्टयोः कौशिकेन उपदिष्टयोः बलातिबलयोः विद्ययोः बलातिबलाख्ययोः मन्त्रयोः प्रभावतः सामर्थ्यात् मातृपार्श्वपरिवर्त्तिनौ मातृसमीपवर्त्तिनौ इव पथि न मम्लतुः। न म्लानौ इत्यर्थः। अत्र रामायणश्लोकः—'क्षुत्पिपासे न ते राम भविष्येते नरोत्तम। बलामतिबलाञ्चैव पठतः पथि राघव॥' इति।

৯। মণিময় চত্বরভূমিতে বিচরণযোগ্য রাম ও লক্ষ্মণ মহর্ষিপ্রদত্ত বলা ও অতিবলা নামক বিদ্যাদ্বয়ের প্রভাবে দুর্গম পথগমনে কিছুমাত্র কষ্ট অনুভব করিলেন না; বরঞ্চ তাঁহাদের মনে হইল যেন, তাঁহারা জননীর পার্শ্বেই অবস্থান করিতেছেন।

**पूर्ववृत्तकथितैः पुराविदः सानुजः पितृसखस्य राघवः।**
**उह्यमान इव वाहनोचितः पादचारमपि न व्यभावयत्॥१०॥**

१० अः। वाहनोचितः सानुजः राघवः पुराविदः पितृसखस्य पूर्ववृत्तकथितैः उह्यमानः इव पादचारम् अपि न व्यभावयत्॥ वाच्य—वाहनोचितेन सानुजेन राघवेण उह्यमानेन इव, पादचारोऽपि न व्यभाव्यत॥

१०। वाहनोचितः सानुजो राघवः। पुराविदः पूर्ववृत्ताभिज्ञस्य पितृसखस्य मुनेः पूर्ववृत्तकथितैः पुरावृत्तकथाभिः उह्यमान इव वाहनेन प्राप्यमाण इव। वहेर्धातोः कर्म्मणि शानच्। 'उह्यमानः' इत्यत्र दीर्घादिः अपपाठः दीर्घप्राप्त्यभावात्। पादचारमपि न व्यभावयत् न ज्ञातवान्॥

১০। যানসঞ্চরণযোগ্য রাম ও লক্ষ্মণ পুরাবৃত্তকীর্ত্তননিপুণ পিতৃমিত্র বিশ্বামিত্রের নিকট অতীত বৃত্তান্ত সকল শ্রবণ করিতে করিতে এতই অনন্যমনা হইয়াছিলেন যে, তাঁহারা পদব্রজে গমনজন্য লেশমাত্র ক্লেশ অনুভব করিলেন না।

**तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः पतत्रिणः।**
**वायवः सुरभिपुष्परेणुभि-श्छायया च जलदाः सिषेविरे॥११॥**

११ अः। सरांसि रसवद्भिः अम्बुभिः, पतत्रिणः श्रुतिसुखैः कूजितैः वायवः सुरभिपुष्परेणुभिः जलदाः च छायया तौ सिषेविरे॥ वाक्य—सरोभिः पतत्रिभिः वायुभिः जलदैश्च तौ सिषेवाते॥

११। तौ राघवौ कर्म्मभूतौ सरांसि कर्तृणि रसवद्भिः मधुरैः अम्बुभिः सिषेविरे। पतत्रिणः पक्षिणः। सुखयन्तीति सुखानि। पचाद्यच्। श्रुतीनां सुखानि। तैः कूजितैः। वायवः सुरभिपुष्परेणुभिः। जलदाः छायया च। सिषेविरे इति सर्वत्र सम्बध्यते॥

১১। সরোবরসমূহ রসাল সলিল দ্বারা, পক্ষিসকল শ্রুতিসুখকর কূজন দ্বারা, সমীরণ সুরভি কুসুমরেণু দ্বারা এবং জলদজাল ছায়া দ্বারা তাঁহাদিগের সেবা করিতে লাগিল।

अम्भसां कमलशोभिनां तथा शाखिनाञ्च न परिश्रमच्छिदाम्।
दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः॥ १२

१२ अ:। तपस्विनः तयोः उभयोः लघुना दर्शनेन यथा प्रीतिम् आपुः कमलशोभिनाम् अम्भसां दर्शनेन तथा न, परिश्रमच्छिदां शाखिनां दर्शनेन च तथा न ( प्रीतिम् आपुः )॥ वाच्य—तपस्विभिः प्रीतिरापे॥

१२। तप एषामस्तीति तपस्विनः। 'तपःसहस्राभ्यां विनिः' इति विनिप्रत्ययः। लघुना इष्टेन। 'त्रिष्विष्टेऽल्पे लघुः' इत्यमरः। तयोः उभयोः कर्मीभूतयोः दर्शनेन यथा प्रीतिमापुः, तथा कमलशोभिनाम् अम्भसां दर्शनेन न आपुः। परिश्रमच्छिदां शाखिनां दर्शनेन च न आपुः॥

১২। প্রিয়দর্শন রাম লক্ষ্মণকে সন্দর্শন করিয়া বনবাসী ঋষিগণ যাদৃশ প্রীতিলাভ করিলেন, কমলশোভিত সলিল সকল কিংবা শ্রমাপহারী তরুনিকর নিরীক্ষণ করিয়াও তাঁহারা তাদৃশ সন্তোষ লাভ করিতে পারেন নাই।

स्थाणुदग्धवपुषस्तपोवनं प्राप्य दाशरथिरात्तकार्मुकः।
विग्रहेण मदनस्य चारुणा सोऽभवत्प्रतिनिधिर्न कर्मणा॥१३

१३ अ:। सः आत्तकार्मुकः दाशरथिः स्थाणुदग्धवपुषः मदनस्य तपोवनं प्राप्य चारुणा विग्रहेण प्रतिनिधिः अभवत्, कर्मणा न॥ वाच्य—तेन आत्मकार्मुकेण दाशरथिना प्रतिनिधिना अभूयत॥

१३। स आत्तकार्मुकः। दशरथस्यापत्यं पुमान् दाशरथिः रामः। 'अत इञ्' इतीञ्प्रत्ययः। स्थाणुः हरः 'स्थाणुः कीले हरे स्थिरे' इति विश्वः। तेन दग्धवपुषो मदनस्य तपोवनं प्राप्य चारुणा विग्रहेण कायेन। 'विग्रहः समरे काये' इति विश्वः। प्रतिनिधिः प्रतिकृतिः सदृशः अभवत् कर्मणा न पुनः देहेन। मदनसुन्दर इति भावः॥

पौराणिकी वार्त्ता।—पुरा किल ताड़कासुरपीड़ितेन भगवता वासवेन अनुरुध्यमानः कामः रतिदेव्या वसन्तेन च सह स्थाणुप्रस्थं गत्वा, महायोगिनः शिवस्य समाधिभेदाय यतते स्म तेन स रोषारुणितलोचनः शिवः भालनेत्रसमुद्भवेन वह्निना तं भस्मीचकार इति॥

১৩। ধনুর্দ্ধর দাশরথি রাম, হরকোপানলদগ্ধ মদনের তপোবনে উপস্থিত হইয়া মনোহর অঙ্গকান্তি দ্বারাই অনঙ্গের অনুরূপ হইলেন, কিন্তু কার্য্যতঃ তাঁহার সদৃশ হইলেন না।

तौ सुकेतुसुतया खिलीकृते
कौशिकाद्विदितशापया पथि।

निन्यतुः स्थलनिवेशिताटनी
लीलयैव धनुषी अधिज्यताम् ॥ १४

१४ अः। कौशिकात् विदितशापया सुकेतुसुतया पथि खिलीकृते तौ स्थलनिवेशिताटनी धनुषी लीलया एव अधिज्यतां निन्यतुः ॥ वाच्य—ताभ्यां स्थलनिवेशिताटनिभ्यां धनुषी अधिज्यता निन्ये।

१४। अत्र रामायणवचनम्—'अगस्त्यः परमः क्रुद्धस्ताड़कामभिशप्तवान्। पुरुषादी महायक्षी विकृता विकृतानना। इदं रूपमपाहाय दारुणं रूपमस्तु ते॥' इति। तदेतत् आह—विदितशापयेति। कौशिकादाख्यातुः। 'आख्यातोपयोगे' इत्यपादानात् पञ्चमी। विदितशापया सुकेतुसुतया ताड़कया खिलीकृते पथि। 'खिलमप्रहतं स्थानम्' इति हलायुधः। तौ रामलक्ष्मणौ। स्थले निवेशिते अटनी धनुष्कोटी याभ्यां तौ तथोक्तौ। (सन्तौ) 'कोटिरस्याटनिः' इत्यमरः। लीलयैव धनुषी। अधिकृते ज्ये मौर्व्यौ ययोस्ते अधिज्ये। 'ज्या मौर्वीमातृभूमिषु' इति विश्वः। तयोर्भावस्तत् तामधिज्यतां निन्यतुर्नीतवन्तौ। नयतेः द्विकर्मकः।

पौराणिकी वार्त्ता।—पुरा किल सुकेतुनामकस्य कस्यचित् यक्षस्य तनया सुन्द दैत्यतनयेन सुन्देन पर्यैमे, अथ कदाचित् निहते स्वामिनि ब्रह्मवरदृप्ता सहस्रमत्तहस्तिबलसम्पन्ना सा सुन्दपत्नी अगस्त्यमृषिं धर्षयितुमुद्यता, तेन स ऋषिः—"पुरुषादी महायक्षी दारुणां रूपमस्तु ते॥" इत्यादिकमभिशप्तवान् ॥

১৪। অভিশাপবশতঃ রাক্ষসশরীরধারিণী সুকেতুসুতা তাড়কা পথ অবরোধ করিয়া রহিয়াছে, রাম ও লক্ষ্মণ কুশিকতনয় বিশ্বামিত্রের নিকট ইহা জানিতে পারিয়া ভূতলে ধনুর অগ্রভাগ স্থাপিত করিয়া অবলীলাক্রমে তাহাতে গুণারোপণ করিলেন।

ज्यानिनादमथ गृह्णती तयोः
प्रादुरास बहुलक्षपाच्छविः।
ताड़का चलकपालकुण्डला
कालिकेव निविड़ा बलाकिनी ॥ १५

१५ अः। अथ तयोः ज्यानिनादं गृह्णती बहुलक्षपाच्छविः चलकपालकुण्डला ताड़का निविड़ा बलाकिनी कालिका इव प्रादुरास॥ वाच्य—ज्यानिनादं गृह्णत्या, बहुलक्षपाच्छव्या, चलकपालकुण्डलया, निविड़या, बलाकिन्या, कालिकयेव, ताड़कया प्रादुरासि ॥

१५। अथ तयोर्ज्यानिनादं गृह्णती जानती शृण्वतीत्यर्थः। बहुलक्षपाच्छविः कृष्णपक्षरात्रिवर्णा। 'बहुलः कृष्णपक्षे च' इति विश्वः। चले कपाले एव कुण्डले यस्याः सा तथोक्ता ताड़का। निविड़ा सान्द्रा

बलाकिनी बलाकावती । 'व्रीह्यादिभ्यश्च' इतीनिः । कालिकेव घनाव-लीव । कालिका योगिनीभेदे कार्ष्ण्ये गौर्य्यां घनावलौ' इति विश्वः । प्रादुरास प्रादुर्बभूव ॥

১৫। অনন্তর কৃষ্ণপক্ষীয় রজনীর ন্যায় কৃষ্ণবর্ণা তাড়কা তাঁহাদের জ্যানিঃস্বন শ্রবণ করিয়া কর্ণাবলম্বী নরকপালকুণ্ডল আন্দোলনপূর্ব্বক বকপংক্তিশোভিত নিবিড় কাল ঘনাবলীর ন্যায় আবির্ভূত হইল।

**तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्वनोग्रया ।**
**अभ्यभावि भरताग्रजस्तया वात्ययेव पितृकाननोत्थया ॥ १६**

१६ अः। तीव्रवेगधुतमार्गवृक्षया प्रेतचीवरवसा स्वनोग्रया तया पितृकाननोत्थया वात्यया इव भरताग्रजः अभ्यभावि ॥ वाच्य—तीव्रवेगधुतमार्गवृक्षा प्रेतचीवरवाः स्वनोग्रा पितृकाननोत्था वात्या इव सा भरताग्रजम् अभ्यभूत् ॥

१६। तीव्रवेगेण धुताः कम्पिता मार्गवृक्षा यया तयोक्तया। प्रेत-चीवराणि वस्त्र इति प्रेतचीवरवाः तया प्रेतचीवरवसा। वसतेराच्छादनार्थात् क्विप्। स्वनेन सिंहनादेन उग्रया तया ताड़कया। पितृकानने श्मशाने उत्था उत्पन्ना। 'आतश्चोपसर्गे' इत्युत्पूर्वात् तिष्ठतेः कर्त्तरि कप्रत्ययः। तया वात्ययेव वातसमूहेनेव। 'पाशादिभ्यो यः' इति यः। भरताग्रजो रामः अभ्यभावि अभिभूतः। कर्मणि लुङ्। तीव्रवेगेत्यादिविशेषणानि वात्यायामपि योज्यानि ॥

১৬। তখন প্রেতচীবরপরিহিতা বিকটস্বরা তাড়কা তীব্রগতিবেগে পথিপার্শ্বস্থ তরু সকল কম্পিত করিয়া শ্মশানোত্থিত বাত্যার ন্যায় রামচন্দ্রকে অভিভূত করিল।

**उद्यतैकभुजयष्टिमायतीं**
**श्रोणिलम्बिपुरुषान्त्रमेखलाम् ।**
**तां विलोक्य वनितावधे घृणां**
**पत्रिणा सह मुमोच राघवः ॥ १७**

१७ अः। राघवः उद्यतैकभुजयष्टिं श्रोणिलम्बिपुरुषान्त्रमेखलां ताम् आयतीं विलोक्य पत्रिणा सह वनितावधे घृणां मुमोच ॥ वाच्य—राघवेण घृणा मुमुचे ॥

१७। उद्यतोन्नमितैको भुज एव यष्टिः यस्याः ताम्। आयतीम् आयान्तीम्। इणो धातोः शतरि 'उगितश्च' इति ङीप्। श्रोणिलम्बिनी पुरुषाणाम् अन्त्राण्येव मेखला यस्याः ताम्। इति विशेषणद्वयेन अपि स्त्री-आततायित्वं सूचितम्। अतएव तां विलोक्य राघवः वनितावधे स्त्री-

बधनिमित्ते घृणां जुगुप्सां करुणां वा। 'जुगुप्साकरुणे घृणा' इत्यमरः। पत्त्रिणा इषुणा सह। 'पत्त्री रोप इषुर्द्वयोः' इत्यमरः। मुमोच मुक्तवान्। आततायिबधे मनुः—'आततायिनमायान्तं हन्यादेवाविचारयन्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥ नाततायिबधे दोषो हन्तुर्भवति कश्चन।' इति॥

১৭। নিতম্বদেশে পুরুষের অন্ত্রনির্ম্মিত-মেখলা-পরিহিতা উন্নত এক বাহুতে যষ্টিধারিণী তাড়কাকে আগমন করিতে দেখিয়া রাম একসময়েই নারীবধের নিমিত্ত ঘৃণা ও শর পরিত্যাগ করিলেন।

## यच्चकार विवरं शिलाघने ताड़कोरसि स रामसायकः।
## अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत्॥ १८

१८ अः। सः रामसायकः शिलाघने ताड़कोरसि यत् विवरं चकार तत् रक्षसाम् अप्रविष्टविषयस्य अन्तकस्य द्वारताम् अगमत्॥ वाच्य—तेन रामसायकेन विवरं चक्रे। तेन द्वारता अगामि॥

१८। सः रामसायकः शिलावद्घने सान्द्रे ताड़कोरसि यद्विवरं रन्ध्रं चकार तद्विवरं रक्षसामप्रविष्टविषयस्य अप्रविष्टरक्षोदेशस्य इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। 'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः। अन्तकस्य यमस्य द्वारतामगमत्। इयं प्रथमा रक्षोमृतिरिति भावः॥

১৮। সেই রামনিক্ষিপ্ত শর, শিলাতুল্য কঠিন তাড়কার বক্ষঃস্থলে বিদ্ধ হইয়া যে ছিদ্র করিয়া দিল, তাহাই যেন যমরাজের অপ্রবেশ্য রাক্ষসপ্রদেশে প্রবেশের দ্বারস্বরূপ হইল।

## बाणभिन्नहृदया निपेतुषी सा स्वकाननभुवं न केवलाम्।
## विष्टपत्रयपराजयस्थिरां रावणश्रियमपि व्यकम्पयत्॥ १९

१९ अः। सा बाणभिन्नहृदया निपेतुषी सती केवलां स्वकाननभुवं न व्यकम्पयत् (किन्तु) विष्टपत्रयपराजयस्थिरां रावणश्रियम् अपि (व्यकम्पयत्)॥ वाच्य—बाणभिन्नहृदयया, निपेतुष्या, तया, केवला स्वकाननभूः न, विष्टपत्रयपराजयस्थिरा रावणश्रीः अपि व्यकम्प्यत॥

१९। बाणभिन्नहृदया निपेतुषी निपतिता सती। 'क्वसुश्च' इति क्वसुप्रत्ययः। 'उगितश्च' इति ङीप्। सा केवलाम् एकाम्। 'निर्णीते केवलमिति। 'त्रिलिङ्गं त्वेककृत्स्नयोः' इत्यमरः। स्वकाननभुवं न व्यकम्पयत्। किन्तु विष्टपत्रयस्य लोकत्रयस्य पराजयेन स्थिरां रावणश्रियमपि व्यकम्पयत्, ताड़कावधश्रवणेन रावणस्यापि भयमुत्पन्नम् इति भावः॥

১৯। রামশরে বিদীর্ণহৃদয়া তাড়কার পতনকালে কেবল যে তাহার স্বীয় বন কম্পিত হইয়াছিল এমন নহে, ত্রিলোকবিজয়নিবন্ধন রাক্ষসরাজ রাবণের বিজয়লক্ষ্মীও বিচলিতা হইয়াছিলেন।

रामसन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २०

२० अ:। सा निशाचरी दुःसहेन राममन्मथशरेण हृदये ताड़िता गन्धवद्रुधिरचन्दनोक्षिता (सती) जीवितेशवसतिं जगाम ॥ वाच्य—ताड़ितया गन्धवद्रुधिरचन्दनोक्षितया तया निशाचर्य्या जीवितेशवसतिः जग्मे ॥

२०। अत्र ताड़काया अभिसारिकायाः समाधिरभिधीयते, सा निशासु चरतीति निशाचरी राक्षसी अभिसारिका च। दुःसहेन सोढुम् अशक्येन, राम एव मन्मथः। अन्यत्र अभिरामः मन्मथः। तस्य शरेण हृदये उरसि मनसि च। 'हृदयं मनउरसोः' इति विश्वः। ताड़िता अत्राङ्गा गन्धवद्दुर्गन्धि यत् रुधिरमसृक् तदेव चन्दनं तेन उक्षिता लिप्ता। अन्यत्र गन्धवती सुगन्धिनी ये रुधिरचन्दने कुङ्कुमचन्दने ताभ्याम् उक्षिता। 'रुधिरं कुङ्कुमासृजोः' इति उभयत्रापि विश्वः। जीवितेशस्य अन्तकस्य प्राणेश्वरस्य च वसतिं जगाम ॥

২০। নিশাচরী তাড়কা দুঃসহ রামরূপ মন্মথশরে বক্ষঃস্থলে প্রহৃত হইয়া অঙ্গে দুর্গন্ধি রুধিররূপ চন্দন লেপনপূর্ব্বক যমরাজের আবাসভূমিতে গমন করিল।

नैर्ऋतघ्नमथ मन्त्रवन्मुनेः
प्रापदस्त्रमवदानतोषितात्।
ज्योतिरिन्धननिपाति भास्करात्
सूर्य्यकान्त इव ताड़कान्तकः ॥ २१

२१ अ:। अथ ताड़कान्तकः अवदानतोषितात् मुनेः नैर्ऋतघ्नं मन्त्रवत् अस्त्रं सूर्य्यकान्तः भास्करात् इन्धननिपाति ज्योतिः इव प्रापत् ॥ वाच्य—ताड़कान्तकेन सूर्य्यकान्तेन इव प्रापि ॥

२१। अथानन्तरं ताड़कान्तको रामः। अवदानं पराक्रमः। 'पराक्रमोऽवदानं स्यात्' इति भागुरिः। तेन तोषितात् मुनेः। नैर्ऋतान् राक्षसान् हन्तीति नैर्ऋतघ्नम्। 'अमनुष्यकर्त्तृके च' इति टक्। मन्त्रवत् मन्त्रयुक्तमस्त्रम्। सूर्य्यकान्तो मणिविशेषो भास्करात्। इन्धनानि निपातयति इति इन्धननिपाति काष्ठदाहकं ज्योतिरिव प्रापत् प्राप्तवान् ॥

২১। অনন্তর সূর্য্যকান্ত মণি যেমন সূর্য্য হইতে কাষ্ঠদহনক্ষম তেজ প্রাপ্ত হয়, দা-
কান্তক রামও তদ্রূপ তদীয় বিক্রমদর্শনে প্রীত মহর্ষি বিশ্বামিত্রের নিকট নিশাচর-
বিনাশকর মন্ত্রযুক্ত অস্ত্র লাভ করিলেন।

**वामनाश्रमपदं ततः परं पावनं श्रुतमृषेरुपेयिवान् ।**
**उन्मनाः प्रथमजन्मचेष्टिता-न्यस्मरन्नपि बभूव राघवः ॥ २२**

२२ अः। ततः परं राघवः ऋषेः श्रुतं पावनं वामनाश्रमपदम् उपेयिवान् (सन्) प्रथमजन्म-
चेष्टितानि अस्मरन् अपि उन्मनाः बभूव ॥ वाच्य—उपेयुषा उन्मनसा अस्मरतापि राघवेण बभूवे।

२२। ततः परं राघवः। ऋषेः कौशिकात् आख्यातुः श्रुतं पावनं
शोधनं वामनस्य स्वपूर्वावतारविशेषस्य आश्रमपदम् उपेयिवान् उपगतः
सन्। 'उपेयिवाननाश्वाननूचानश्च' इति निपातः। प्रथमजन्मचेष्टि-
तानि रामवामनयोः ऐक्यात् स्मृतियोग्यान्यपि रामस्य अज्ञानावतारले
संस्कारदौर्बल्यात् अस्मरन्नपि उन्मना उत्सुको बभूव ॥

২২। অতঃপর রাম মহর্ষির মুখে শ্রুতপূর্ব্ব অতি পবিত্র বামনাশ্রমে গমন করিলেন।
তথায় গিয়া তাঁহার পূর্ব্বজন্মবৃত্তান্ত স্মৃতিপথে উদিত না হওয়ায় একান্ত উন্মনা হইয়া
পড়িলেন।

**आससाद मुनिरात्मनस्ततः शिष्यवर्गपरिकल्पितार्हणम् ।**
**बद्धपल्लवपुटाञ्जलिद्रुमं दर्शनोन्मुखमृगं तपोवनम् ॥ २३**

२३ अः। ततः मुनिः शिष्यवर्गपरिकल्पितार्हणं बद्धपल्लवपुटाञ्जलिद्रुमं दर्शनोन्मुखमृगम् आत्मनः
तपोवनम् आससाद ॥ वाच्य—मुनिना आससे ॥

२३। ततो मुनिः। शिष्यवर्गेण परिकल्पिता सज्जिता अर्हणा
पूजासामग्री यस्मिन् तत् तथोक्तम्। बद्धाः पल्लवपुटा एव अञ्जलयो यै-
स्ते तथाभूता द्रुमा यस्मिन्, तत् तथोक्तम्। दर्शनेन मुनिदर्शनेन उन्मुखा
मृगा यस्मिन् तत् आत्मनः तपोवनम् आससाद। एतेन विशेषणत्रये-
अतिथिसत्कारताच्छील्यविनयशान्तयः सूचिताः ॥

২৩। অনন্তর মহর্ষি বিশ্বামিত্র রাম লক্ষ্মণসহ স্বীয় আশ্রমে উপস্থিত হইয়া দেখি-
লেন, শিষ্যগণ পূজার সামগ্রী প্রস্তুত করিয়া রাখিয়াছেন, আশ্রম তরু সকল পল্লব-
রূপ অঞ্জলি বন্ধন করিয়া অভ্যর্থনার্থ দণ্ডায়মান এবং দর্শনোন্মুখ মৃগগণ তাঁহাদের প্রতি
অনিমেষলোচনে দৃষ্টিপাত করিতেছে।

**तत्र दीक्षितमृषिं ररक्षतु-**
**र्विघ्नतो दशरथात्मजौ शरैः ।**

लोकमन्धतमसात् क्रमोदितौ
रश्मिभिः शशिदिवाकराविव ॥ २४

२४ अ:। तत्र दशरथात्मजौ शरैः विघ्नतः दीक्षितम् ऋषिं क्रमोदितौ शशिदिवाकरौ रश्मिभिः अन्धतमसात् लोकम् इव ररक्षतुः ॥ वाच्य—क्रमोदिताभ्यां शशिदिवाकराभ्यां अन्धतमसात् लोक इव, दशरथात्मजाभ्यां दीक्षितः ऋषिः ररक्षे ॥

२४। तत्र तपोवने दशरथात्मजौ दीक्षितं दीक्षासंस्कृतम् ऋषिं शरैः विघ्नतो विघ्नेभ्यः। क्रमेण पर्य्यायेण रात्रिदिवसयोः उदितौ शशिदिवाकरौ रश्मिभिः अन्धतमसात् गाढ़ध्वान्तात्। 'ध्वान्ते गाढ़ेऽन्धतमसम्' इत्यमरः। 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच्प्रत्ययः। लोकमिव ररक्षतुः रक्षणप्रवृत्तौ अभूतामित्यर्थः ॥

২৪। পর্য্যায়োদিত সূর্য্য ও চন্দ্র যেমন কিরণসমূহ দ্বারা অন্ধকার হইতে লোক সকল রক্ষা করেন, তদ্রূপ দশরথাত্মজ রাম ও লক্ষ্মণ শরনিকর দ্বারা যজ্ঞদীক্ষিত মুনিগণকে বিঘ্ন হইতে রক্ষা করিলেন।

वीक्ष्य वेदिमथ रक्तविन्दुभिर्बन्धुजीवपृथुभिः प्रदूषिताम्।
सम्भ्रमोऽभवदपोढ़कर्मणामृत्विजां च्युतविकङ्कतस्रुचाम् ॥२५

२५ अ:। अथ बन्धुजीवपृथुभिः रक्तविन्दुभिः प्रदूषितां वेदिं वीक्ष्य अपोढ़कर्मणां च्युतविकङ्कतस्रुचाम् ऋत्विजां सम्भ्रमः अभवत् ॥ वाच्य—सम्भ्रमेण अभूयत ॥

२५। अथ बन्धुजीवपृथुभिः बन्धुजीवकुसुमस्थूलैः। 'रक्तकस्तु बन्धुको बन्धुजीवकः' इत्यमरः। रक्तविन्दुभिः प्रदूषिताम् उपहतां वेदिं वीक्ष्य अपोढ़कर्मणां त्यक्तव्यापाराणाम्। च्युता विकङ्कतस्रुचो येभ्यः तेषाम् ऋत्विजां याजकानां सम्भ्रमः अभवत्। विकङ्कतग्रहणं खदिराद्युपलक्षणम्। स्रुगादीनां खदिरादिप्रकृतिकत्वात्। स्रुगादिपात्रस्य एव विकङ्कतप्रकृतिकत्वात्। 'विकङ्कतः स्रुवा वृक्षः' इत्यमरः। यद्वा स्रुङ्मात्रस्य विकङ्कतप्रकृतिकत्वमस्तु उभयत्रापि शास्त्रसम्भवात्। यथाह भगवान् आपस्तम्बः—'खादिरस्रुचः पर्णमयीः जुहुयात् वैकङ्कतीः स्रुचो वा' इति ॥

২৫। তখন বন্ধুজীবপুষ্পসদৃশ স্থূল স্থূল শোণিতবিন্দু দ্বারা যজ্ঞবেদী দূষিত হইতেছে দেখিয়া ঋত্বিগ্‌গণ যজ্ঞকার্য্য পরিত্যাগ করিলেন এবং ভীতিবশতঃ তাঁহাদের হস্ত হইতে বিকঙ্কতনির্ম্মিত দর্ব্বী স্খলিত হইল।

उन्मुखः सपदि लक्ष्मणाग्रजो बाणमाश्रयमुखात् समुद्धरन्।
रक्षसां बलमपश्यदम्बरे गृध्रपक्षपवनेरितध्वजम् ॥ २६

२६ अ: । सपदि लक्ष्मणाग्रज: आश्रयमुखात् वाणं समुद्धरन् उन्मुख: अम्बरे गृध्रपक्षपवनेरित-ध्वजं रक्षसां बलम् अपश्यत् ॥ वाच्य—लक्ष्मणाग्रजेण वाणं समुद्धरता उन्मुखेन अदृश्यत ॥

२६ । सपदि लक्ष्मणाग्रजो राम: आश्रयमुखात् तूणीरमुखात् वाणं समुद्धरन् उन्मुख ऊर्द्ध्वमुख: अम्बरे आकाशे । गृध्रपक्षपवनै: ईरिता: कम्पिता ध्वजा यस्य तत् तथोक्तम् । रक्षसां दुर्निमित्तसूचनमेतत् । तदुक्तं शकुनार्णवे—'आसन्नमृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्द्ध्वभागे' इति । रक्षसां बलमपश्यत् ॥

২৬। লক্ষ্মণাগ্রজ রাম তৎক্ষণাৎ তূণীর হইতে বাণগ্রহণপূর্ব্বক উর্দ্ধমুখ হইয়া দেখিলেন,—দেবদ্বেষী রাক্ষস সৈন্যগণ আকাশপথে বিচরণ করিতেছে এবং গৃধ্র-শকুনবর্গের পক্ষপবনে উহাদের ধ্বজপতাকা সকল বিকম্পিত হইতেছে।

**तत्र यावधिपती मखद्विषां तौ शरव्यमकरोत् स नेतरान् ।**
**किं महोरगविसर्पिविक्रमो राजिलेषु गरुड़: प्रवर्त्तते ॥ २७**

२७ अ: । स: (राम:) तत्र (बले) यौ मखद्विषाम् अधिपती तौ शरव्यम् अकरोत्, इतरान् न । महोरगविसर्पिविक्रम: गरुड़: राजिलेषु प्रवर्त्तते किम् ? ॥ वाच्य—तेन तौ शरव्यम् अक्रियेताम् इतरे न (अक्रियन्त) ॥

२७ । स रामस्तत्र रक्षसां बले यौ मखद्विषामधिपती तौ सुबाहु-मारीचौ शरव्यं लक्ष्यम् अकरोत् । 'वेध्यं लक्ष्यं शरव्यञ्च' इति हलायुध: । इतरान्न अकरोत् । तथाहि—महोरगविसर्पिविक्रमो गरुड़: गरुत्मान् राजिलेषु जलव्यालेषु प्रवर्त्तते किम् ? न प्रवर्त्तत इत्यर्थ: । 'अलगर्दो जलव्याल: समौ राजिलडुण्डुभौ' इत्यमर: ॥

২৭। অনন্তর তিনি যজ্ঞদ্বেষী অন্যান্য রাক্ষসকে লক্ষ্য না করিয়া প্রথমে তাঁহাদের অধিপতি মারীচ ও সুবাহুর প্রতি বাণ নিক্ষেপ করিলেন, কেননা, মহাভুজঙ্গ-বিনাশক খগরাজ গরুড় কদাচ ডুণ্ডুভের প্রতি স্বীয় বিক্রম প্রকাশ করেন না।

**सोऽस्त्रमुग्रजवमस्त्रकोविद: सन्दधे धनुषि वायुदैवतम् ।**
**तेन शैलगुरुमप्यपातयत् पाण्डुपत्रमिव ताड़कासुतम् ॥ २८**

२८ अ: । अस्त्रकोविद: स: उग्रजवं वायुदैवतम् अस्त्रं धनुषि सन्दधे । तेन शैलगुरुम् अपि ताड़कासुतं पाण्डुपत्रम् इव अपातयत् ॥ वाच्य—अस्त्रकोविदेन सन्दधे, शैलगुरु: ताड़कासुत: पाण्डुपत्रमिव अपात्यत ॥

२८ । अस्त्रकोविद: अस्त्रज्ञ: स राम:, उग्रजवम् उत्कटजवं वायुर्दैवतं यस्य तत् वायव्यमस्त्रं धनुषि सन्दधे संहितवान् । कर्त्तरि लिट् । तेन

...वेगेन शैलवद्गुरुमपि ताड़कासुतं मारीचं, पाण्डुपत्रमिव परिणतपर्णमिव ...इत्यर्थः । अपातयत् पातितवान् ॥

२८। अस्त्रविद्याविशारद राम तথন শরাসনে অতি বেগশালী এক বায়ব্য অস্ত্র ...সন্ধানপূর্ব্বক পর্ব্বততুল্য সারবান্ তাড়কাতনয় মারীচকে বৃক্ষের পরিপক্ক পত্রের ন্যায় ...ভূতলে পাতিত করিলেন।

...यः सुबाहुरिति राक्षसोऽपरस्तत्र तत्र विससर्प मायया ।
...तं क्षुरप्रशकलीकृतं कृती पत्रिणां व्यभजदाश्रमाद्बहिः ॥ २९

२९ अ०। 'सुबाहुः' इति यः अपरः राक्षसः तत्र तत्र मायया विससर्प, क्षुरप्रशकलीकृतं तम् ...कृती आश्रमात् बहिः पत्रिणाम् व्यभजत् ॥ वाच्य—सुबाहुना इति अपरेण राक्षसेन विससृपे, कृतिना ...क्षुरप्रशकलीकृतः स व्यभज्यत ॥

२९। सुबाहुरिति यः अपरो राक्षसः तत्र तत्र मायया शम्बरविद्यया विससर्प सञ्चचार। क्षुरप्रैः शकलीकृतं खण्डीकृतं तं सुबाहुं कृती कुशलो रामः। 'कृती च कुशलः समौ' इत्यमरः। आश्रमात् बहिः पत्रिणां पक्षिणाम्। 'पत्रिणौ शरपक्षिणौ' इत्यमरः। व्यभजत् विभज्य दत्तवान् इत्यर्थः ॥

২৯। সুবাহু নামক যে এক অপর নিশাচর মায়াজাল বিস্তারপূর্ব্বক সেই স্থানে বিচরণ করিতেছিল, রিপুসংহারদক্ষ রাম তাহাকে ক্ষুরপ্র অস্ত্র দ্বারা সংহার করিয়া আশ্রমবহির্ভাগে বিহঙ্গমগণের ভক্ষণার্থ বিভাগ করিয়া দিলেন।

इत्यपास्तमखविघ्नयोस्तयोः सांयुगीनमभिनन्द्य विक्रमम् ।
ऋत्विजः कुलपतेर्यथाक्रमं वाग्यतस्य निरवर्त्तयन् क्रियाः॥३०

३० अ०। ऋत्विजः इति अपास्तमखविघ्नयोः तयोः सांयुगीनं विक्रमम् अभिनन्द्य वाग्यतस्य कुलपतेः क्रियाः यथाक्रमं निरवर्त्तयन् ॥ वाच्य—ऋत्विग्भिः क्रियाः निरवर्त्त्यन्त ॥

३०। इति अपास्तमखविघ्नयोः तयोः राघवयोः संयुगे रणे साधुः सांयुगीनः तम्। 'प्रतिजनादिभ्यः खञ्' इति खञ्प्रत्ययः। 'सांयुगीनो रणे साधुः' इत्यमरः। विक्रममभिनन्द्य, ऋत्विजो याज्ञिकाः। वाचि यतो वाग्यतो मौनी तस्य कुलपतेः मुनिकुलेश्वरस्य क्रियाः क्रतुक्रियाः यथाक्रमं निरवर्त्तयन् निष्पादितवन्तः ॥

৩০। এইরূপে সেই যজ্ঞবিঘ্ন শান্তি করিলে পর তপস্বিগণ তাঁহাদের যুদ্ধবিক্রমের প্রশংসা করিতে লাগিলেন এবং ঋত্বিগ্‌গণ বাগ্‌যত কুলপতি বিশ্বামিত্রের যজ্ঞকার্য্য যথাক্রমে সম্পন্ন করিলেন।

**तौ प्रणामचलकाकपक्षकौ भ्रातराववभृथाप्लुतो मुनिः।**
**आशिषामनुपदं समस्पृशद्दर्भपाटिततलेन पाणिना ॥ ३१**

३१ अ:। अवभृथाप्लुतः मुनिः प्रणामचलकाकपक्षकौ तौ भ्रातरौ आशिषामनुपदं दर्भपाटिततलेन पाणिना समस्पृशत् ॥ वाच्य—अवभृथाप्लुतेन मुनिना समस्पृश्येताम् ॥

३१। अवभृथे दीक्षान्ते आप्लुतः स्नातो मुनिः। 'दीक्षान्तोऽवभृथो यज्ञे' इत्यमरः। प्रणामेन चलकाकपक्षकौ चञ्चलचूड़ौ तौ भ्रातरौ आशिषामनुपदमन्वग् दर्भपाटिततलेन कुशक्षतान्तःप्रदेशेन पवित्रेण इत्यर्थः। पाणिना समस्पृशत् समस्पृष्टवान्। सन्तोषादिति भावः॥

৩১। অনন্তর অবভৃতস্নানান্তে মহর্ষি বিশ্বামিত্র চঞ্চলকাকপক্ষধারী প্রণামরত ভ্রাতৃদ্বয়কে আশীর্ব্বাদ করিয়া কুশক্ষত পাণিতল দ্বারা তাঁহাদের শরীর স্পর্শ করিলেন।

**तं न्यमन्त्रयत सम्भृतक्रतुर्मैथिलः स मिथिलां व्रजन् वशी।**
**राघवावपि निनाय बिभ्रतौ तद्धनुःश्रवणजं कुतूहलम् ॥ ३२**

३२ अ:। सम्भृतक्रतुः मैथिलः तं न्यमन्त्रयत वशी सः मिथिलां व्रजन् तद्धनुःश्रवणजं कुतूहलं बिभ्रतौ राघवौ अपि निनाय॥ वाच्य—सम्भृतक्रतुना मैथिलेन स न्यमन्त्र्यत। वशिना तेन मुनिना मिथिलां व्रजता बिभ्रतौ राघवौ (मिथिलां) निन्याते॥

३२। सम्भृतक्रतुः सङ्कल्पितसम्भारः। मिथिलायां भवो मैथिलः जनकः तं विश्वामित्रं न्यमन्त्रयत् आहूतवान्। वशी स मुनिः मिथिलां जनकनगरीं व्रजन् तस्य जनकस्य यत् धनुः तत् श्रवणजं कुतूहलं बिभ्रतौ राघवौ अपि निनाय नीतवान्॥

৩২। তৎকালে যজ্ঞদীক্ষিত মিথিলাধিপতি রাজা জনক তাঁহাকে তদীয় যজ্ঞে নিমন্ত্রণ করিয়াছিলেন, তখন সেই জিতেন্দ্রিয় মুনি, মিথিলায় গমনকালে ধনুর্ভঙ্গশ্রবণে কুতূহলান্বিত রাম ও লক্ষ্মণকে সমভিব্যাহারে লইয়াছিলেন।

**तैः शिवेषु वसतिर्गताध्वभिः सायमाश्रमतरुष्वगृह्यत।**
**येषु दीर्घतपसः परिग्रहो वासवक्षणकलत्रतां ययौ ॥ ३३**

३३ अ:। गताध्वभिः तैः सायं शिवेषु आश्रमतरुषु वसतिः अगृह्यत येषु दीर्घतपसः परिग्रहः वासवक्षणकलत्रतां ययौ॥ वाच्य—गताध्वानस्ते वसतिम् अगृह्णन्। परिग्रहेण वासवक्षणकलत्रता यये॥

३३। गताध्वभिः तैः त्रिभिः सायं शिवेषु रम्येषु आश्रमतरुषु वसतिः

...म् अगच्छत। येषु आश्रमतरुषु दीर्घतपसो गौतमस्य परिग्रहः 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः। अहल्येति ... वासवस्य इन्द्रस्य क्षणकलत्रतां ययौ॥

...৩। অনন্তর তাঁহারা ক্রমে অনেক পথ অতিক্রম করিয়া সায়ংসময়ে দীর্ঘতপা ...গৌতমের রমণীয় আশ্রমতরুতলে অবস্থান করিলেন, ঐ আশ্রমে গৌতমপত্নী ...ক্ষণকালমাত্র সুররাজের কলত্রভাব প্রাপ্ত হইয়াছিলেন।

...त्यपद्यत चिराय यत् पुनश्चारु गौतमवधूः शिलामयी।
...वपुः स किल किल्बिषच्छिदां रामपादरजसामनुग्रहः॥३४

...यः। शिलामयी गौतमवधूः चारु स्वं वपुः चिराय पुनः यत् प्रत्यपद्यत, सः किल्बिषच्छिदां ...रजसाम् अनुग्रहः किल॥ वाच्य—शिलामय्या गौतमवध्वा यत् प्रत्यपद्यत तेन अनुग्रहेण ...त)॥

३४। शिलामयी भर्त्तृशापात् शिलात्वं प्राप्ता गौतमवधूः अहल्या ...स्वं वपुः चिराय पुनः प्रत्यपद्यत प्राप्तवती यत्। स किल्बिषच्छिदां ...पहारिणाम्। 'पापं किल्बिषकल्मषम्' इत्यमरः। रामपादरजसाम् ...ग्रहः किल प्रसादः किलेति श्रूयते॥

...पौराणिकी वार्त्ता।—पुरा किल भगवान् गौतमः छद्मवेशिना इन्द्रेण सह स्वपत्न्या अहल्यायाः ...चारम् अवगम्य कोपेन तावत् 'शिलामयी भूत्वा अस्मिन्नेव तिष्ठ, यावत् रामपादस्पर्शेन स्वं वपुः ...प्स्यसी'ति शशाप॥

৩৪। শিলাময়ী গৌতমপত্নী অহল্যা বহুকালের পর পুনরায় যে স্বীয় মনোজ্ঞ ...দেহ প্রাপ্ত হইয়াছিলেন, সে কেবল পাপাপহারী রামপদধূলির অনুগ্রহ।

...घवान्वितमुपस्थितं मुनिं तं निशम्य जनको जनेश्वरः।
...र्थकामसहितं सपर्य्यया देहबद्धमिव धर्ममभ्यगात्॥३५

...यः। जनकः जनेश्वरः राघवान्वितं तं मुनिम् उपस्थितं निशम्य अर्थकामसहितं देहबद्धं ...म् इव सपर्य्यया अभ्यगात्॥ वाच्य—जनेश्वरेण जनकेन, अर्थकामसहितः देहबद्धः धर्मः इव ...वान्वितः उपस्थितः स मुनिः अभ्यगायि॥

३५। राघवाभ्यामन्वितं युक्तमुपस्थितमागतं तं मुनिं जनको जनेश्वरो ...म्य। अर्थकामाभ्यां सहितं देहबद्धं बद्धदेहम्, मूर्त्तिमन्तमित्यर्थः। ...हिताम्यादित्वात् साधुः। धर्ममिव। सपर्य्यया अभ्यगात् प्रत्युद्गतवान्॥

...৫। প্রজানাথ জনক—রাম ও লক্ষ্মণসহ মহর্ষি বিশ্বামিত্র আগমন করিয়াছেন ...য়া অর্ঘ্যগ্রহণপূর্ব্বক অর্থ ও কামসহকৃত সাক্ষাৎ ধর্ম্মের ন্যায় তাঁহার প্রত্যুদ্গমন ...রিলেন।

तौ विदेहनगरीनिवासिनां गां गताविव दिवः पुनर्वसू।
मन्यते स्म पिबतां विलोचनैः पक्ष्मपातमपि वञ्चनां मनः॥३६॥

३६ अ:। दिवः गां गतौ पुनर्वसू इव (स्थितौ) विलोचनैः पिबतां विदेहनगरीनिवासिनां मनः पक्ष्मपातम् अपि वञ्चनां मन्यते स्म॥ वाच्य—मनसा पक्ष्मपातोऽपि वञ्चना मन्यते स्म।

३६। दिवः सुरवर्त्मनः आकाशात्। 'द्यौः स्वर्गसुरवर्त्मनोः' विश्वः। गां भुवं गतौ। 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्यो स्त्रियां पुंसि गौः' इत्यमरः। पुनर्वसू इव तन्नामकनक्षत्राधिदेवते इव स्थितौ। तौ राघवौ विलोचनैः पिबताम्। अत्यास्थया पश्यताम् इत्यर्थः। विदेहनगरी मिथिला। तन्निवासिनां मनः कर्त्तृ पक्ष्मपातम् निमिषमपि तद्दर्शनप्रतिबन्धकत्वात् वञ्चनां विड़म्बनां मन्यते स्म मेने। 'लट् स्म' इति भूतार्थे लट्॥

৩৬। মিথিলাবাসীরা নভোমণ্ডল হইতে ভূতলে অবতীর্ণ পুনর্ব্বসুদ্বয়সদৃশ ভ্রাতৃদ্বয়কে সতৃষ্ণনয়নে নিরীক্ষণ করিতে লাগিল; তখন তাহারা চক্ষুর পক্ষ্মপাত দর্শনব্যাপারের প্রতিবন্ধক বলিয়া মনে করিল।

यूपवत्यवसिते क्रियाविधौ कालवित् कुशिकवंशवर्द्धनः।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयाम्बभूव सः॥३७॥

३७ अ:। यूपवति क्रियाविधौ अवसिते (सति) कालवित् कुशिकवंशवर्द्धनः सः रामम् इष्वसनदर्शनोत्सुकं मैथिलाय कथयाम्बभूव॥ वाच्य—कालविदा कुशिकवंशवर्द्धनेन तेन इष्वसनदर्शनोत्सुकः रामः मैथिलाय कथयाञ्चक्रे बभूवे वा॥

३७। यूपवति क्रियाविधौ कर्मानुष्ठाने क्रतौ इत्यर्थः। अवसिते समाप्ते सति, कालवित् अवसरज्ञः कुशिकवंशवर्द्धनः स मुनिः रामम् अस्यते अनेन इति असनम्। इषूणाम् असनम् इष्वसनं चापः तस्य दर्शने उत्सुकं मैथिलाय जनकाय कथयाम्बभूव कथितवान्॥

৩৭। অনন্তর রাজা জনকের যূপচিহ্নিত যাগক্রিয়া সম্পন্ন হইলে কুশিকবংশবর্দ্ধন কালবিৎ বিশ্বামিত্র সেই মিথিলাপতিকে বলিলেন,—রামচন্দ্র আপনার ধনু দর্শনের জন্য সাতিশয় উৎসুক হইয়াছেন।

तस्य वीक्ष्य ललितं वपुः शिशोः
पार्थिवः प्रथितवंशजन्मनः।
स्वं विचिन्त्य च धनुर्दुरानमं
पीड़ितो दुहितृशुल्कसंस्थया॥ ३८

३८ अ:। पार्थिव: प्रथितवंशजन्मन: शिशो: तस्य ललितं वपुः वीक्ष्य, स्वं दुरानमं धनु: विचिन्त्य दुहितृशुल्कसंस्थया पीड़ित: ॥ वाच्य —दुहितृशुल्कसंस्था पार्थिवं पीड़ितवती ॥

३८। पार्थिवो जनकः। प्रथितवंशे जन्म यस्य तथोक्तस्य। एतेन सम्पत्तिरुक्ता। शिशो: तस्य रामस्य ललितं कोमलं वपु: वीक्ष्य, स्वं स्वीयं दुरानमम् आनमयितुम् अशक्यम्। नमेर्ण्यन्तात् खल्। धनु- र्विचिन्त्य च, दुहितृशुल्कं कन्यामूल्यं जामातृदेयम्। 'शुल्कं घट्टादिदेये जामातुर्वन्धकेऽपि च' इति विश्वः। तस्य धनुर्भङ्गरूपस्य संस्थया व्यवस्थया। 'संस्था स्थितौ शरे नाशे' इति विश्वः। पीड़ितो बाधितः। दुष्करत्वादुना रामेण दुष्करमिति दु:खित इति भावः ॥

अब्रवीच्च भगवन् मतङ्गजैर्यद्बृहद्भिरपि कर्म दुष्करम्।
नाहमनुमन्तुमुत्सहे मोघवृत्तिकलभस्य चेष्टितम् ॥ ३९

३९ अ:। अब्रवीच्च—हे भगवन्! बृहद्भि: मतङ्गजै: अपि यत् कर्म दुष्करं तव कलभस्य मोघवृत्ति चेष्टितम् अनुमन्तुम् अहं न उत्सहे ॥ वाच्य—पार्थिवेन अोच्यत। मया अनुमन्तुं न उत्सह्यते ॥

३९। अब्रवीच्च मुनिमिति शेष:। किमिति। हे भगवन् मुने! बृहद्भि: मतङ्गजै: महागजैरपि दुष्करं यत् कर्म तव कर्मणि कलभस्य बालगजस्य। 'कलभ: करिशावकः' इत्यमरः। मोघवृत्ति व्यर्थव्यापारं चेष्टितं साहसमनुमन्तुमहं नोत्सहे ॥

৩৮—৩৯। বিখ্যাতবংশসম্ভূত সেই শিশু রামের সুকুমার শরীর দর্শন করিয়া রাজা জনক তাঁহা দ্বারা ধনুর আনমন অসম্ভব জানিয়া স্বীয় তনয়ার পণহেতু ব্যথিত হইলেন এবং বলিলেন,—ভগবন্! বৃহৎ হস্তীদিগের দুষ্কর কর্ম্মে করিশাবকের বিফল প্রবৃত্ত অনুমোদন করিতে আমি উৎসাহিত হইতেছি না।

ह्रेपिता हि बहवो नरेश्वरा-
स्तेन तात धनुषा धनुर्भृतः।
ज्यानिघातकठिनत्वचो भुजान्
स्वान् विधूय धिगिति प्रतस्थिरे ॥ ४०

४० अ:। हे तात! तेन धनुषा बहव: धनुर्भृत: नरेश्वरा: ह्रेपिता: हि ते ज्यानिघातकठिन- त्वच: स्वान् भुजान् धिक् इति विधूय प्रतस्थिरे॥ वाच्य—तत् धनु: बहून् धनुर्भृत: नरेश्वरान् ह्रेपितवत्। बहुभि: धनुर्भृद्भि: नरेश्वरै: ह्रेपितै: प्रतस्थे ॥

४०। हे तात! तेन धनुषा बहवो धनुर्भृतो नरेश्वरा: ह्रेपिता लज्जां प्रापिता हि। जिह्रेतेर्धातोर्ण्यन्तात् कर्मणि क्तः। 'अर्त्तिह्री—

इत्यादिना पुगागमः। ते नरेश्वरा ज्यानिघातैः कठिनत्वचः स्वान् भु
धिगिति विधूय अवमत्य प्रतस्थिरे प्रस्थिताः ॥

৪০। হে তাত! ধনুর্দ্ধারী অনেক বীর নরপতি এই ধনুর নিকটে লজ্জাপ্রাপ্ত
স্ব স্ব জ্যাঘাতকঠিন ভুজদণ্ডে ধিক্কার দিয়া প্রস্থান করিয়াছেন।

**प्रत्युवाच तमृषिर्निशम्यतां सारतोऽयमथवा गिरा कृत
चाप एव भवतो भविष्यति व्यक्तशक्तिरशनिर्गिराविव ॥**

४१ अः। ऋषिः तं प्रत्युवाच—अयं सारतः निशम्यताम् अथवा गिरा कृतं गिरौ अश
चापे एव भवतः व्यक्तशक्तिः भविष्यति ॥ वाच्य—ऋषिणा स प्रत्यूचे। इमं निशामय।
गिराविव चापे व्यक्तशक्तिना भविष्यते ॥

४१। ऋषिस्तं प्रत्युवाच। किमिति? अयं रामः सारतो ब
निशम्यतां श्रूयताम्। अथवा गिरा सारवर्णनया कृतमलम्। गीर्न वक्त
इत्यर्थः। 'युगपर्य्याप्तयोः कृतम्' इत्यमरः। अव्ययं चैतत्।
निवारणनिषेधयोः' इति गणव्याख्याने। गिरेति करणे तृतीया नि
क्रियां प्रति करणत्वात्। किन्तु अशनिः वज्रो गिरौ इव, चापे धनु
भवतः तव व्यक्तशक्तिर्दृष्टसारो भविष्यति ॥

৪১। তখন মুনি প্রত্যুত্তরে রাজা জনককে কহিলেন,—ইহাঁর বলের বিবর
করিতেছি শ্রবণ করুন; অথবা বাক্য দ্বারা ইহাঁর পরিচয়ে প্রয়োজন নাই, পর্ব্ব
অশনির ন্যায় ভবদীয় এই শরাসনদ্বারাই রামের সারবত্তা প্রকাশিত হউক।

**एवमाप्तवचनात् स पौरुषं काकपक्षकधरेऽपि राघवे।
श्रद्दधे त्रिदशगोपमात्रके दाहशक्तिमिव कृष्णवर्त्मनि ॥४**

४२ अः। सः एवमाप्तवचनात् काकपक्षकधरे अपि राघवे पौरुषं त्रिदशगोपमात्रके कृष्ण
दाहशक्तिम् इव श्रद्दधे ॥ वाच्य—तेन दाहशक्तिरिव पौरुषं श्रद्दधे ॥

४२। एवम् आप्तस्य मुनेर्वचनात् स जनकः काकपक्षधरे बाले
राघवे पुरुषस्य कर्म पौरुषं पराक्रमम्। 'हायनान्तयुवादिभ्योऽण्'
युवादित्वादण्। 'पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि' इति विश्
त्रिदशगोप इन्द्रगोपकीटः प्रमाणमस्य त्रिदशगोपमात्रः। 'प्रमाणे
मच्'—इत्यादिना मात्रच्प्रत्ययः। ततः स्वार्थे कप्रत्ययः। तस्मिन् कृ
वर्त्मनि वह्नौ दाहशक्तिमिव। श्रद्दधे विश्वस्तवान् ॥

৪২। রাজা মহর্ষির এবংবিধ বিশ্বস্ত বাক্য শ্রবণ করিয়া ইন্দ্রগোপকীটপরি
বহ্নিতেও দাহিকা শক্তির ন্যায় কাকপক্ষধর রাঘবেও পরাক্রম সম্ভবপর, ইহা বি
করিলেন।

व्यादिदेश गणशोऽथ पार्श्वगान् कार्मुकाभिहरणाय मैथिलः ।
तैजसस्य धनुषः प्रवृत्तये तोयदानिव सहस्रलोचनः ॥ ४३

४३ अ:। अथ मैथिलः कार्मुकाभिहरणाय पार्श्वगान् सहस्रलोचनः तैजसस्य धनुषः प्रवृत्तये तोयदानिव गणशः व्यादिदेश ॥ वाच्य—सहस्रलोचनेन तोयदा इव, मैथिलेन पार्श्वगाः व्यादिदिशिरे ॥

४३। अथ मैथिलः पार्श्वगान् पुरुषान् कार्मुकाभिहरणाय कार्मुकमानेतुम्। 'तुमर्थाच्च'—इति चतुर्थी। सहस्रलोचनः इन्द्रः तैजसस्य तेजोमयस्य धनुषः प्रवृत्तये आविर्भावाय तोयदान् मेघानिव गणान् गणान् गणशः। 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्ययः। व्यादिदेश आदिदेश ॥

४३। অনন্তর দেবরাজ যেমন স্বীয় তেজোময় ধনুর আবিষ্কার জন্য জলধরদিগকে আদেশ করেন, তদ্রূপ মিথিলাপতি জনক পার্শ্বচরগণকে সেই ধনুর আনয়ন নিমিত্ত অনুমতি করিলেন।

तत्प्रसुप्तभुजगेन्द्रभीषणं वीक्ष्य दाशरथिराददे धनुः ।
विद्रुतक्रतुमृगानुसारिणं येन बाणमसृजद्वृषध्वजः ॥ ४४

४४ अ:। वृषध्वजः येन विद्रुतक्रतुमृगानुसारिणं बाणम् असृजत्, दाशरथिः प्रसुप्तभुजगेन्द्रभीषणं तत् धनुः वीक्ष्य आददे ॥ वाच्य—दाशरथिना आददे। वृषध्वजेन विद्रुतक्रतुमृगानुसारी बाणः असृज्यत ॥

४४। दाशरथिः रामः प्रसुप्तभुजगेन्द्र इव भीषणं भयङ्करं तद्धनुर्वीक्ष्य आददे जग्राह। वृषो ध्वजः चिह्नं यस्य सः शिवः येन धनुषा, क्रतुरेव मृगः, विद्रुतं पलायितं क्रतुमृगमनुसरति। ताच्छील्ये णिनिः। तं विद्रुतक्रतुमृगानुसारिणं बाणमसृजत् मुमोच ॥

पौराणिकी वार्त्ता।—पुरा किल सतीविरहकातरेण भगवता रुद्रेण दक्षस्य यज्ञं विध्वंसितुम् आरेभे, तदयदा पिनाकपाणेः रौद्रीं मूर्तिम् अवलोक्य भयेन यज्ञः मृगरूपमवलम्ब्य पलायितुमारेभे, तदा रुद्रस्तं पलायमानम् उद्दिश्य अनेन धनुषा बाणमसृजत् इति।

४४। ভগবান্ বৃষভধ্বজ যে শরাসন দ্বারা মৃগরূপধারী পলায়মান যজ্ঞের প্রতি শর নিক্ষেপ করিয়াছিলেন; দশরথতনয় রাম, নিদ্রিত ভুজগরাজ বাসুকির ন্যায় অতিভীষণ সেই শরাসন দর্শন করিয়া তাহা গ্রহণ করিলেন।

आततज्यमकरोत् स संसदा विस्मयस्तिमितनेत्रमीक्षितः ।
शैलसारमपि नातियत्नतः पुष्पचापमिव पेशलं स्मरः ॥ ४५

४५ श्र: । सः संसदा विस्मयस्तिमितनेत्रम् ईक्षितः ( सन् ) शैलसारम् अपि ( धनुः ) स्मरः पेशलं पुष्पचापम् इव नातियत्नतः आततज्यम् अकरोत् ॥ वाच्य—स्मरेण पेशलः पुष्पचापः इव ईक्षितेन तेन अक्रियत ॥

४४। स रामः संसदा सभया विस्मयेन स्तिमिते नेत्रे यस्मिन् कर्मणि तद्यथा स्यात् तथा ईक्षितः सन्। शैलस्य इव सारो यस्य तच्छैलसारमपि धनुः। स्मरः पेशलं कोमलं पुष्पचापमिव। नातियत्नतः नातियत्नात् नञर्थस्य नशब्दस्य सुप्सुपेति समासः। आततज्यम् अधिज्यम् अकरोत्।

४৫। মনোভবের সুকোমল কুসুমশরাসনে জ্যারোপণের ন্যায় রাম অবলীলাক্রমে শৈলতুল্য সুদৃঢ় সেই ধনুতে গুণারোপণ করিলেন। তখন সভাস্থিত লোকসকল বিস্ময় সহকারে নির্নিমেষনয়নে তাঁহাকে নিরীক্ষণ করিতে লাগিল।

**भज्यमानमतिमात्रकर्षणात्तेन वज्रपरुषस्वनं धनुः।**
**भार्गवाय दृढमन्यवे पुनः क्षत्रमुद्यतमिव न्यवेदयत् ॥ ४६**

४६ श्र: । तेन अतिमात्रकर्षणात् भज्यमानं वज्रपरुषस्वनं धनुः दृढमन्यवे भार्गवाय क्षत्रं पुनः उद्यतं न्यवेदयत् इव ॥ वाच्य—भज्यमानेन वज्रपरुषस्वनेन धनुषा न्यवेद्यत इव ॥

५६। तेन रामेण अतिमात्रकर्षणात् भज्यमानम् अतएव वज्रपरुषस्वनम्। वज्रस्येव परुषः स्वनो यस्य तत्। धनुः कर्तृ। दृढमन्यवे दृढक्रोधाय। 'मन्युः क्रोधे क्रतौ दैन्ये' इति विश्वः। भार्गवाय क्षत्रं क्षत्रकुलं पुनरुद्यतं न्यवेदयदिव ज्ञापयामासेव ॥

৪৬। রামের অতিমাত্র কর্ষণে বজ্রসদৃশ কঠোরনিস্বন হরধনু ভগ্ন হইল। তখন ঐ শরাসনভঙ্গ-শব্দই যেন ক্ষত্রিয়কুলের প্রতি চিরমহাক্রুদ্ধ জামদগ্ন্যকে "পুনরায় ক্ষত্রিয়কুল উন্নত"—এইরূপ জানাইল।

**दृष्टसारमथ रुद्रकार्मुके वीर्यशुल्कमभिनन्द्य मैथिलः।**
**राघवाय तनयामयोनिजां रूपिणीं श्रियमिव न्यवेदयत्॥४७**

४७ श्र: । अथ मैथिलः रुद्रकार्मुके दृष्टसारं वीर्यशुल्कम् अभिनन्द्य राघवाय अयोनिजां रूपिणीं श्रियम् इव ( स्थिताम् ) तनयां न्यवेदयत् ॥ वाच्य—मैथिलेन रूपिणी श्रीरिव, अयोनिजा तनया न्यवेद्यत ॥

४७। अथ मैथिलो जनकः रुद्रकार्मुके, दृष्टः सारः स्थिरांशो यस्य तद्दृष्टसारम्। 'सारो बले स्थिरांशे च' इति विश्वः। वीर्यमेव शुल्कं धनुर्भङ्गरूपमित्यर्थः। अभिनन्द्य राघवाय रामाय अयोनिजां देवयजनसम्भवां तनयां सीतां रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिव न्यवेदयत् अर्पितवान्, वाचेति शेषः ॥

৪৭। অনন্তর মিথিলাধিপতি, রুদ্রধনু-ভঙ্গে রঘুকুলকুমার রামচন্দ্রের বল বিক্রম দর্শন করিয়া ভূয়সী প্রশংসা করিলেন এবং তাঁহার নিকট ধনুর্ভঙ্গরূপ শুল্ক (জামাতৃদেয় কন্যাশুল্ক, পণ) [পোণ] স্থাপন করিয়া সাক্ষাৎ লক্ষ্মীরূপিণী অযোনিজা তনয়া সীতাদেবীকে তাঁহার করে অর্পণ করিলেন।

**मैथिलः सपदि सत्यसङ्गरो राघवाय तनयामयोनिजाम्।**
**सन्निधौ द्युतिमतस्तपोनिधेरग्निसाक्षिक इवातिसृष्टवान्॥४८**

४८ अः। सत्यसङ्गरः मैथिलः द्युतिमतः तपोनिधेः सन्निधौ अग्निसाक्षिक इव राघवाय अयोनिजां तनयां सपदि अतिसृष्टवान्॥ वाच्य—सत्यसङ्गरेण मैथिलेन अग्निसाक्षिकेण इव अयोनिजा तनया अतिसृष्टा॥

४८। उक्तमेवार्थं सोपस्कारमाह—मैथिल इति। सत्यसङ्गरः सत्यप्रतिज्ञः। 'अथ प्रतिज्ञाजिज्ञासासंविदापत्सु सङ्गरः।' इत्यमरः। मैथिलः राघवाय अयोनिजां तनयाम् द्युतिमतस्तेजस्विनः तपोनिधेः कौशिकस्य सन्निधौ। अग्निः साक्षी यस्य सः अग्निसाक्षिकः। 'शेषाद्विभाषा' इति कप्प्रत्ययः। स इव, सपदि अतिसृष्टवान् दत्तवान्॥

৪৮। সত্যপ্রতিজ্ঞ মিথিলাপতি জনক তৎক্ষণাৎ তেজোনিধি মহর্ষি বিশ্বামিত্রের সমক্ষে যেন সাক্ষাৎ অগ্নিকে সাক্ষী করিয়া অযোনিসম্ভবা তনয়াকে রাঘবের করে উৎসর্গ করিলেন।

**प्राहिणोच्च महितं महाद्युतिः**
**कोसलाधिपतये पुरोधसम्॥**
**भृत्यभावि दुहितुः परिग्रहा-**
**द्दिश्यतां कुलमिदं निमेरिति॥ ४९**

४९ अः। महाद्युतिः (जनकः) 'इदं निमेः कुलं दुहितुः प्रतिग्रहात् भृत्यभावि दिश्यताम्' इति महितं पुरोधसं कोसलाधिपतये प्राहिणोत् च॥ वाच्य—महाद्युतिना महितः पुरोधाः प्राहीयत, दिश्यतु॥

४९। महाद्युतिर्जनको महितं पूजितं पुरोधसं पुरोहितं कोसलाधिपतये दशरथाय प्राहिणोत् प्रहितवांश्च। किमिति? निमिर्नाम जनकानां पूर्वजः कश्चित्। इदं निमेः कुलं दुहितुः सीतायाः परिग्रहात् वधूत्वेन स्वीकाराद्धेतोः। भृत्यस्य भावो भृत्यत्वं सोऽस्यास्तीति भृत्यभावि दिश्यताम् अनुमन्यतामिति॥

৪৯। পরে প্রদীপ্ততেজা জনক, অযোধ্যাপতি রাজা দশরথসমীপে পূজিত পুরোহিতকে প্রেরণ করিলেন এবং তাঁহাকে এইরূপ নিবেদন করিলেন যে, "আপনি আমার কন্যাকে পুত্রবধূরূপে গ্রহণ করিয়া এই নিমিকুলকে ভৃত্যভাবসম্পন্ন মনে করুন!"

अन्वियेष सदृशीं स च स्नुषां
प्राप चैनमनुकूलवाग्द्विजः।
सद्य एव सुकृतां हि पच्यते
कल्पवृक्षफलधर्मि काङ्क्षितम् ॥ ५०

५० अः। स च सदृशीं स्नुषाम् अन्वियेष, अनुकूलवाक् द्विजः च एनं प्राप। कल्पवृक्ष... सुकृतां काङ्क्षितं सद्यः एव पच्यते हि॥ वाच्य—तेन सदृशी स्नुषा अन्वीषे। अनुकूल... द्विजेन एष प्रापे ॥

५०। सः दशरथस्य सदृशीमनुरूपां स्नुषामन्वियेष, रामविवाहमा... काङ्क्ष इत्यर्थः। अनुकूलवाक् स्नुषासिद्धिरूपानुकूलार्थवादी द्विजो जनक... पुरोधास्च एनं दशरथं प्राप। तथाहि—कल्पवृक्षफलस्य यो धर्मः सद्य... पाकरूपः सोऽस्यास्तीति कल्पवृक्षफलधर्मि। तत् सुकृतां पुण्यकारि... काङ्क्षितं मनोरथः सद्य एव पच्यते हि। कर्मकर्त्तरि लट्। स्वयं... पक्वं भवतीत्यर्थः। 'कर्मवत् कर्मणा तुल्यक्रिये'ति कर्मवद्भावात् 'भा... कर्मणोः' इत्यात्मनेपदम् ॥

৫০। তিনিও স্বকুলানুরূপা পুত্রবধূ অন্বেষণ করিতেছিলেন, আর অনু... বাদী সেই দ্বিজ রাজার সমীপে উপস্থিত, অতএব বুঝিতে হইবে,—কল্পবৃক্ষে... ফল যেমন সদ্যই পরিণত হয়, তদ্রূপ পুণ্যবান্ লোকের মনোরথ আপনা হইতেই ... হইয়া থাকে।

तस्य कल्पितपुरस्क्रियाविधेः शुश्रुवान् वचनमग्रजन्मनः।
उच्चचाल बलभित्सखो वशी सैन्यरेणुमुषितार्कदीधितिः॥ ५१

५१ अः। बलभित्सखः वशी कल्पितपुरस्क्रियाविधेः तस्य अग्रजन्मनः वचनं शुश्रुवान् सैन्यरे... मुषितार्कदीधितिः ( सन् ) उच्चचाल॥ वाच्य—बलभित्सखेन वशिना शुश्रुवता सैन्यरेणुमुषित... दीधितिना उच्चेले ॥

५१। बलभित्सख इन्द्रसहचरः वशी स्वाधीनतावान्। 'वश आयत्... तायाञ्च' इति विश्वः। कल्पितपुरस्क्रियाविधेः कृतपूजाविधेः तस्य अग्र... जन्मनो द्विजस्य वचनं जनकेन सन्दिष्टं शुश्रुवान् श्रुतवान्। श्रुवादि... क्वसुः। सैन्यरेणुमुषितार्कदीधितिः सन् उच्चचाल प्रतस्थे॥

৫১। সুরপতির প্রিয়সখা জিতেন্দ্রিয় রাজা দশরথ সেই ব্রাহ্মণের যথোচিত পূজা করিলেন এবং তাঁহার মুখে তনয়ের পরিণয়সংবাদ শ্রবণ করিয়া সৈন্যগণের চরণ... দ্বারা সূর্য্যমণ্ডল অবরোধপূর্ব্বক মিথিলাভিমুখে গমন করিলেন।

**आससाद मिथिलां स वेष्टयन् पीड़ितोपवनपादपां बलैः ।**
**प्रीतिरोधमसहिष्ट सा पुरी स्त्रीव कान्तपरिभोगमायतम् ॥ ५२**

५२ अ:। स बलैः पीड़ितोपवनपादपां मिथिलां वेष्टयन् आससाद। सा पुरी स्त्री आयतं कान्तपरिभोगम् इव प्रीतिरोधम् असहिष्ट ॥ वाच्य—तेन वेष्टयता आसेदे। तया पुर्या स्त्रिया आयतः कान्तपरिभोगः इव प्रीतिरोधः असाहि ॥

५२। स दशरथः बलैः सैन्यैः पीड़ितोपवनपादपां मिथिलां वेष्टयन् परिधीकुर्वन् आससाद। सा पुरी, स्त्री युवतिः आयतम् अतिप्रसक्तं कान्तपरिभोगं प्रियसम्भोगमिव, प्रीत्या रोधं प्रीतिरोधम् असहिष्ट सोढ़वती। रोषरोधं तु न सहते इति भावः ॥

৫২। অনন্তর রাজা সৈন্যগণ দ্বারা মিথিলা পরিবেষ্টন করিয়া তথায় উপস্থিত হলে তাঁহার সৈন্যগণ উপবনতরুর পীড়া উৎপাদন করিতে লাগিল; যুবতী- যেমন গাঢ়তর প্রিয়সম্ভোগ সহ্য করে, মিথিলাপুরী তদ্রূপ প্রণয়াবরোধ সহ্য করিয়া রহিল।

**तौ समेत्य समये स्थिताबुभौ भूपती वरुणवासवोपमौ ।**
**कन्यकातनयकौतुकक्रियां स्वप्रभावसदृशीं वितेनतुः ॥ ५३**

५३ अ:। समये स्थितौ वरुणवासवोपमौ तौ भूपती समेत्य स्वप्रभावसदृशीं कन्यकातनयकौतुकक्रियां वितेनतुः ॥ वाच्य—स्थिताभ्यां वरुणवासवोपमाभ्यां ताभ्याम् भूपतिभ्यां प्रभावसदृशी कन्यकाकौतुकक्रिया वितेने ॥

५३। समये स्थितौ आचारनिष्ठौ। 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः। वरुणवासवौ उपमा उपमानं ययोस्तौ तथोक्तौ। तावुभौ भूपतो जनकदशरथौ समेत्य स्वप्रभावसदृशीम् आत्ममहिमानुरूपां कन्यकानां सीतादीनां तनयानां रामादीनां च कौतुकक्रियां विवाहोत्सवं वितेनतुर्विस्तृतवन्तौ। तनोतेर्लिट् ॥

৫৩। তখন বরুণ ও বাসবতুল্য সেই ভূপতিদ্বয় যথাসময়ে পরস্পর সমবেত হইয়া স্ব স্ব বিভবানুসারে কন্যাপুত্রের পরিণয়মহোৎসব সম্পাদন করিলেন।

**पार्थिवीमुदवहद्रघूद्वहो लक्ष्मणस्तदनुजामथोर्मिलाम् ।**
**यौ तयोरवरजौ वरौजसौ तौ कुशध्वजसुते सुमध्यमे ॥ ५४**

५४ अ:। रघूद्वहः पार्थिवीम् उदवहत्, अथ लक्ष्मणः तदनुजाम् ऊर्मिलाम् (उदवहत्) यौ वरौजसौ तयोः अवरजौ तौ सुमध्यमे कुशध्वजसुते (उदवहताम्) ॥ वाच्य—रघूद्वहेन पार्थिवी, लक्ष्मणेन तदनुजा ऊर्मिला उदोह्यत। याभ्याम् अवरजाभ्यां वरौजोभ्यां ताभ्यां उदोह्येताम् ॥

५४। उद्वहतीत्युद्वहः। पचाद्यच्। रघूणामुद्वहो रघूद्वहो रामः पृथिव्या अपत्यं स्त्री पार्थिवी। 'तस्यापत्यम्' इत्यणि 'टिड्ढा'—इति ङीप्। तां सीतामुदवहत् परिणीतवान्। अथ लक्ष्मणः तस्याः सीताया अनुजां जनकस्य औरसीम् ऊर्मिलाम् उदवहत्। यौ वरौजसौ तयोः रामलक्ष्मणयोः अवरजौ अनुजातौ भरतशत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य कन्यके माण्डवीं श्रुतकीर्त्तिं च उदवहताम्। नात्र व्युत्क्रमविवाहदोषः भिन्नोदरत्वात्। तदुक्तम्—'पितृव्यपुत्रे सापत्न्ये परनारीसुतेषु च। विवाहाधानयज्ञादौ परिवित्त्याद्यदूषणम्॥' इति॥

৫৪। অনন্তর রঘুবর রাম, পৃথিবীজাত সীতাকে, লক্ষ্মণ তদীয় কনিষ্ঠা জনক-ঔরসজাত উর্ম্মিলাকে এবং মহাতেজস্বী ভরত ও শত্রুঘ্ন যথাক্রমে জনকানুজ কুশধ্বজের মাণ্ডবী ও শ্রুতকীর্ত্তি নামে ক্ষীণমধ্যা কন্যাদ্বয়কে বিবাহ করিলেন।

**ते चतुर्थसहितास्त्रयो बभुः सूनवो नववधूपरिग्रहात्।**
**सामदानविधिभेदविग्रहाः सिद्धिमन्त इव तस्य भूपतेः॥ ५५**

५५ अः। ते चतुर्थसहिताः त्रयः सूनवः नववधूपरिग्रहात् तस्य भूपतेः सिद्धिमन्तः सामदानविधिभेदविग्रहाः इव बभुः॥ वाच्य—तैः चतुर्थसहितैः त्रिभिः सूनुभिः सिद्धिमद्भिः, सामदानविधिभेदविग्रहैरिव बभे॥

५५। ते चतुर्थसहितास्त्रयः चत्वार इत्यर्थः। वृत्तानुसारादेवमुक्तम्। सूनवो नववधूपरिग्रहात्, सिद्धिमन्तः फलसिद्धियुक्तास्तस्य भूपतेर्दशरथस्य सामदानविधिभेदविग्रहाश्चत्वार उपाया इव बभुः। विधीयत इति विधिः। दानमेव विधिः। विग्रहो दण्डः। सूनूनामुपायैर्वधूनां सिद्धिभिश्चौपम्यमित्यनुसन्धेयम्॥

৫৫। তখন সেই রাজতনয়চতুষ্টয়, নববধূপরিগ্রহনিবন্ধন সিদ্ধিসম্পন্ন সাম দান ভেদ দণ্ড এই চারি উপায়ের ন্যায় শোভা পাইতে লাগিলেন।

**ता नराधिपसुता नृपात्मजैस्ते च ताभिरगमन् कृतार्थताम्।**
**सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः॥ ५६**

५६ अः। ताः नराधिपसुताः नृपात्मजैः तैः च ताभिः कृतार्थताम् अगमन्। स वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः अभवत्॥ वाच्य—ताभिः नराधिपसुताभिः नृपात्मजैः तैः (सूतैः) ताभिः कृतार्थता अगामि। तेन वरवधूसमागमेन प्रत्ययप्रकृतियोगसन्निभेन अभूयत॥

५६। ता नराधिपसुता जनककन्यकाः नृपात्मजैः दशरथपुत्रैः कृतार्थतां कुलशीलवयोरूपादिसाफल्यमगमन्। ते च ताभिस्तथा। किञ्च

वराणां वधूनां च समागमः प्रत्ययानां प्रकृतीनाञ्च योग इव। सन्निभा-ति सन्निभः अभवत्। पचाद्यच्। प्रत्ययाः सनादयः येभ्यो विधीयन्ते प्रकृतयः। यथा प्रकृतिप्रत्यययोः सहैकार्थसाधनत्वं तद्वदत्रापीति भावः॥

৫৬। রাজনন্দিনীগণ রাজপুত্রদিগের সহিত সম্মিলিত হইয়া পরস্পর চরিতার্থতা করিলেন, ফলতঃ তখন সেই বরবধূসমাগম যেন প্রত্যয়প্রকৃতি-সংযোগের ন্যায় শোভা পাইতে লাগিল।

**एवमात्तरतिरात्मसम्भवांस्तान् निवेश्य चतुरोऽपि तत्र सः।**
**अध्वसु त्रिषु विसृष्टमैथिलः स्वां पुरीं दशरथो न्यवर्त्तत ॥५७**

५७ अ:। एवम् आत्तरतिः सः दशरथः तान् चतुरः अपि आत्मसम्भवान् तत्र निवेश्य त्रिषु (सत्सु) विसृष्टमैथिलः स्वां पुरीं न्यवर्त्तत॥ वाच्य—आत्तरतिना तेन दशरथेन विसृष्टमैथिलेन पुरीं न्यवृत्यत॥

५७। एवमात्तरतिः अनुरागवान् स दशरथः तान् चतुरोऽप्यात्मसम्भवान् पुत्रान् तत्र मिथिलायां निवेश्य विवाह्य। 'निवेशः शिविरोद्वाह-विन्यासेषु प्रकीर्त्तितः' इति विश्वः। त्रिष्वध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन्। स्वां पुरीं न्यवर्त्तत। उद्देश्यक्रियापेक्षया कर्मत्वं पुर्य्याः॥

৫৭। পুত্রবৎসল নৃপতি দশরথ এইরূপে তনয়গণের পরিণয়কার্য্য নির্ব্বাহ করিয়া স্বীয় রাজধানী অযোধ্যাভিমুখে প্রত্যাগমন করিলেন, মিথিলাধিপতি জনকও দিবস-ত্রয়ের পথ পর্য্যন্ত তাঁহাদের অনুগমন করিয়া রাজা দশরথের নিকট বিদায় লইয়া স্বীয় রাজধানীতে প্রত্যাবৃত্ত হইলেন।

**तस्य जातु मरुतः प्रतीपगा**
**वर्त्मसु ध्वजतरुप्रमाथिनः।**
**चिक्लिशुर्भृशतया वरूथिनी-**
**मुत्तटा इव नदीरयाः स्थलीम् ॥ ५८**

५८ अ:। जातु वर्त्मसु ध्वजतरुप्रमाथिनः प्रतीपगाः मरुतः, उत्तटा नदीरयाः स्थलीम् इव तस्य वरूथिनीं भृशतया चिक्लिशुः॥ वाच्य—उत्तटैः नदीरयैः स्थलीव ध्वजतरुप्रमाथिभिः प्रतीपगैः मरुद्भिः, वरूथिनी चिक्लिशे॥

५८। जातु कदाचिद्वर्त्मसु ध्वजा एव तरवस्तान् प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः, प्रतीपगाः प्रतिकूलगामिनो मरुतः। उत्तटा नदीरयाः स्थलीं अकृत्रिमभूमिमिव। 'जानपदकुण्ड'—इत्यादिना ङीप्। तस्य वरूथिनीं सेनां भृशतया भृशं चिक्लिशुः क्लिश्यन्ति स्म॥

৫৮। অনন্তর নদীবেগ যেমন তীরভূমি অতিক্রম করিয়া বেলাভূমি নিপী... করে, তদ্রূপ পথিমধ্যে একদিন সহসা এক প্রতিকূলবায়ু উত্থিত হইয়া ধ্বজরূপ দ্রু... সকল উন্মূলনপূর্ব্বক মহারাজ দশরথের সৈন্যগণকে অত্যন্ত ক্লিষ্ট করিতে লাগিল।

**लच्यते स्म तदनन्तरं रविर्बद्धभीमपरिवेशमण्डलः।**
**वैनतेयशमितस्य भोगिनो भोगवेष्टित इव च्युतो मणिः॥५९॥**

५९ अ:। तदनन्तरं बद्धभीमपरिवेशमण्डलः रविः, वैनतेयशमितस्य भोगिनः भोगवेष्टितः च्युतः मणिः इव लक्ष्यते स्म॥ वाच्य—बद्धभीमपरिवेशमण्डलं वेष्टितं च्युतं मणिमिव रविं लक्षयन्ते स्म।

५९। तदनन्तरं प्रतीपपवनानन्तरं, बद्धं भीमं परिवेशस्य परिमण्डलं यस्य सः। 'परिवेशस्तु परिधिरुपसूर्य्यकमण्डले' इत्यमरः। रविः वैनतेयशमितस्य गरुड़हतस्य भोगिनः सर्पस्य भोगेन कायेन। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। वेष्टितः, च्युतः शिरोभ्रष्टः मणिरिव, लच्यते स्म॥

৫৯। তদনন্তর দিবাকর গরুড়বিনাশিত সর্পের ফণাবেষ্টিত মণির ন্যায় ভয়ঙ্করী পরিবেশমণ্ডলে পরিবৃত হইয়া দৃষ্টিগোচর হইতে লাগিলেন।

**श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः।**
**अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः॥६०॥**

६० अ:। श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः रजस्वलाः दिशः (रजस्वलाः) अङ्गना इव अवलोकनक्षमाः नो बभूवुः॥ वाच्य—श्येनपक्षपरिधूसरालकाभिः सान्ध्यमेघरुधिरार्द्रवासोभिः दिग्भिः रजस्वलाभिः अङ्गनाभिरिव अवलोकनक्षमाभिः न बभूवे॥

६०। श्येनपक्षौ एव परिधूसरा अलका यासां तास्तथोक्ताः। सान्ध्यमेघा एव रुधिरार्द्राणि वासांसि यासां तास्तथोक्ताः। रजो धूलिरासामस्तीति रजस्वलाः 'रजःकृष्यासुतिपरिषदो वलच्' इति वलच्प्रत्ययः। दिशः रजस्वला ऋतुमत्यः अङ्गना इव। 'स्याद्रजः पुष्पमार्त्तवम्' इत्यमरः। अवलोकनक्षमा दर्शनार्हा नो बभूवुः। एकत्वाद्दृष्टदोषादपरत्र शास्त्रदोषादिति विज्ञेयम्। अत्र रजोवृष्टिरुत्पात उक्तः॥

৬০। দিগঙ্গনাগণ শ্যেনপক্ষীর পক্ষরূপ ধূসরবর্ণ অলকা ধারণ করিল, সন্ধ্যাকালীন মেঘরূপ রক্তিমবসনে আবৃত হইল এবং ধূলিপটলে সমাকীর্ণ হইয়া রজঃস্বলার ন্যায় দর্শনের অযোগ্যা হইয়া গেল।

**भास्करश्च दिशमध्युवास यां**
**तां श्रिताः प्रतिभयं ववाशिरे।**

क्षत्रशोणितपितृक्रियोचितं
चोदयन्त्य इव भार्गवं शिवाः ॥ ६१

६१ अ:। भास्करः यां दिशम् अध्युवास च तां श्रिताः शिवाः क्षत्रशोणितक्रियोचितं भार्गवं चोदयन्त्यः इव प्रतिभयं ववाशिरे ॥ वाच्य—भास्करेण या दिक् अध्यूषे। श्रिताभिः शिवाभिः चोदयन्तीभिः ववाशे ॥

६१। भास्करो यां दिशमध्युवास च यस्यां दिशि उषितः। 'उपान्वध्याङ्वसः' इति कर्मत्वम्। तां दिशं श्रिताः शिवाः गोमायवः। 'स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः' इत्यमरः। क्षत्रशोणितेन या पितृक्रिया पितृतर्पणं तत्रोचितं परिचितं भार्गवं चोदयन्त्य इव प्रतिभयं भयङ्करं ववाशिरे रुरुवुः। 'वाशृ शब्दे' इति धातोर्लिट्। 'तिरश्चां वाशितं रुतम्' इत्यमरः ॥

৬১। শৃগালকুল সূর্য্যাধিষ্ঠিতপূর্ব্ব দিগ্‌ভাগ আশ্রয় করিয়া ক্ষত্রিয়শোণিতদ্বারা পিতৃতর্পণকারী পরশুরামকে প্রেরণ করিবার জন্যই যেন ঘোরতর রব করিতে প্রবৃত্ত হইল।

तत्प्रतीपपवनादिवैकृतं
प्रेक्ष्य शान्तिमधिकृत्य कृत्यवित्।
अन्वयुङ्क्त गुरुमीश्वरः क्षितेः
स्वन्तमित्यलघयत् स तद्व्यथाम् ॥ ६२

६२ अ:। तत् प्रतीपपवनादिवैकृतं प्रेक्ष्य कृत्यवित् क्षितेः ईश्वरः शान्तिम् अधिकृत्य गुरुम् अन्वयुङ्क्त। सः स्वन्तम् इति तद्व्यथाम् अलघयत् ॥ वाच्य—कृत्यविदा ईश्वरेण गुरुः अन्वयुज्यत। (गुरुणा) तद्व्यथा अलघ्यत ॥

६२। तत् प्रतीपपवनादिवैकृतं दुर्निमित्तं प्रेक्ष्य कृत्यवित् कार्यज्ञः क्षितेरीश्वरः शान्तिम् अनर्थनिवृत्तिमधिकृत्य उद्दिश्य गुरुं वशिष्ठम् अन्वयुङ्क्त अपृच्छत्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। स गुरुः स्वन्तं शुभोदर्कं भावीति तस्य राज्ञो व्यथामलघयत् लघूकृतवान् ॥

৬২। কার্য্যবিদ্ ক্ষিতীশ্বর দশরথ প্রতিকূল পবনাদি দুর্নিমিত্ত সকল সন্দর্শন করিয়া শান্তিবিধান জন্য কুলগুরু বশিষ্ঠদেবকে বলিলেন, তিনিও তখন "মঙ্গল হইবে", কথা বলিয়া রাজার মনোবেদনা দূর করিলেন।

तेजसः सपदि राशिरुत्थितः प्रादुरास किल वाहिनीमुखे।
यः प्रमृज्य नयनानि सैनिकैर्लक्षणीयपुरुषाकृतिश्चिरात्॥६३

६३ अ: । सपदि उत्थित: तेजस: राशि: वाहिनीमुखे प्रादुरास किल । य: सैनिकै: प्रमृज्य चिरात् लक्षणीयपुरुषाकृति: ( अभूत् ) ॥ वाच्य—उत्थितेन राशिना येन लक्षणीयपुरुषाकृतिना प्रादुरासे ॥

६३ । सपदि उत्थित: तेजसो राशि: वाहिनीमुखे सेनाग्रे प्रादुरास खलु । य: सैनिकैर्नयनानि प्रमृज्य चिराल्लक्षणीया भावनीया पुरुषाकृतिर्यस्य स तथोक्त: । अभूदिति शेष: ॥

৬৩। তখন সৈন্যগণের সম্মুখভাগে সহসা এক তেজোরাশি প্রাদুর্ভূত হইল। সৈনিকগণ নয়নমার্জ্জন করিয়া দেখিতে পাইল, সেই তেজোরাশিই যেন দিব্য পুরুষশরীর ধারণ করিয়াছে।

**पित्र्यमंशमुपवीतलक्षणं मातृकञ्च धनुरूर्जितं दधत् ।**
**य: ससोम इव घर्मदीधिति: सद्विजिह्व इव चन्दनद्रुम: ॥**

६४ अ: । य: पित्रम् अंशम् उपवीतलक्षणं मातृकं च ( अंशम् ) ऊर्जितं धनु: दधत् ( सन् ) ससोम: घर्मदीधिति: इव सद्विजिह्व: चन्दनद्रुम: इव ( स्थित: ) ॥ वाच्य—येन दधता ससोमेन घर्मदीधितिना इव सद्विजिह्वे न चन्दनद्रुमेण इव भूयते ॥

६४ । उपवीतं लक्षणं चिह्नं यस्य तम् । पितुरयं पित्र्य: । 'ऋतुपितृषसो यत्' इति यत् प्रत्यय: । तम् अंशम् । धनुषा ऊर्जितं मातुरयं मातृक: । 'ऋतष्ठञ्' इति ठञ्प्रत्यय: । तम् अंशं च दधत् भार्गव: ससोम: चन्द्रयुत: । घर्मदीधिति: सूर्य्य इव सद्विजिह्व: ससर्पश्चन्दनद्रुम इव स्थित: ॥

৬৪। সেই পুরুষ তখন শশধরযুক্ত ভাস্কর এবং সর্পবেষ্টিত চন্দনতরুর ন্যায় পৈতৃকচিহ্ন যজ্ঞোপবীত ও মাতৃকচিহ্ন তেজোযুক্ত ধনু ধারণ করিয়া শোভা পাইতে লাগিলেন।

**येन रोषपरुषात्मन: पितु: शासने स्थितिभिदोऽपि तस्थुषा ।**
**वेपमानजननीशिरश्छिदा प्रागजीयत घृणा ततो मही ॥**

६५ अ: । येन रोषपरुषात्मन: स्थितिभिदोऽपि पितु: शासने तस्थुषा वेपमानजननीशिरश्छिदा ( सता ) प्राक् घृणा अजीयत, तत: मही ( अजीयत ) ॥ वाच्य—य: तस्थिवान् वेपमानजननीशिरश्छिद् घृणाम् अजयत्, महीम् (अजयत्) ॥

६५ । रोषपरुष आत्मा बुद्धिर्यस्य स: । 'आत्मा जीवो धृतिर्बुद्धि:' इत्यमर: । यस्य रोषपरुषात्मन:, स्थितिभिदोऽपि मर्य्यादालङ्घिनोऽपि पितु: शासने तस्थुषा स्थितेन, वेपमानजननीशिरश्छिदा येन, प्राग्घृणा अजीयत, ततोऽनन्तरं मही अजीयत । मातृहन्तु: क्षत्रवधात् जुगुप्सेति भाव: ॥

पौराणिकी वार्ता।—पुरा किल परशुरामजननी रेणुकादेवी जलमानेतुं नदीतीरं गतवती, नद्यास्तटे जभमानौ गन्धर्वदम्पती विलोक्य तस्याः मनसि महान् विकारोऽजायत, गृहप्रत्यागतां रेणुकामवलोक्य भगवान् जमदग्निः समाधियोगेन वृत्तान्तमिममवगच्छन् शिरश्छेदनाय ज्येष्ठं तनयमादिदेश, स च तादृशं दुष्करं कर्म कर्तुं न स्वीकृतवान्, पितुर्वचनगौरवात् कनीयान् परशुरामः तमादेशम् प्रतिपालयन् कुठाराघातेन जनन्याः शिरश्छेद इति ॥

अक्षबीजवलयेन निर्बभौ दक्षिणश्रवणसंस्थितेन यः।
क्षत्रियान्तकरणैकविंशतेर्व्याजपूर्वगणनामिवोद्वहन् ॥ ६६

६६ अः। यः दक्षिणश्रवणसंस्थितेन अक्षबीजवलयेन क्षत्रियान्तकरणैकविंशतेः व्याजपूर्वगणनाम् उद्वहन् इव निर्बभौ ॥ वाच्य—येन उद्वहता इव निर्बभे।

६६। यो भार्गवः दक्षिणश्रवणे संस्थितेन अक्षबीजवलयेन अक्षमालया, क्षत्रियान्तकरणानां क्षत्रियवधानाम् एकविंशतिः एकविंशतिसंख्यायाः व्याजः अक्षमालारूपः पूर्वो यस्यास्तां गणनाम् उद्वहन्निव निर्बभौ ॥

पौराणिकी वार्त्ता।—पुरा किल हैहयवंशजेन कार्त्तवीर्यार्जुनेन निरागसं तापसं जमदग्निं हतवान्, तेन प्रज्वलितकोपवह्निना परशुरामेण क्षत्रकुलं भस्मीकर्त्तुम् एकविंशतिं वारान् यते ॥

६५—६৬। যিনি রোষকষায়িত মর্য্যাদালঙ্ঘনকারী পিতার আদেশবশবর্ত্তী হইয়া শতকলেবরা জননীর শিরশ্ছেদনপূর্ব্বক প্রথমে ঘৃণা এবং পরে পৃথিবী জয় করিয়াছেন, তিনি যেন দক্ষিণকর্ণে নিহিত অক্ষমালাচ্ছলে একবিংশতিবার ক্ষত্রিয়কুল নির্মূলকরণের গণনা বহন করিতেছেন।

पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितम्।
बालसूनुरवलोक्य भार्गवं स्वां दशाञ्च विषसाद पार्थिवः॥६७

६७ अः। बालसूनुः पार्थिवः भार्गवं पितुर्वधभवेन मन्युना राजवंशनिधनाय दीक्षितं स्वां दशाञ्च अवलोक्य विषसाद ॥ वाच्य—बालसूनुना पार्थिवेन विषेदे ॥

६७। पितुर्जमदग्नेर्वधभवेन क्षत्रियकर्त्तृकवधोद्भवेन मन्युना कोपेन राजवंशानां निधनाय नाशार्थम्। 'निधनं स्यात् कुले नाशे' इति विश्वः। दीक्षितं प्रवृत्तमित्यर्थः। तं भार्गवं स्वां दशां च अवलोक्य बालाः सूनवो यस्य स पार्थिवो विषसाद। स्वस्य अतिदौर्बल्यात् शत्रोश्चातिक्रोधात् च विशोकोऽभवदित्यर्थः॥

६৭। নরপতি দশরথ, পিতৃবধজনিত ক্রোধে উদ্দীপ্ত ও রাজবংশবিনাশে প্রবৃত্ত পরশুরামকে সন্দর্শন করিয়া স্বীয় দৌর্ব্বল্য ও সন্তানগণ শিশু এই সকল মনে করিয়া অত্যন্ত বিষণ্ণ হইয়া পড়িলেন।

नाम राम इति तुल्यमात्मजं वर्त्तमानमहिते च दारुणे
हृदयमस्य भयदायि चाभवद्रत्नजातमिव हारसर्पयोः ॥ ६८

६८ अ:। आत्मजे दारुणे अहिते च तुल्यं वर्त्तमानं राम इति नाम हारसर्पयोः रत्नजातम्
अस्य हृद्यं भयदायि च अभवत् ॥ वाच्य—हृद्येन भयदायिना हारसर्पयोः वर्त्तमानेन रत्न
इव अभूयत ॥

६८। आत्मजे पुत्रे दारुणे घोरे अहिते शत्रौ च तुल्यमविशेषेण व
मानं राम इति नाम, हारसर्पयोः वर्त्तमानं रत्नजातं रत्नजातिरिव।
दशरथस्य हृद्यं हृदयङ्गमं भयदायि भयङ्करं च अभवत् ॥

৬৮। স্বীয় তনয় ও নিদারুণ শত্রু এই উভয়েরই তুল্য 'রাম' নামটি
তাঁহার পক্ষে সর্প ও কণ্ঠহারে সংলগ্ন রত্নের ন্যায় অতীব প্রীতিকর ও ভয়ঙ্কর
হইতে লাগিল।

अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यत
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥ ६

६९ अ:। सः अर्घ्यम् अर्घ्यम् इति वादिनं नृपम् अनवेक्ष्य यतः भरताग्रजः ततः क्षत्र
दहनार्चिषम् उदग्रतारकां दृशं सन्दधे ॥ वाच्य—तेन क्षत्रकोपदहनार्चिः उदग्रतारका दृक् स

६९। सः भार्गवः। 'अर्घ्यमर्घ्यम्' इति वादिनं नृपमनवेक्ष्य, य
यत्र भरताग्रजः ततस्तत्र। 'इतराभ्योऽपि दृश्यन्ते' इति सार्वविभक्ति
स्तसिः। क्षत्रे क्षत्रकुले विषये यः कोपदहनः रोषाग्निः तस्यार्चि
ज्वालामिव स्थिताम्। 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः। उदग्रा तार
कनीनिका यस्यास्ताम्। 'तारकाक्ष्णः कनीनिका' इत्यमरः। दृशं सन्दधे

৬৯। রাজা দশরথ অতিমাত্র ব্যস্ত হইয়া "অর্ঘ্য অর্ঘ্য" এইরূপ বলিতেছেন, কি
পরশুরাম সেদিকে দৃষ্টিপাত না করিয়া যেখানে ভরতাগ্রজ রামচন্দ্র অবস্থান করি
ছিলেন, সেই দিকেই ক্ষত্রিয়কোপানলের শিখাস্বরূপ উগ্রতারকাযুক্ত চক্ষু নিক্ষেপ
করিলেন।

तेन कार्मुकनिषक्तमुष्टिना राघवो विगतभीः पुरोगतः।
अङ्गुलीविवरचारिणं शरं कुर्वता निजगदे युयुत्सुना ॥ ७

७० अ:। तेन कार्मुकनिषक्तमुष्टिना शरम् अङ्गुलीविवरचारिणं कुर्वता युयुत्सुना (सता)
विगतभीः पुरोगतः राघवः निजगदे ॥ वाच्य—कार्मुकनिषक्तमुष्टिः शरम् अङ्गुलीविवरचारिणं
कुर्वन् युयुत्सुः स विगतभियं राघवं निजगदे ॥

७०। कार्मुकनिषक्तमुष्टिना युयुत्सुना योद्धुमिच्छता, शरम् अङ्गुली

[वि]वरचारिणं कुर्वता, तेन भार्गवेण कर्त्रा । विगतभीः निर्भीकः सन्, [अभ्य]ागतोऽग्रगतो राघवः निजगदे उक्तः । कर्मणि लिट् ॥

৭০। অনন্তর সমরাভিলাষী পরশুরাম, একমুষ্টি শরাসনে ও অপরমুষ্টির অঙ্গুলিবিবরে [শর] সংস্থাপন করিয়া সম্মুখাগত নির্ভীক রামচন্দ্রকে বলিতে লাগিলেন।

**[क्ष]त्रजातमपकारवैरि मे तन्निहत्य बहुशः शमं गतः ।**
**[सु]प्तसर्प इव दण्डघट्टनाद्रोषितोऽस्मि तव विक्रमश्रवात्॥ ७१**

७१ अः। क्षत्रजातं मे अपकारवैरि, तत् बहुशः निहत्य शमं गतः (अस्मि)। (तथापि) [द]ण्डघट्टनात् सुप्तसर्पः इव तव विक्रमश्रवात् रोषितः अस्मि ॥ वाच्य—मया शमो गतः। सुप्तसर्पेण [रो]षितेन भूयते ॥

७१। क्षत्रजातं क्षत्रजातिः मे अपकारेण पितृवधरूपेण वैरि द्वेषि। [त]त् क्षत्रजातं बहुशः एकविंशतिवारान् निहत्य, शमं गतोऽस्मि। तथापि— [सु]प्तसर्पो दण्डघट्टनादिव तव विक्रमस्य श्रवात् आकर्णनात् रोषितः रोषं [प्र]ापितः अस्मि ॥

৭১। ক্ষত্রিয়জাতি আমার পিতৃবধরূপ অপকার করিয়া বৈরী হইয়াছে, আমি [তাহা]দিগকে একবিংশতিবার বিনিপাত করিয়া শান্তভাব অবলম্বন করিয়াছি, কিন্তু [এক্ষ]ণে তোমার বিক্রম দেখিয়া দণ্ডঘট্টিত প্রসুপ্ত সর্পের ন্যায় রোষাবিষ্ট হইয়াছি।

**[मै]थिलस्य धनुरन्यपार्थिवैस्त्वं किलानमितपूर्वमक्षणोः ।**
**[त]न्निशम्य भवता समर्थये वीर्य्यशृङ्गमिव भग्नमात्मनः ॥ ७२**

७२ अः। त्वम् अन्यपार्थिवैः अनमितपूर्वं मैथिलस्य धनुः अक्षणोः किल। तत् निशम्य भवता [आत्म]नः वीर्य्यशृङ्गं भग्नम् इव समर्थये ॥ वाच्य—त्वया धनुः अक्षण्यत। मया समर्थ्यते ॥

७२। अन्यैः पार्थिवैः अनमितपूर्वं पूर्वमनमितम्। सुप्सुपेति- [स]मासः। अस्य मैथिलस्य धनुः त्वम् अक्षणोः क्षतवान्। किलेति [वा]र्त्तायाम्। 'वार्त्तासम्भाव्ययोः किल' इत्यमरः। तद्धनुर्भङ्गं निशम्य [आ]कर्ण्य भवता आत्मनो मम वीर्य्यमेव शृङ्गं भग्नमिव समर्थये मन्ये ॥

৭২। পূর্ব্বে অন্য কোন রাজা জনকের ধনু আনত করিতে সমর্থ হয় নাই, কিন্তু [শু]নিলাম, তুমি তাহা অনায়াসে ভগ্ন করিয়াছ, ইহাতে তোমাকর্ত্তৃক আমার বীর্য্যশৃঙ্গই [যে]ন ভগ্ন হইয়াছে মনে করিতেছি।

**[अ]न्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् ।**
**[व्री]डमावहति मे स सम्प्रति व्यस्तवृत्तिरुदयोन्मुखे त्वयि॥ ७३**

७२ अ:। अन्यदा जगति राम: इति अयं शब्द: उच्चरित: (सन्) माम् एव अगात्। अ[illegible] त्वयि उदयोन्मुखे (सति) व्यस्तवृत्ति: स: (शब्द:) मे व्रीड़म् आवहति॥ वाच्य—रामेति[illegible] अनेन शब्देन उच्चरितेन अहम् अगायिषि। व्यस्तवृत्तिना तेन व्रीड़: आोह्यते॥

७२। अन्यदा अन्यस्मिन् काले जगति राम इत्ययं शब्द: उच्चरि[illegible] सन् मामेव अगात्। सम्प्रति त्वयि उदयोन्मुखे सति, व्यस्तवृत्ति[illegible] विपरीतवृत्ति: अन्यगामीति यावत्। स शब्दो मे व्रीड़मावहति[illegible] लज्जां करोति॥

৭২। আরও দেখ,—পূর্ব্বে 'রাম' এই শব্দটী উচ্চারিত হইলে জগতে একমা[illegible] আমাকেই বুঝাইত, কিন্তু এক্ষণে অভ্যুদয়োন্মুখ তোমাতে ঐ নাম বিভক্ত হও[illegible] আমার লজ্জাবোধ হইতেছে।

**बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं द्वौ रिपू मम मतौ समागसौ**
**धेनुवत्सहरणाच्च हैहयस्त्वञ्च कीर्त्तिमपहर्तुमुद्यत: ॥ ७४**

७४ अ:। अचले अकुण्ठितम् अस्त्रं बिभ्रत: मम द्वौ रिपू समागसौ मतौ। धेनुवत्सहरण[illegible] हैहय: कीर्त्तिम् अपहर्त्तुम् उद्यत: त्वञ्च॥ वाच्य—द्वाभ्यां रिपुभ्यां समागसाभ्यां मताभ्यां भू[illegible] त्वया उद्यतम् उद्यतेन भूयते वा॥

७४। अचले क्रौञ्चाद्रावपि अकुण्ठितम् अस्त्रं बिभ्रतो मम द्[illegible] समागसौ तुल्यापराधौ रिपू मतौ। धेनो: पितृहोमधेनोर्वत्सस्य हरणाद्धेतो[illegible] हैहय: कार्त्तवीर्य्यश्च, कीर्त्तिमपहर्त्तुमुद्यत उद्युक्त: त्वञ्च। वत्सहरणे भारत[illegible] श्लोक:—'प्रमत्तस्याश्रमात्तस्य होमधेन्वास्ततो बलात्। जहार वत्[illegible] क्रोशन्त्या बभञ्ज च महाद्रुमान्॥' इति॥

**क्षत्त्रियान्तकरणोऽपि विक्रम-**
**स्तेन मामवति नाजिते त्वयि।**
**पावकस्य महिमा स गण्यते**
**कक्षवज्ज्वलति सागरेऽपि य: ॥ ७५**

७५ अ:। तेन क्षत्रियान्तकरण: अपि विक्रम: त्वयि अजिते (सति) मां न अवति। पावक[illegible] महिमा स: गण्यते य: कक्षवत् सागरे अपि ज्वलति॥ वाच्य—क्षत्रियान्तकरणेनापि विक्रमेण[illegible] न अव्ये। तं महिमानं गणयति, येन ज्वल्यते॥

७५। तेन कारणेन। क्रियते येनासौ करण: क्षत्रियान्तस्य करणोऽपि विक्रम: त्वयि अजिते मां न अवति न प्रीणाति। तथाहि—पावकस्य अग्नेर्महिमा स गण्यते य: कक्षवत् कक्षे इव। 'तत्र तस्येव' इति सप्तम्यर्थे वति:। सागरेऽपि ज्वलति॥

৭৪—৭৫। হোমধেনুহরণে হৈহয়বংশজ কার্ত্তবীর্য্য এবং কীর্ত্তি অপহরণে উদ্যত তুমি,—তোমরা উভয়েই তুল্যাপরাধী ও আমার শত্রু; দেখ, আমি শৈলভেদেও স্বর্দ্ধ অবধারণ করিতেছি ; এক্ষণে তুমি পরাজিত না হইলে ক্ষত্রিয়বধজনিত পরাক্রমে প্রীতিলাভ করিতে পারিতেছি না। শুষ্ক তৃণের ন্যায় অনল যে, সাগরেও প্রজ্বলিত হয়, তাহাই অনলের মহিমা বলিয়া পরিগণিত হইয়া থাকে।

विद्धि चात्तबलमोजसा हरेरैश्वरं धनुरभाजि यत्त्वया ।
खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ॥ ७६

७६ अ: । त्वया यत् ऐश्वरं धनुः अभाजि, (तत्) हरेः ओजसा आत्तबलं च विद्धि । नदीरयैः खातमूलं तटद्रुमं मृदुः अपि अनिलः पातयति ॥ वाच्य—त्वम् अभाङ्क्षीः । विद्यताम् । खातमूलः द्रुमः अनिलेन पात्यते ॥

७६ । किञ्च । ऐश्वरं धनुर्हरेर्विष्णोरोजसा बलेन आत्तबलं हृतसारञ्च विद्धि । यद्धनुस्त्वया अभाजि अभञ्जि । 'भञ्जेश्च चिणि' इति विभाषया नलोपः । तथाहि—नदीरयैः खातमूलम् अवदारितपादं तटद्रुमं मृदुरप्यनिलः पातयति । ततः शिशुरपि रौद्रं धनुरभाङ्क्षमिति मा गर्वीरिति भावः ॥

৭৬। তুমি যে হরধনু ভগ্ন করিয়াছ, তাহার সমস্ত সারই ভগবান্ নারায়ণ হরণ করিয়াছিলেন ; তুমি ইহা নিশ্চই জানিও—নদীবেগে যে বৃক্ষের মূল জর্জ্জরিত হইয়া গিয়াছে, মন্দসমীরণও সেইরূপ তীরতরু অনায়াসে পাতিত করিতে পারে।

तन्मदीयमिदमायुधं ज्यया सङ्गमय्य सशरं विकृष्यताम् ।
तिष्ठतु प्रधनमेवमप्यहं तुल्यबाहुतरसा जितस्त्वया ॥ ७७

७७ अ: । तत् मदीयम् इदम् आयुधं ज्यया सङ्गमय्य सशरं विकृष्यताम् । प्रधनं तिष्ठतु । एवम् अपि अहं तुल्यबाहुतरसा त्वया जितः ॥ वाच्य— विकर्ष (त्वम्), प्रधनेन स्थीयताम् । तुल्यबाहुतराः त्वं मां जितवान् ॥

७७ । तत् तस्मान्मदीयमिदम् आयुधं कार्मुकं ज्यया सङ्गमय्य संयोज्य । 'ल्यपि लघुपूर्वात्' इति णेरयादेशः । सशरं यथा तथा त्वया विकृष्यताम् । प्रधनं रणस्तिष्ठतु । प्रधनं तावदास्तामित्यर्थः । 'प्रधनं दारणे रणे' इति विश्वः । एवमपि मद्धनुःकर्षणेऽप्यहं तुल्यबाहुतरसा समबाहुबलेन । 'तरसी बलरंहसौ' इत्यमरः । त्वया जितः ॥

कातरोऽसि यदि वोद्गतार्चिषा
तर्जितः परशुधारया मम ।

জ্যানিঘাতকঠিনাঙ্গুলির্বৃথা
বধ্যতামভয়যাচনাঞ্জলিঃ ॥ ৭৮

৭৮ অঃ। যদি বা উজ্জ্বলার্চিষা মম পরশুধারয়া তর্জিতঃ কাতরঃ অসি, বৃথা-জ্যা-নিঘাত-কঠিনাঙ্গুলিঃ অভয়যাচনাঞ্জলিঃ বধ্যতাম্ ॥ বাচ্য—তর্জিতেন কাতরেণ ভূয়তে। জ্যানিঘাত-কঠিনাঙ্গুলিম্ অভয়যাচনাঞ্জলিং বধান (ত্বম্) ॥

৭৮। যদি বা উজ্জ্বলার্চিষা উজ্জ্বলত্বিষা মম পরশুধারয়া তর্জিতঃ কাতরোঽসি ভীতোঽসি। বৃথা জ্যানিঘাতেন কঠিনা অঙ্গুলয়ো যস্য তথোক্তঃ অভয়যাচনাঞ্জলিঃ অভয়প্রার্থনাঞ্জলির্বধ্যতাম্। 'তৌ যুতাবঞ্জলিঃ পুমান্' ইত্যমরঃ ॥

৭৭—৭৮। যাহা হউক, এক্ষণে যুদ্ধে প্রয়োজন নাই, তুমি এই মদীয় শরাসনে গুণারোপণ ও শরসংযুক্ত করিয়া আকর্ষণ কর, তবেই তোমাকে আমার তুল্যবলশালী মনে করিয়া তোমার নিকট পরাজয় স্বীকার করিব। অথবা যদি তুমি আমার প্রদীপ্ত পরশুধারার তর্জ্জনে নিতান্ত কাতর হইয়া থাক, তবে বৃথা জ্যাঘাতকর্কশাঙ্গুলি করতল দ্বারা অঞ্জলিবন্ধনপূর্ব্বক আমার নিকট অভয় প্রার্থনা কর।

এবমুক্তবতি ভীমদর্শনে ভার্গবে স্মিতবিকম্পিতাধরঃ।
তদ্ধনুর্গ্রহণমেব রাঘবঃ প্রত্যপদ্যত সমর্থমুত্তরম্ ॥ ৭৯

৭৯ অঃ। ভীমদর্শনে ভার্গবে এবম্ উক্তবতি (সতি) রাঘবঃ স্মিতবিকম্পিতাধরঃ (সন্) তদ্ধনুর্গ্রহণম্ এব সমর্থম্ উত্তরং প্রত্যপদ্যত ॥ বাচ্য—রাঘবেণ স্মিতবিকম্পিতাধরেণ ... প্রত্যপাদি।

৭৯। ভীমদর্শনে ভার্গবে এবমুক্তবতি সতি, রাঘবঃ, স্মিতেন হাস্যেন বিকম্পিতাধরঃ সন্, তদ্ধনুর্গ্রহণমেব সমর্থম্ উচিতমুত্তরং প্রত্যপদ্যত অঙ্গীচকার ॥

৭৯। ভীমদর্শন পরশুরাম এইরূপ বলিলে, ঈষৎ হাস্যযুক্ত কম্পিতাধর রাম, তৎ... ধনুর্গ্রহণ দ্বারা তাঁহার বাক্যের যথোচিত উত্তর প্রদান করিলেন।

পূর্বজন্মধনুষা সমাগতঃ
সোঽতিমাত্রলঘুদর্শনোঽভবৎ।
কেবলোঽপি সুভগো নবাম্বুদঃ
কিং পুনস্ত্রিদশচাপলাঞ্ছিতঃ ॥ ৮০

८०. अ। पूर्वजन्मधनुषा समागतः सः अतिमात्रलघुदर्शनः अभवत्। नवाम्बुदः केवलः अपि ... विदशचापलाञ्छितः किं पुनः ॥ वाच्य—समागतेन अतिमात्रलघुदर्शनेन तेन अभूयत। ... नवाम्बुदेन सुभगेन (भूयते) विदशचापलाञ्छितेन पुनः किम् ॥

८०। पूर्वजन्मनि नारायणावतारे यद्धनुस्तेन समागतः सङ्गतः सः अतिमात्रम् अत्यन्तं लघुदर्शनः प्रियदर्शनः अभवत्। तथाहि—नवाम्बुदः केवलः रिक्तोऽपि सुभगः। त्रिदशचापेन इन्द्रधनुषा लाञ्छितः ... लाञ्छितः किं पुनः ? सुभग एवेति भावः ॥

८०। তখন রাম পূর্ব্বজন্মধৃত ধনু ধারণ করিয়া সাতিশয় প্রিয়দর্শন হইলেন, ... ত নবজলধরই পরম রমণীয় হইয়া থাকে, তাহাতে আবার ইন্দ্রধনুসম্মিলিত হইলে ... যে সমধিক শোভিত হইবে, তাহা আর বিচিত্র কি ?

भूमिनिहितैककोटि तत् कार्मुकञ्च बलिनाधिरोपितम्।
... अभस्य रिपुरास भूभृतां धूमशेष इव धूमकेतनः ॥ ८१

८१ अ। बलिना तेन भूमिनिहितैककोटि तत् कार्मुकं च अधिरोपितम्। भूभृतां रिपुः च ... धूमकेतनः इव निष्प्रभः आस ॥ वाच्य—स बली अधिरोपितवान्। धूमशेषेण धूमकेतनेन निष्प्रभेण रिपुणा आसि ॥

८१। बलिना तेन रामेण भूमिनिहिता एका कोटिर्यस्य तत्। कर्मणि भवतीति कार्मुकं धनुश्च। 'कर्मण उकञ्' इत्युकञ्प्रत्ययः। अधिरोपितम्। भूभृतां रिपुर्भार्गवश्च। धूमशेषः धूमकेतनः अग्निरिव, ... प्रभो निस्तेजस्क आस बभूव। आसेति तिङन्तप्रतिरूपकमव्ययं ... र्थकस्यास्तेरूपं वा ॥

८१। অনন্তর মহাবলপরাক্রম রাম যেমনি অবনীতলে ধনুর অগ্রভাগ নিহিত ... গুণারোপণ করিলেন, অমনি ক্ষত্রিয়গণের চিররিপু পরশুরাম ধূমাবশিষ্ট অনলের ... প্রভাহীন হইয়া পড়িলেন।

तावुभावपि परस्परस्थितौ
वर्द्धमानपरिहीनतेजसौ।
पश्यति स्म जनता दिनात्यये
पार्वणौ शशिदिवाकराविव ॥ ८२

८२ अ। परस्परस्थितौ वर्द्धमानपरिहीनतेजसौ तौ उभौ अपि दिनात्यये पार्वणौ शशिदिवा... इव जनता पश्यति स्म ॥ वाच्य—जनतया दृश्येते स्म ॥

८२। परस्परस्थितौ अन्योन्याभिमुखौ। वर्द्धमानश्च परिहीनश्चेति

द्वन्द्वः। वर्द्धमानपरिहीने तेजसी ययोः तौ उभौ राघवभार्गवौ श्रि
दिनात्यये सायंकाले पर्व्वणि भवौ पार्व्वणौ शशिदिवाकरौ इव। जनता
जनसमूहः। 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल्प्रत्ययः। पर्य्यै
स्म अपश्यत्। अत्र राघवस्य शशिना भार्गवस्य भानुना औपम्यं द्रष्टव्यम्।

৮২। দর্শকমণ্ডলী পরস্পর অভিমুখে দণ্ডায়মান বীরদ্বয়ের মধ্যে বর্দ্ধিততে
রামচন্দ্র ও হীনবল পরশুরামকে পর্ব্বকালীন দিনাবসানে শশি-দিবাকরের ন্যায় দর্শ
করিতে লাগিল।

**तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्य्यमात्मनि।**
**स्वञ्च संहितममोघमाशुगं व्याजहार हरसूनुसन्निभः॥ ८३**

८३ अः। हरसूनुसन्निभः कृपामृदुः राघवः आत्मनि स्खलितवीर्य्यं तं भार्गवं स्वं संहित
अमोघम् आशुगञ्च अवेक्ष्य व्याजहार॥ वाच्य—हरसूनुसन्निभेन कृपामृदुना राघवेण व्याजह्रे।

८३। हरसूनुसन्निभः स्कन्दसमः कृपामृदुः राघवः, आत्मनि वि
स्खलितवीर्य्यं कुण्ठितशक्तिं तं भार्गवं स्वं स्वकीयं संहितममोघम् आश
वाणञ्च अवेक्ष्य व्याजहार बभाषे॥

**न प्रहर्त्तुमलमस्मि निर्दयं**
**विप्र इत्यभिभवत्यपि त्वयि।**
**शंस किं गतिमनेन पत्रिणा**
**हन्मि लोकमुत ते मखार्जितम्॥ ८४**

८४ अः। अभिभवति अपि त्वयि विप्रः इति हेतोः निर्दयं प्रहर्त्तुम् अलं न अस्मि। अ
पत्रिणा किं ते गतिं हन्मि? उत मखार्जितं लोकं हन्मि? शंस॥ वाच्य—मया न भूयते। म
ते गतिः उत मखार्जितो लोकः हन्यते, शस्यतां (त्वया)॥

८४। अभिभवत्यपि त्वयि विप्र इति हेतोः निर्दयं प्रहर्त्तुम् अ
शक्तो नास्मि। किन्तु अनेन पत्रिणा शरेण ते गतिं गमनं हन्मि, उ
मखार्जितं लोकं स्वर्गं हन्मि, शंस ब्रूहि॥

৮৩—৮৪। কুমারসদৃশ দয়ার্দ্রহৃদয় রাম, পরশুরামকে একান্ত হীনবল ও স্ব
সংযোজিত শর অব্যর্থ দেখিয়া কহিলেন,—আপনি আমাকে অভিভব করিলেও ব্রা
বলিয়া আপনাকে নির্দ্দয়রূপে প্রহার করিতে ইচ্ছা করি না, এখন বলুন, মৎপরিত্য
এই বাণদ্বারা আপনার স্বৈরগতি অথবা যজ্ঞার্জ্জিত স্বর্গপথ অবরোধ করি?

**प्रत्युवाच तमृषिर्न तत्त्वत-**
**स्त्वां न वेद्मि पुरुषं पुरातनम्।**

गां गतस्य तव धाम वैष्णवं
कोपितो ह्यसि मया दिदृक्षुणा ॥ ८५

८५ अ:। ऋषि: तं ( रामं ) प्रत्युवाच—तत्त्वत: त्वां पुरातनं पुरुषं न वेद्मि ( इति ) न। मया गां गतस्य तव वैष्णवं धाम दिदृक्षुणा ( सता ) कोपित: हि असि॥ वाच्य—ऋषिणा स प्रत्यूचे, पुरातन: पुरुषस्त्वं मया न विद्यसे न, कोपितेन भूयते।

८५। ऋषिर्भार्गव: तं रामं प्रत्युवाच। किमिति? तत्त्वत: स्वरूपत: त्वां पुरातनं पुरुषं न वेद्मीति न, किन्तु वेद्म्येव इत्यर्थ:। किन्तु गां गतस्य भुवमवतीर्णस्य तव वैष्णवं धाम तेजो दिदृक्षुणा द्रष्टुमिच्छुना मया कोपितो ह्यसि॥

৮৫। তখন প্রত্যুত্তরে পরশুরাম রামচন্দ্রকে বলিলেন,—পুরাণপুরুষ বলিয়া প্রকৃতঃ আমি আপনাকে বিদিত হইতে পারি নাই এমন নহে, তবে আপনি ভূতলে অবতীর্ণ হইয়াছেন, সম্প্রতি আপনার বৈষ্ণবতেজ সন্দর্শনমানসেই এইরূপে আপনাকে কোপিত করিয়াছি।

भस्मसात् कृतवत: पितृद्विष:
पात्रसाच्च वसुधां ससागराम्।
आहितो जयविपर्ययोऽपि मे
श्लाघ्य एव परमेष्ठिना त्वया ॥ ८६

८६ अ:। पितृद्विष: भस्मसात्, ससागरां वसुधां च पात्रसात् कृतवतो मे परमेष्ठिना त्वया आहित: जयविपर्यय: अपि श्लाघ्य एव॥ वाच्य—आहितेन जयविपर्ययेण श्लाघ्येन भूयते॥

८६। पितृद्विष: पितृवैरिणो भस्मसात् कृतवत: कोपेन भस्मीकुर्वत:। विभाषा सातिकार्त्स्न्ये' इति सातिप्रत्यय:। ससागरां वसुधाञ्च पात्रसात् पात्राधीनं देयं कृतवत:। 'देये त्रा च' इति चकारात् साति:। कृतवतो मे परमेष्ठिना परमपुरुषेण त्वया आहित: कृतो जयविपर्यय: पराजयोऽपि श्लाघ्य आग्रास्य एव॥

৮৬। আমি পিতৃবৈরিগণকে ভস্মসাৎ ও সসাগরা ধরিত্রীকে পাত্রসাৎ করিয়া কৃতকৃত্য হইয়াছি, আপনি সনাতন পরম পুরুষ, আপনি যে আমাকে পরাভব করিলেন, এক্ষণে ইহা আমার পক্ষে অতীব শ্লাঘনীয়ই হইয়াছে।

तद्गतिं मतिमतां वरेप्सितां
पुण्यतीर्थगमनाय रक्ष मे।

पीड़यिष्यति न मां खिलीकृता
स्वर्गपद्धतिरभोगलोलुपम् ॥ ८७

८७ अ:। तत् ( हे ) मतिमतां वर ! पुख्यतीर्थगमनाय ईप्सितां मे गतिं रक्ष। खिली
स्वर्गपद्धति: अभोगलोलुपं मां न पीड़यिष्यति ॥ वाच्य—ईप्सिता मे गति: रक्ष्यताम्।
लोलुप: अहं खिलीकृतया स्वर्गपद्धत्या न पीड़यिष्ये ॥

८७। तत् तस्मात् कारणात् हे मतिमतां वर ! पुख्यतीर्थगमन
आप्तुमिष्टाम् ईप्सितां मे गतिं रक्ष पालय। किन्तु खिलीकृता दुर
कृता अपि स्वर्गपद्धति: अभोगलोलुपं भोगनि:स्पृहं मां न पीड़यिष्य
अतस्तामेव जहीत्यर्थ: ॥

৮৭। আমি ভোগবাসনায় একান্তই পরাঙ্মুখ হইয়াছি, অতএব স্বর্গপথ অ
হওয়া আমার পক্ষে পীড়াজনক নহে, কিন্তু হে সুধীবর! পুণ্যতীর্থ গমনের নি
আমার অভীষ্ট স্বৈরগতি রক্ষা করুন।

प्रत्यपद्यत तथेति राघव: प्राङ्मुखश्च विससर्ज सायकम्
भार्गवस्य सुकृतोऽपि सोऽभवत् स्वर्गमार्गपरिघो दुरत्यय:॥

८८ अ:। राघव: तथेति प्रत्यपद्यत प्राङ्मुख: ( सन् ) सायकं विससर्ज्ज च। स: ( साय
सुकृत: अपि भार्गवस्य दुरत्यय: स्वर्गमार्गपरिघ: अभवत् ॥ वाच्य—राघवेण तथेति प्रत्यप
प्राङ्मुखेन सायको विसस्रजे। दुरत्ययेन स्वर्गमार्गपरिघेण अभूयत ॥

८८। राघव: तथेति प्रत्यपद्यत अङ्गीकृतवान्। प्राङ्मुख: इन्द्रदिङ्मुख
सायकं विससर्ज च। स सायक: सुकृतोऽपि साधुकारिणोऽपि। करोते
क्विप्। भार्गवस्य दुरत्ययो दुरतिक्रम: स्वर्गमार्गस्य परिघ: प्रतिबन्ध
अभवत् ॥

৮৮। রাঘব "তাহাই হউক" বলিয়া তাঁহার বাক্যে অঙ্গীকারপূর্ব্বক পূর্ব্বমুখ হই
শর পরিত্যাগ করিলেন; তখন সেই শর পুণ্যবান্ পরশুরামের দুরতিক্রম স্বর্গ
অবরুদ্ধ করিল।

राघवोऽपि चरणौ तपोनिधे:
क्षम्यतामिति वदन् समस्पृशत्।
निर्जितेषु तरसा तरस्विनां
शत्रुषु प्रणतिरेव कीर्त्तये ॥ ८९

८९ अ:। राघव: अपि क्षम्यताम् इति वदन् तपोनिधे: चरणौ समस्पृशत्। तरस्विनां तर

...तेषु मनुषु प्रणति: कीर्त्तये एव ( भवति )॥ वाच्य—राघवेण वदता समस्व इत्यूच्यताम्। ...त्वा भूयते॥

८८। राघवोऽपि 'क्षम्यताम्' इति वदन् तपोनिधेर्भार्गवस्य चरणौ ...मस्पृशत् प्रणनाम। तथाहि—तरस्विनां बलवतां तरसा बलेन निर्जितेषु ...षु प्रणतिरेव कीर्त्तये भवतीति शेष:॥

৮৮। রামও তখন "ক্ষমা করুন" এই বলিয়া তপোনিধি সেই পরশুরামের চরণ-...স্পর্শ করিলেন। বাহুবলপরাজিত শত্রুর সমীপে প্রণত হওয়া বীরগণের ...র কীর্ত্তিরই কথা, সন্দেহ নাই।

...राजसत्वमवधूय मातृकं पित्र्यमस्मि गमित: शमं यदा।
...अनिन्दितफलो मम त्वया निग्रहोऽप्ययमनुग्रहीकृत:॥९०

९० अ:। यदा मातृकं राजसत्त्वम् अवधूय पित्र्यं शमं गमित: अस्मि, तदा त्वया मम अनिन्दित-...फलो निग्रह: अपि अनुग्रहीकृत: ननु॥ वाच्य—शमं गमितेन मया भूयते। त्वम् अनिन्दित-...निग्रहमपि इमम् अनुग्रहीकृतवान्॥

९०। मातुरागतं मातृकं राजसत्वं रजोगुणप्रधानत्वम् अवधूय पितु-...र्गतं पित्र्यं शमं यदा गमितोऽस्मि। तदा त्वया मम अपेक्षितत्वात् ...अनिन्दितम् अगर्हितं फलं स्वर्गहानिलक्षणं यस्य सोऽयं निग्रह: अपकार: ...अनुग्रहीकृत: ननु उपकारीकृत: खलु॥

৯০। পরশুরাম বলিলেন,—হে রাম! আপনি আমাকে মাতৃসম্বন্ধীয় রাজসিক ...ভাব পরিহার করাইয়া যে, পৈতৃক শান্তিগুণ অবলম্বন করাইয়াছেন; ইহাতে ...অনিন্দিত ফলজনক স্বর্গপথরোধরূপ এই নিগ্রহও আমার পক্ষে অনুগ্রহস্বরূপ হইয়াছে।

साधयाम्यहमविघ्नमस्तु ते
देवकार्य्यमुपपादयिष्यत:।
ऊचिवानिति वच: सलक्ष्मणं
लक्ष्मणाग्रजमृषिस्तिरोदधे॥ ९१

९१ अ:। अहं साधयामि। देवकार्य्यम् उपपादयिष्यत: ते अविघ्नम् अस्तु। सलक्ष्मणं ...लक्ष्मणाग्रजम् इति वच: ऊचिवान् ऋषि: तिरोदधे॥ वाच्य—मया साध्यते। अविघ्नेन भूयताम्। ...ऋषिणा तिरोदधे॥

९१। अहं साधयामि गच्छामि। देवकार्य्यमुपपादयिष्यत: सम्पाद-...यतस्ते अविघ्नमस्तु विघ्नाभावोऽस्तु। 'अव्ययं विभक्ति'—इत्यादिना ...अभावे अव्ययीभाव:। सह लक्ष्मणेन सलक्ष्मणं तम्। 'तेन सहेति

तुल्ययोगि' इति बहुव्रीहिः । लक्ष्मणाग्रजं रामम् इति वचः अभि-
उक्तवान् । ब्रूञः क्तसुः । ऋषिस्तिरोदधे अन्तर्दधे ॥

पौराणिकी वार्त्ता।—पुरा किल तपोबलदृप्तेन दशकन्धरेण परिपीड़िताः सेन्द्रा दे-
क्षीरोदशायिनो भगवतो नारायणस्य शरणमागत्य विविधैस्तवैः तं तुष्टुवुः, तेन हि प्रसन्नः स भ-
देवासुरैरपि अवध्यं तं निशाचरं विनाशयितुं नररूपेण धरायामवततार इति ॥

৯১। হে রাঘব! আপনি দেবকার্য্যসাধনের জন্য এই ধরাধামে অবতীর্ণ হই-
ছেন, আপনার মঙ্গল হউক; আমি চলিলাম, ঋষি পরশুরাম সলক্ষ্মণ রামচন্দ্রকে
এই কথা বলিয়া অন্তর্হিত হইলেন।

तस्मिन् गते विजयिनं परिरभ्य रामं
स्नेहादमन्यत पिता पुनरेव जातम् ।
तस्याभवत् क्षणशुचः परितोषलाभः
कक्षाग्निलङ्घिततरोरिव वृष्टिपातः ॥ ९२

९२ अः। तस्मिन् गते (सति) पिता विजयिनं रामं स्नेहात् परिरभ्य पुनः जातम् एव अम-
क्षणशुचः तस्य परितोषलाभः कक्षाग्निलङ्घिततरोः वृष्टिपातः इव अभवत् ॥ वाच्य—पित्रा पुन-
जातः (रामः) अमन्यत। वृष्टिपातेन इव परितोषलाभेन अभूयत ॥

९२। तस्मिन् भार्गवे गते सति, विजयिनं रामं पिता स्नेहात् परि-
रभ्य आलिङ्ग्य, पुनर्जातमिव अमन्यत। क्षणं शुग् यस्येति विग्रहः। क्षण-
शुचस्तस्य दशरथस्य परितोषलाभः सन्तोषप्राप्तिः, कक्षाग्निना दावानलेन
'कक्षः शुष्ककाननवीरुधोः' इति विश्वः। लङ्घितस्य अभिहतस्य तरोः वृष्टि-
पात इव, अभवत् ॥

৯২। পরশুরাম প্রস্থান করিলে, পিতা দশরথ বিজয়ী রামকে আলিঙ্গন করিয়া
স্নেহবশতঃ মনে করিলেন যেন রামচন্দ্রের পুনর্জ্জন্মলাভ হইল এবং তিনি দাবানলা-
ক্রান্ত বৃক্ষের উপর বৃষ্টিপাতের ন্যায় ক্ষণস্থায়ী শোকের পর পরিতোষপ্রাপ্ত হইলেন।

अथ पथि गमयित्वा क्लृप्तरम्योपकार्य्ये
कतिचिदवनिपालः शर्व्वरीः शर्व्वकल्पः ।
पुरमविशदयोध्यां मैथिलीदर्शनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥ ९३

इति श्रीमहाकविकालिदासकृतौ रघुवंशे सीतापरिणयो नाम
एकादशः सर्गः ॥ ११

९३। अथ शर्वकल्पः अवनिपालः क्लृप्तरम्योपकार्य्ये पथि कतिचित् शर्वरीः गमयित्वा मैथिली-
...नाम् अङ्गनानां लोचनैः कुवलयितगवाक्षाम् अयोध्यां पुरम् अविशत् ॥ वाच्य—शर्वकल्पं न
...नालैः कुवलयितगवाक्षा अयोध्या पूः अविश्यत ॥

९३। अथ ईषदसमाप्तः शर्वः शर्वकल्पः । 'ईषदसमाप्ते'—इति ...प्रत्ययः । अवनिपालः क्लृप्ता रम्या नवा उपकार्य्या यस्मिन् सः तस्मिन् ... कतिचित् शर्वरीः रात्रीः गमयित्वा मैथिलीदर्शनीनाम् अङ्गनानां ...नैः कुवलयानि येषां सञ्जातानि कुवलयिताः । 'तदस्य सञ्जातं ...रकादिभ्य इतच्' इति इतच्प्रत्ययः । कुवलयिता गवाक्षा यस्यास्तां ...म् अयोध्याम् अविशत् प्रविष्टवान् ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीवनी-
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे
महाकाव्ये सीतापरिणयो नाम एकादशः सर्गः ॥ ११

৯৩। অনন্তর শিবোপম অবনীপতি দশরথ পথিমধ্যে পরিচারকগণকর্ত্তৃক বিরচিত ...গে কয়েকরাত্রি অতিবাহিত করিয়া নিজ রাজধানী অযোধ্যাপুরে প্রবেশ করি-...। তখন জনকনন্দিনীর সন্দর্শনমানসে পুরনারীগণ গবাক্ষবিবরে দৃষ্টিনিক্ষেপ ...া বোধ হইল যেন গবাক্ষসকলে কুবলয়কুল বিকসিত হইয়া রহিয়াছে।

একাদশ সর্গ সমাপ্ত ॥ ১১

## द्वादशः सर्गः ।

—००४००—

**निर्विष्टविषयस्नेहः सः दशान्तमुपेयिवान् ।**
**आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि ॥ १**

१ अः । निर्विष्टविषयस्नेहः दशान्तम् उपेयिवान् सः उषसि प्रदीपार्चिः इव आसन्ननिर्वाणः आसीत् । वाच्य—निर्विष्टविषयस्नेहेन उपेयुषा प्रदीपार्चिषा इव, आसन्ननिर्वाणेन तेन अभूयत

वन्दामहे महोद्दण्डदोर्दण्डौ रघुनन्दनौ ॥
तेजोनिर्जितमार्त्तण्डमण्डलौ लोकनन्दनौ ॥

१ । स्नेहयन्ति प्रीणयन्ति पुरुषमिति स्नेहाः । पचाद्यच् । स्निह्यन्ति पुरुषा येषु इति वा स्नेहाः । अधिकरणार्थे घञ् । विषयाः शब्दादयः एव स्नेहाः निर्विष्टा भुक्ता विषयस्नेहाः येन स तथोक्तः । "निर्वेशो भृति भोगयोः" इति विश्वः । दशा जीवनावस्था तस्य अन्तं वार्द्धक्यम् उपेयिवान् स दशरथः । उषसि प्रदीपार्चिरिव दीपज्वालेव । आसन्नं निर्वाणं मोक्षो यस्य सः तथोक्तः आसीत् । अर्चिःपक्षे तु विषयो देश आश्रयः भाजनमिति यावत् । 'विषयः स्यान्द्रियार्थे देशे जनपदेऽपि च' इति विश्वः । स्नेहः तैलादिः । 'स्नेहस्तैलादिकरसे द्रवे स्यात् सौहृदेऽपि च' इति विश्वः । दशा वर्त्तिका । 'दशा वर्त्ताववस्थायाम्' इति विश्वः । निर्वाणं विनाशः । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने' इति यादवः ॥

১। উষাকালের দীপশিখা যেমন পাত্রস্থিত তৈল ও বর্ত্তি নিঃশেষিত করিয়া নির্ব্বাণোন্মুখ হয়, রাজা দশরথও তদ্রূপ পার্থিব বিষয়মমতা পরিত্যাগপূর্ব্বক অন্তিম দশায় উপনীত হইয়া মোক্ষপ্রাপ্তির সমীপবর্ত্তী হইলেন।

**तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।**
**कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ २**

२ अः । जरा कैकेयीशङ्कया इव पलितच्छद्मना कर्णमूलम् आगत्य, 'रामे श्रीः न्यस्यताम्' इति तम् आह ॥ वाच्य—जरया "रामे श्रियं न्यस्यस्व", इति स उच्यते ॥

२ । जरा कैकेयीशङ्कयेव । पलितस्य केशादिशौक्लस्य छद्मना मिषेण । 'पलितं जरसा शौक्ल्यं केशादौ' इत्यमरः । कर्णमूलं कर्णोपकण्ठम् आगत्य रामे श्रीः राज्यलक्ष्मीः न्यस्यतां निधीयताम् इति तमाह

दशरथो वृद्धोऽहम् इति विचार्य रामस्य यौवराज्याभिषेकं चकाङ्क्ष इत्यर्थः ॥

২। জরা কৈকেয়ীভয়ে ব্যস্ত হইয়াই যেন পলিতচ্ছলে তাঁহার কর্ণমূলে উপস্থিত হইয়া "রামচন্দ্রকে রাজ্যলক্ষ্মী প্রদান কর" এই কথা বলিল।

**सा पौरान् पौरकान्तस्य रामस्याभ्युदयश्रुतिः ।**
**प्रत्येकं ह्लादयाञ्चक्रे कुल्येवोद्यानपादपान् ॥ ३**

३ अः। पौरकान्तस्य रामस्य सा अभ्युदयश्रुतिः कुल्या उद्यानपादपान् इव पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥ वाच्य—तया अभ्युदयश्रुत्या कुल्यया उद्यानपादपा इव पौराः (ह्लादयाञ्चक्रिरे) ॥

३। सा पौरकान्तस्य रामस्य अभ्युदयश्रुतिः अभिषेकवार्त्ता, कुल्या कृत्रिमा सरित्। 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः। उद्यानपादपान् इव, पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥

৩। অনন্তর প্রজাপ্রিয় রামের রাজ্যাভিষেকবার্ত্তা বিঘোষিত হইলে, কৃত্রিম সরিৎ যেরূপ উদ্যানস্থিত তরুসকলকে প্রফুল্ল করে, তদ্রূপ সেই অভিষেকবার্ত্তা প্রত্যেক পুরবাসিগণকে পুলকিত করিল।

**तस्याभिषेकसम्भारं कल्पितं क्रूरनिश्चया ।**
**दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः ॥ ४**

४ अः। क्रूरनिश्चया कैकेयी तस्य कल्पितम् अभिषेकसम्भारं शोकोष्णैः पार्थिवाश्रुभिः दूषयामास ॥ वाच्य—क्रूरनिश्चयया कैकेय्या कल्पितः अभिषेकसम्भारः दूषयामासे ॥

४। क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं सम्भृतम् अभिषेकस्य सम्भारम् उपकरणं शोकोष्णैः पार्थिवाश्रुभिः दूषयामास। स्वदुःखमूलेन राजशोकेन प्रतिबबन्धेत्यर्थः ॥

৪। ক্রূরস্বভাবা কৈকেয়ী, রামচন্দ্রের অভিষেকনিমিত্ত সমাহৃত দ্রব্যসম্ভার নরপতি দশরথের শোকোষ্ণ নয়নবারিদ্বারা কলুষিত করিল।

**सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।**
**उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ ५**

५ अः। सा चण्डी भर्त्रा आश्वासिता (सती) तत्संश्रुतौ वरौ इन्द्रसिक्ता भूः बिलमग्नौ उरगौ इव उद्ववाम किल ॥ वाच्य—आश्वासितया तया चण्ड्या इन्द्रसिक्तया भुवा उद्ववमाते [उद्वेमाते] ॥

५। चण्डी अतिकोपना। 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। सा किल भर्त्रा आश्वासिता अनुनीता सती तेन भर्त्रा संश्रुतौ प्रतिज्ञातौ वरौ,

इन्द्रेण सिक्ता अभिवृष्टा भूः बिले वल्मीकादौ मग्नौ उरगौ इव। उद्वाम
उज्जगार ॥

৫। কোপনস্বভাবা কৈকেয়ী পতিকর্ত্তৃক তদ্রূপ আশ্বাসিত হইয়া পূর্ব্বপ্রতিশ্রুত বরদ্বয় যাচ্ঞা করিল। বোধ হইল—বর্ষাকালীন মেঘধারাসিক্ত ভূমি যেন বল্মীকাদি বিবরস্থিত সর্প দুইটি উদ্গিরণ করিয়াছিল।

तयोश्चतुर्दशैकेन रामं प्राव्राजयत् समाः।
द्वितीयेन सुतस्यैच्छद्वैधव्यैकफलां श्रियम् ॥ ६

६ अः। (सा) तयोः एकेन रामं चतुर्दश समाः प्राव्राजयत्, द्वितीयेन वैधव्यैकफलां सुत(स्य) श्रियम् ऐच्छत् ॥ वाच्य—रामः प्राव्राज्यत। वैधव्यैकफला श्रीः ऐष्यत ॥

६। सा तयोः वरयोः मध्ये एकेन वरेण रामं चतुर्दशसमाः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। प्राव्राजयत् प्रावासयत्। द्वितीयेन वरेण सुतस्य भरतस्य वैधव्यैकफलां स्ववैधव्यमात्रफलां न तूपभोगफलाम् इति भावः। श्रियमैच्छदियेष ॥

पौराणिकी वार्त्ता।—अथ कदाचित् समरे असुरपराक्रममसहिष्णुर्मघवा दशरथं साहाय्यार्थमामन्त्रयामास, वासवसखः सोऽपि राजा तदानीमिन्द्रप्रार्थनया असुरैः समं युयुधे, अस्मिन्नेव समये कैकेयी जयश्रियं लभमानमपि बाणविद्धताङ्गं राजानं बहुशः शुश्रूषामासे, तेन परितुष्टः स राजा तस्यै द्वौ वरौ दातुमङ्गीचकार। किन्तु मन्थराप्रणोदिता क्रूरनिश्चया कैकेयी समयमपेक्षमाणा तदानीं न तद्वरद्वयमग्रहीत्। इदानीं लब्धावसरा कैकेयी एकेन रामस्य द्वादश समाः वनवासमपरेण स्वतनयस्य राज्यप्राप्तिरूपं वरद्वयं ययाच इति ॥

৬। সেই বরদ্বয়ের মধ্যে একটীতে চতুর্দ্দশবৎসর রামের বনবাস, দ্বিতীয়টীতে স্বীয় বৈধব্যবিধায়ক ভরতের রাজ্যাভিষেক অভিলাষ করিলেন।

पित्रा दत्तां रुदन् रामः प्राङ्महीं प्रत्यपद्यत।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥ ७

७ अः। रामः रुदन् (सन्) प्राक् पित्रा दत्तां महीं प्रत्यपद्यत, पश्चात् वनाय गच्छ इति तत् आज्ञाम् मुदितः (सन्) अग्रहीत् ॥ वाच्य—रामेण प्राक् दत्ता मही रुदता प्रत्यपद्यत, गम्यताम् इति आज्ञा अग्राहि ॥

७। रामः प्राक् पित्रा दत्तां महीं रुदन् प्रत्यपद्यत अङ्गीचकार। स्वत्यागदुःखादिति भावः। पश्चात् वनाय गच्छ इति एवंरूपां तदाज्ञां पित्राज्ञां मुदितः अग्रहीत् पित्राज्ञाकरणलाभादिति भावः ॥

৭। রাজা নিজ অধিকার পরিত্যাগ করিতেছেন বলিয়া রাম প্রথমতঃ রোদন করিতে করিতে পিতৃদত্ত পৃথিবী গ্রহণ করিলেন, পরে "বনগমন কর" এই আজ্ঞা শুনিয়া হর্ষসহকারে তাহা গ্রহণ করিলেন।

**दधती मङ्गलक्षौमे वसानस्य च वल्कले ।**
**ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥ ८**

८ अ:। मङ्गलक्षौमे दधतः वल्कले वसानस्य च तस्य समं मुखरागं जनाः विस्मिताः ददृशुः ॥ वाच्य—विस्मितैः जनैः मुखरागो ददृशे ॥

८। मङ्गलक्षौमे दधतो वल्कले च वसानस्य आच्छादयतस्य तस्य रामस्य सममेकविधं मुखरागं मुखवर्णं जना विस्मिता ददृशुः । सुखदुःखयोरविकृत इति भावः ॥

৮। রাম যখন রাজ্যাভিষেকজন্য মঙ্গলময় ক্ষৌমযুগল এবং আবার যখন বনবাস জন্য বল্কলপরিধান করিলেন, তখন পুরবাসিগণ তাঁহার একইরূপ মুখরাগ সন্দর্শন করিয়া বিস্মিত হইয়াছিল।

**स सीतालक्ष्मणसखः सत्याद्गुरुमलोपयन् ।**
**विवेश दण्डकारण्यं प्रत्येकञ्च सतां मनः ॥ ९**

९ अ:। सः गुरुं सत्यात् अलोपयन् सीतालक्ष्मणसखः ( सन् ) दण्डकारण्यं सतां मनः च प्रत्येकं विवेश ॥ वाच्य—अलोपयता सीतालक्ष्मणसखेन तेन ( रामेण ) विविशे ॥

९। स रामः गुरुं पितरं सत्यात् वरदानरूपात् अलोपयन् अभ्रंशयन्। सीतालक्ष्मणयोः सखेति विग्रहः । ताभ्यां सहितः सन्, दण्डकारण्यं विवेश, सतां मनश्च प्रत्येकं विवेश । पितृभक्त्या सर्वे सन्तः तुष्टा इति भावः ॥

৯। অনন্তর রাম পিতৃসত্য পালনজন্য সীতা ও লক্ষ্মণসহ দণ্ডকারণ্যে প্রবেশ করিলেন, ইহাতে মনে হইল—যেন ইহাঁরা প্রত্যেক সাধুদিগের মনোমধ্যে প্রবিষ্ট হইলেন।

**राजापि तद्वियोगार्त्तः स्मृत्वा शापं स्वकर्मजम् ।**
**शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ १०**

१० अ:। राजा अपि तद्वियोगार्त्तः ( सन् ) स्वकर्मजं शापं स्मृत्वा शरीरत्यागमात्रेण शुद्धिलाभम् अमन्यत। वाच्य—तद्वियोगार्त्तेन राज्ञापि शुद्धिलाभः अमन्यत ॥

१०। तद्वियोगार्त्तः पुत्रवियोगदुःखितः राजा अपि स्वकर्मणा मुनिवधरूपेण जातः स्वकर्मजातः शापं पुत्रशोकजं मरणात्मकं स्मृत्वा शरीरत्यागमात्रेण देहत्यागेनैव शुद्धिलाभं प्रायश्चित्तम् अमन्यत। स्मृतमर्थः ॥

১০। পুত্রবিরহকাতর রাজা দশরথও মুনিপুত্রবধনিবন্ধন স্বীয় কর্ম্মফল-অভি... স্মরণপূর্ব্বক শরীর পরিত্যাগ করাই স্বকৃত পাপের উচিত প্রায়শ্চিত্ত মনে করিলেন।

विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम् ।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ११

११ अ: । विप्रोषितकुमारम् अस्तमितेश्वरं तत् राज्यं रन्ध्रान्वेषणदक्षाणां द्विषाम् आमि... ययौ ॥ वाच्य—विप्रोषितकुमारेण अस्तमितेश्वरेण तेन राज्येन आमिषता यये ॥

११ । विप्रोषिताः प्रवासं गताः कुमारा यस्मात् तथोक्तम् । अस्तमि... मृत ईश्वरो राजा यस्य तत्तथोक्तं तद्राज्यं रन्ध्रान्वेषणदक्षाणां द्विषा... आमिषतां भोग्यवस्तुतां ययौ । 'आमिषं भोग्यवस्तुनि' इति केशवः ॥

১১। কুমারগণ বনগমন এবং রাজা দশরথ শরীর পরিত্যাগ করিলে, সেই কোশ... রাজ্য যেন ছিদ্রান্বেষণনিপুণ রিপুগণের প্রলোভনসামগ্রী হইয়া উঠিল।

अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ १२

१२ अ: । अथ अनाथाः प्रकृतयः मातृबन्धुनिवासिनं भरतं स्तम्भिताश्रुभिः मौलैः आनाय... मासुः ॥ वाच्य—अनाथाभिः प्रकृतिभिः मातृबन्धुनिवासी भरतः आनाययामासे ॥

१२ । अथ अनाथाः प्रकृतयः अमात्याः । 'प्रकृतिः सहजे योनाव... मात्ये परमात्मनि' इति विश्वः । मातृबन्धुनिवासिनं भरतं स्तम्भित... श्रुभिः पितृमरणगुप्त्यर्थमिति भावः । मौलैः आप्तैः सचिवैः आनायया... मासुः आगमयाञ्चक्रुः ॥

১২। অনন্তর প্রভুহীন অমাত্যগণ, অশ্রুসংবরণপূর্ব্বক রাজার মৃত্যু গোপন করি... সমর্থ এইরূপ বিশ্বস্ত সচিবগণ দ্বারা মাতুলালয়বাসী ভরতকে আনয়ন করাইলেন।

श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः ।
मातुर्न केवलं स्वस्याः श्रियोऽप्यासीत् पराङ्मुखः ॥ १३

१३ अ: । कैकेयीतनयः पितुः तथाविधं मृत्युं श्रुत्वा स्वस्याः मातुः केवलं न ( किन्तु ) श्रि... अपि पराङ्मुखः आसीत् ॥ वाच्य—कैकेयीतनयेन पराङ्मुखेण अभूयत ॥

१३ । कैकेयीतनयो भरतः पितुः तथाविधं स्वमातृमूलं मृत्युं मर... श्रुत्वा स्वस्या मातुः केवलं मातुरेव पराङ्मुखः न, किन्तु श्रियः अपि... पराङ्मुखः आसीत् ॥

১৩। কৈকেয়ীতনয় ভরত অযোধ্যায় উপস্থিত হইয়া স্বীয় জননীর দোষেই পি...

হইয়াছে এই সংবাদ শ্রবণ করিয়া কেবল মাতার প্রতি বিরক্ত হইলেন, এমন রাজ্যলক্ষ্মীগ্রহণেও পরাঙ্মুখ হইয়াছিলেন।

**ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः ।**
**तस्य पश्यन् ससौमित्रेरुदश्रुर्वसतिद्रुमान् ॥ १४**

१४ अ:। (सः) ससैन्यः आश्रमालयैः दर्शितान् ससौमित्रेः तस्य वसतिद्रुमान् पश्यन् उदश्रुः (सन्) रामम् अन्वगात् च ॥ वाच्य—पश्यता ससैन्येन पश्यता उदश्रुणा (भरतेन) रामः अन्वगायि ॥

१४। ससैन्यो भरतः रामम् अन्वगाच्च। किं कुर्वन्? आश्रमालयैः आश्रमवासिभिः दर्शितान् एते रामनिवासा इति कथितान् ससौमित्रेः लक्ष्मणसहितस्य तस्य रामस्य वसतिद्रुमान् आवासवृक्षान् पश्यन् उदश्रुः रुदन् ॥

১৪। অনন্তর ভরত সজলনয়নে আশ্রমবাসী মুনিগণ প্রদর্শিত রামলক্ষ্মণের বাসস্থিত তরুসকল নিরীক্ষণ করিতে করিতে সৈন্যগণ সমভিব্যাহারে রামের অনুগমন করিলেন।

**चित्रकूटवनस्थञ्च कथितस्वर्गतिर्गुरोः ।**
**लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा ॥ १५**

१५ अ:। गुरोः कथितस्वर्गतिः (सः) चित्रकूटवनस्थं तं च अनुच्छिष्टसम्पदा लक्ष्म्या निमन्त्रयाञ्चक्रे। वाच्य—कथितस्वर्गतिना चित्रकूटवनस्थः स निमन्त्रयाञ्चक्रे ॥

१५। चित्रकूटवनस्थं तं रामञ्च गुरोः पितुः कथितस्वर्गतिः कथितमरणः सन्नित्यर्थः। अनुच्छिष्टाः अननुभूतावशिष्टा सम्पद्गुणोत्कर्षो यस्याः सा। 'सम्पद्भूतौ गुणोत्कर्षे' इति केशवः। तया लक्ष्म्या करणेन निमन्त्रयाञ्चक्रे आहूतवान् ॥

১৫। তিনি চিত্রকূটবনস্থিত রামচন্দ্রের সমীপে গমনপূর্ব্বক পিতার স্বর্গগমনবার্ত্তা জ্ঞাপন করিয়া অভুক্ত রাজ্যলক্ষ্মী উপভোগের জন্য তাঁহাকে সনির্ব্বন্ধ অনুরোধ করিলেন।

**स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे।**
**परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः ॥ १६**

१६ अ:। सः हि तस्मिन् प्रथमजे अकृतश्रीपरिग्रहे भुवः स्वीकरणात् आत्मानं परिवेत्तारं मेने। वाच्य—तेन आत्मा परिवेत्ता मेने ॥

१६। स हि भरतः प्रथमजे अग्रजे तस्मिन् रामे अकृतश्रीपरिग्रहे सति स्वयं भुवः स्वीकरणादात्मानं परिवेत्तारं मेने। 'परिवेत्तानुजोऽनूढ़े

ज्येष्ठे दारपरिग्रहात्' इत्यमरः । भूपरिग्रहोऽपि दारपरिग्रह इति भावः ॥

১৬। অগ্রজ রামচন্দ্র রাজ্যলক্ষ্মী গ্রহণে অসম্মত হইলে জ্যেষ্ঠসত্ত্বে রাজ্য গ্রহণ করায় ভরত আপনাকে পরিবেত্তা বলিয়া মনে করিলেন।

**तमशक्यमपाक्रष्टुं निदेशात् स्वर्गिणः पितुः ।**
**ययाचे पादुके पश्चात् कर्त्तुं राज्याधिदेवते ॥ १७**

१७ अः। स्वर्गिणः पितुः निदेशात् अपाक्रष्टुम् अशक्यं तं पश्चात् पादुके राज्याधिदेवते कर्त्तुं ययाचे । वाच्य—( तेन ) अशक्यः स ययाचे ।

१७। स्वर्गिणः पितुर्निदेशात् अपाक्रष्टुं निवर्त्तयितुमशक्यं तं रामं पश्चाद्राज्याधिदेवते स्वामिन्यौ कर्त्तुं पादुके ययाचे ॥

১৭। কিন্তু তিনি স্বর্গগত পিতার আদেশ অতিক্রম করিতে না পারিয়াই তখন রাজ্যের অধিষ্ঠাত্রী দেবতা করিবার জন্য তাঁহার পাদুকাযুগল প্রার্থনা করিলেন।

**स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत् पुरीम् ।**
**नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् ॥ १८**

१८ अः। सः भ्रात्रा तथा इति उक्त्वा विसृष्टः नन्दिग्रामगतः ( सन् ) तस्य राज्यं न्यासम् इव अभुनक् ॥ वाच्य—भ्रात्रा विसृष्टेन तेन पुरी नैवाविश्यत, नन्दिग्रामगतेन ( तेन ) अभुज्यत ।

१८। स भरतः भ्रात्रा रामेण तथेत्युक्त्वा विसृष्टः सन् पुरीमयोध्यां नाविशदेव । किन्तु नन्दिग्रामगतः सन् तस्य रामस्य राज्यं न्यासमिव निक्षेपमिव अभुनक् अपालयत्, न तु उपभुक्तवानित्यर्थः । अन्यथा 'भुजोऽनवने' इत्यात्मनेपदप्रसङ्गः । भुजेर्लङ् ॥

১৮। রামচন্দ্র তখন "তাহাই হউক" এই কথা বলিয়া পাদুকাযুগল প্রদানপূর্বক ভরতকে বিদায় দিলেন, ভরতও অযোধ্যাপুরে প্রবেশ না করিয়া নন্দিগ্রামে গমন করিলেন এবং তথায় অবস্থানপূর্বক অপরের ন্যস্তধন রক্ষার ন্যায় রাজ্যশাসন করিতে লাগিলেন।

**दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।**
**मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ १९**

१९ अ.। ज्येष्ठे दृढभक्तिः राज्यतृष्णापराङ्मुखः भरतः इति ( उक्तानुष्ठानेन ) मातुः पापस्य प्रायश्चित्तम् इव अकरोत् ॥ वाच्य—दृढभक्तिना राज्यतृष्णापराङ्मुखेण, भरतेन अक्रियत ।

१९। ज्येष्ठे दृढभक्तिः राज्यतृष्णापराङ्मुखो भरत इति पूर्वोक्तानुष्ठानेन मातुः पापस्य प्रायश्चित्तं तदपनोदकं कर्म अकरोदिव । इत्युत्

১৪। সুমিত্রাতনয় শত্রুঘ্ন অগ্রজের সন্তানোৎপত্তিশ্রবণে অতীব প্রীত হইলেন ... রাত্রি প্রভাত হইলে যুক্তকরে মুনিকে অভিবাদন পূর্ব্বক রথারোহণে প্রস্থান করিলেন।

**स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः ।**
**वनात् करमिवादाय सत्त्वराशिमुपस्थितः ॥ १५**

१५ अ:। सः च मधूपघ्नं (नाम लवणपुरं) प्राप, कुम्भीनस्याः कुक्षिजश्च वनात् करम् इव सत्त्वराशिम् आदाय उपस्थितः ॥

१५। स शत्रुघ्नश्च मधूपघ्नं नाम लवणपुरं प्राप। कुम्भीनसी नाम रावणस्वसा, तस्याः कुक्षिजः पुत्रो लवणश्च वनात् करं बलिमिव सत्त्वानां प्राणिनां राशिमादाय उपस्थितः प्राप्तः ॥

১৫। তিনি লবণের মধুপঘ্ন নামক পুরীতে উপস্থিত হইলেন; কুম্ভীনসীনন্দন লবণও তখন বন হইতে রাজকরস্বরূপ প্রাণিনিচয় আহরণপূর্ব্বক গৃহে প্রত্যাবৃত্ত হইয়াছিল।

**धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः ।**
**क्रव्याद्गणपरीवारश्चिताग्निरिव जङ्गमः ॥ १६**

१६ अ:। धूमधूम्रः वसागन्धी ज्वालाबभ्रुशिरोरुहः क्रव्याद्गणपरीवारः (अतएव) जङ्गमः चिताग्निः इव (स्थितः) ॥

१६। किम्भूतो लवणः? धूम इव धूम्रः कृष्णलोहितवर्णः 'धूम्र-धूमलौ कृष्णलोहिते' इत्यमरः। वसागन्धी हृन्मेदोगन्धः सोऽस्यास्तीति, वसागन्धी। 'हृन्मेदस्तु वपा वसा' इत्यमरः। ज्वाला इव बभ्रवः पिङ्गाः शिरोरुहाः केशाः, यस्य स तथोक्तः। 'विपुले नकुले विष्णौ बभ्रुः ना पिङ्गले त्रिषु' इत्यमरः। क्रव्यं मांसमदन्तीति क्रव्यादो राक्षसाः, तेषां गण एव परीवारो यस्य स तथोक्तः, अतएव जङ्गमः चरिष्णुश्चिताग्नि-रिव स्थितः। कृशानुपक्षे धूमैर्धूम्रवर्णः, ज्वाला एव शिरोरुहाः, क्रव्यादो गृध्रादय इत्यनुसन्धेयम् ॥

১৬। সেই নিশাচর লবণের বর্ণ ধূম্রের ন্যায়, তাহার গাত্রের গন্ধ বসার তুল্য, কেশকলাপ অনল শিখাসদৃশ পিঙ্গল এবং সে মাংসাশী রাক্ষসসমূহে পরিবৃত; তাহাকে দেখিলে বোধ হয় যেন চিতানল সঞ্চরণ করিতেছে।

**अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।**
**रुरोध सम्मुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ १७**

१७ अ:। लक्ष्मणानुजः अपशूलं तं लवणम् आसाद्य रुरोध। रन्ध्रप्रहारिणां जयः सम्मुखीनः हि ॥

१७। लक्ष्मणानुजः शत्रुघ्नः अपशूलं शूलरहितं तं लवणमासाद्य रुरोध। तथाहि—रन्ध्रप्रहारिणां रन्ध्रप्रहरणशीलानाम्, अपशूलत्वेनावेक्षितं रन्ध्रम्, जयः सम्मुखीनो हि, सम्मुखस्य दर्शनो हि। 'यथामुखसम्मुखस्य दर्शनः खः' इति खप्रत्ययः। अधिकारलक्षणार्थस्तु दुर्लभ एव।

১৭। লক্ষ্মণানুজ শক্রুঘ্ন, লবণকে শূলহীন দেখিয়া তাহাকে অবরোধ করিলেন। যাঁহারা শক্রর ছিদ্রান্বেষণ করিয়া প্রহার করেন, বিজয়লক্ষ্মী নিঃশংসয় তাঁহাদের অভিমুখেই গমন করিয়া থাকেন।

नातिपर्य्याप्तमालक्ष्य मत्कुक्षेरद्य भोजनम्।
दिष्ट्या त्वमसि मे धात्रा भीतेनेवोपपादितः॥ १८

इति सन्तर्ज्य शत्रुघ्नं राक्षसस्तज्जिघांसया।
प्रांशुमुत्पाटयामास मुस्तास्तम्बमिव द्रुमम्॥ १९

१८—१९ अः। राक्षसः, अद्य मत्कुक्षेः भोजनं न अतिपर्य्याप्तम् आलक्ष्य भीतेन इव धात्रा दिष्ट्या मे त्वम् उपपादितः असि इति शत्रुघ्नं सन्तर्ज्य तज्जिघांसया प्रांशुं द्रुमं मुस्तास्तम्बम् इव उत्पाटयामास॥

१८-१९। युग्मम्। राक्षसो लवणः, अद्य मत्कुक्षेः, भुज्यत इति भोजनम् भोज्यं मृगादिकम्, नातिपर्य्याप्तमनतिसमग्रमालक्ष्य दृष्ट्वा भीतेनेव धात्रा दिष्ट्या भाग्येन मे त्वमुपपादितः कल्पितोऽसि, इति शत्रुघ्नं सन्तर्ज्य, तस्य शत्रुघ्नस्य जिघांसया हन्तुमिच्छया प्रांशुमुन्नतं द्रुमं, मुस्तास्तम्बमिव अक्लेशेन उत्पाटयामास॥

১৮—১৯। "বিধাতা অদ্য আমার উদরের ভোজ্য অত্যন্ত অপ্রচুর দেখিয়া বোধ হয় ভীত হইয়াই যেন আমার ভাগ্যবলে তোমাকে এই স্থানে উপস্থিত করিয়াছেন।" রাক্ষস লবণ শক্রঘ্নকে এইরূপে তর্জ্জন করিয়া তাঁহার বিনাশবাসনায় মুস্তাস্তম্বের (মুথা) ন্যায় এক অত্যুচ্চ বৃক্ষ অনায়াসে উৎপাটন করিল।

सौमित्रेर्निशितैर्बाणैरन्तरा शकलीकृतः।
गात्रं पुष्परजः प्राप न शाखी नैरृतेरितः॥ २०

२० अः। नैरृतेरितः शाखी अन्तरा निशितैः बाणैः शकलीकृतः (सन्) सौमित्रेः गात्रं न प्राप, (किन्तु) पुष्परजः (प्राप)॥

२०। नैरृतेरितो रक्षःप्रेरितः शाखी अन्तरा मध्ये निशितैर्बाणैः शकलीकृतः सन् सौमित्रेः शत्रुघ्नस्य गात्रं न प्राप, किन्तु पुष्परजः प्राप॥

২০। শক্রঘ্নের শাণিত শরনিকর দ্বারা সেই বৃক্ষ পথিমধ্যে খণ্ড খণ্ড হইয়া গেল

বৃক্ষ তাঁহার শরীর স্পর্শ করিতে পারিল না ; কেবল বৃক্ষের পুষ্পপরাগমাত্র তাঁহার স্পর্শ করিয়াছিল।

**विनाशात् तस्य वृक्षस्य रक्षस्तस्मै महोपलम्।**
**प्रजिघाय कृतान्तस्य मुष्टिं पृथगिव स्थितम्॥ २१**

२१ अ:। रक्ष: तस्य वृक्षस्य विनाशात् महोपलं पृथक् स्थितं कृतान्तस्य मुष्टिम् इव, तस्मै प्रजिघाय

२१। रक्षो लवणस्तस्य वृक्षस्य विनाशाद्धेतो:, महोपलं महान्तं पाषाणम्, पृथक् स्थितं कृतान्तस्य यमस्य मुष्टिमिव, मुष्टिशब्दो द्विलिङ्ग:। तस्मै शत्रुघ्नाय प्रजिघाय प्रतिहृतवान्॥

২১। বৃক্ষ ব্যর্থ হইল দেখিয়া রাক্ষস লবণ, শত্রুঘ্নের উদ্দেশ্যে এক প্রকাণ্ড প্রস্তর নিক্ষেপ করিল, ঐ প্রস্তরের সর্ব্বত্রই যেন কৃতান্তের মুষ্টি পৃথগ্‌ভাবে অবস্থিত ছিল।

**ऐन्द्रमस्त्रमुपादाय शत्रुघ्नेन स ताड़ित:।**
**सिकतात्वादपि परां प्रपेदे परमाणुताम्॥ २२**

२२ अ:। स: शत्रुघ्नेन ऐन्द्रम् अस्त्रम् उपादाय ताड़ित: (सन्) सिकतात्वात् अपि परां परमाणुतां प्रपेदे॥

२२। स महोपल: शत्रुघ्नेन ऐन्द्रम् इन्द्रदेवताकमस्त्रमुपादाय ताड़ितोऽभिहत: सन् सिकतात्वात् सिकताभावादपि परां परमाणुतां प्रपेदे। यतोऽणुर्नास्ति स परमाणुरित्याहु:॥

২২। শত্রুঘ্নও ঐন্দ্র অস্ত্র গ্রহণপূর্ব্বক ঐ প্রস্তরকে এরূপভাবে আহত করিলেন যে, উহা বালি হইতেও সূক্ষ্ম পরমাণুরূপে পরিণত হইল।

**तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचर:।**
**एकताल इवोत्पातपवनप्रेरितो गिरि:॥ २३**

२३ अ:। निशाचर: दक्षिणं दो: उद्यम्य एकताल: उत्पातपवनप्रेरित: गिरि: इव, तं उपाद्रवत्॥

२३। निशाचरो राक्षसो दक्षिणं दो:, 'ककुद्दोषणी' इति भगवतो भाष्यकारस्य प्रयोगाद्दोष्शब्दस्य नपुंसकत्वं द्रष्टव्यम्। 'भुजबाहू प्रवेष्टो दो:' इति पुंलिङ्गसाहचर्य्यात् पुंस्त्वञ्च। तथा च प्रयोग:—'दोषं तस्य तथाविधस्य भजत' इति। सव्येतरं बाहुमुद्यम्य एकस्तालस्तदाख्यो वृक्षो यस्मिन् स एकताल: उत्पातपवनेन प्रेरितो गिरिरिव तं शत्रुघ्नं उपाद्रवत् अभिद्रुत:॥

২৩। অনন্তর নিশাচর দক্ষিণ বাহু উত্তোলন করিয়া উৎপাতপবনচালিত একমাত্র তালতরুসম্পন্ন পর্ব্বতের ন্যায় তাঁহার প্রতি প্রধাবিত হইল।

**कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन्।**
**आनिनाय भुवः कम्पं जहाराश्रमवासिनाम्॥ २४**

२४ अ:। सः शत्रुः कार्ष्णेन पत्रिणा भिन्नहृदयः पतन् भुवः कम्पम् आनिनाय, आश्रमवासिनां (कम्पम्) जहार।

२४। सः शत्रुर्लवणः कार्ष्णेन वैष्णवेन पत्रिणा बाणेन। उक्तञ्च रामायणे—'एवमेष प्रजनितो विष्णोस्तेजोमयः शरः' इति। 'विष्णुर्नारायणः कृष्णः' इत्यमरः। भिन्नहृदयः पतन् भुवः कम्पम् आनिनाय आनीतवान्। देहभारादित्यर्थः। आश्रमवासिनां कम्पं जहार, तन्नाशादकुतोभया बभूवुरित्यर्थः॥

২৪। শত্রুঘ্ন বৈষ্ণবাস্ত্র দ্বারা শত্রু লবণের হৃদয় বিদীর্ণ করিলেন, সে ক্ষিতিতলে পতিত হইলে তাহার দেহভারে ভূকম্প উপস্থিত হইল, কিন্তু তাহার বিনাশে আশ্রমবাসীদিগের হৃৎকম্প অপনীত হইয়াছিল।

**वयसां पङ्क्तयः पेतुर्हतस्योपरि विद्विषः।**
**तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः॥ २५**

२५ अ:। हतस्य विद्विषः उपरि वयसां पङ्क्तयः पेतुः, तत्प्रतिद्वन्द्विनः मूर्ध्नि कुसुमवृष्टयः (पेतुः)।

२५। हतस्य, विद्वेष्टीति विद्विट्, तस्य विद्विषो राक्षसस्योपरि वयसां पक्षिणां पङ्क्तयः पेतुः। तत्प्रतिद्वन्द्विनः शत्रुघ्नस्य मूर्ध्नि तु दिव्याः कुसुमवृष्टयः पेतुः॥

২৫। তখন সেই মৃত শত্রুর উপর পক্ষিগণ নিপতিত হইল এবং তাহার প্রতিদ্বন্দ্বী শত্রুঘ্নের মস্তকে আকাশ হইতে কুসুম বৃষ্টি হইতে লাগিল।

**स हत्वा लवणं वीरस्तदा मेने महौजसः।**
**भ्रातुः सोदर्य्यमात्मानमिन्द्रजिद्वधशोभिनः॥ २६**

२६ अ:। सः वीरः लवणं हत्वा तदा आत्मानं महौजसः इन्द्रजिद्वधशोभिनः भ्रातुः सोदर्यं मेने।

२६। स वीरः शत्रुघ्नो लवणं हत्वा तदा आत्मानं महौजसो महाबलस्य इन्द्रजिद्वधेन शोभिनो भ्रातुर्लक्ष्मणस्य समानोदरे शयितं सोदर्य्यमेकोदरं मेने। 'सोदराद्यः' इति यत्प्रत्ययः॥

২৬। সেই বীর শত্রুঘ্ন লবণকে বধ করিয়া আপনাকে ইন্দ্রজিদ্বধশোভী মহাবল পরাক্রান্ত ভ্রাতা লক্ষ্মণের সোদর বলিয়া গৌরবান্বিত মনে করিলেন।

**तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।**
**शुशुभे विक्रमोदग्रं व्रीड़यावनतं शिरः ॥ २७**

२७ अ:। चरितार्थैः तपस्विभिः संस्तूयमानस्य तस्य विक्रमोदग्रं व्रीड़या अवनतं शिरः शुशुभे ॥

२७। चरितार्थैः कृतार्थैः कृतकार्य्यैः तपस्विभिः संस्तूयमानस्य तस्य शत्रुघ्नस्य विक्रमेण उदग्रमुन्नतं व्रीड़या लज्जया अवनतं नम्रं शिरः शुशुभे। विक्रान्तस्य लज्जैव भूषणमिति भावः ॥

২৭। কৃতকার্য্য তপস্বিগণ শত্রুঘ্নের বলবীর্য্যের প্রশংসা করিতে থাকিলে বিক্রম দ্বারা তাঁহার অত্যুন্নত মস্তক লজ্জাবশতঃ অবনত হইয়া শোভিত হইতে লাগিল।

**उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः ।**
**निर्ममे निर्ममोऽर्थेषु मथुरां मधुराकृतिः ॥ २८**

२८ अ:। पौरुषभूषणः अर्थेषु निर्ममः मधुराकृतिः सः कालिन्द्याः उपकूलं मथुरां ( नाम ) पुरीं निर्ममे ॥

२८। पौरुषभूषणः अर्थेषु विषयेषु निर्ममो निस्पृहः मधुराकृतिः सौम्यरूपः स शत्रुघ्नः कालिन्द्याः यमुनाया उपकूलं कूले। विभक्त्यर्थे-ऽव्ययीभावः। मथुरां नाम पुरीं निर्ममे निर्मितवान् ॥

২৮। বিষয়নিস্পৃহ মধুরাকৃতি পুরুষকারভূষণ সেই শত্রুঘ্ন কালিন্দীর উপকূলে মথুরানাম্নী এক পুরী নির্ম্মাণ করিলেন।

**या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः ।**
**स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता ॥ २९**

२९ अ:। या सौराज्यप्रकाशाभिः पौरविभूतिभिः स्वर्गाभिष्यन्दवमनं कृत्वा उपनिवेशिता इव बभौ।

२९। या पूः, शोभनो राजा यस्याः पुरः सा सुराज्ञी सुराज्ञ्या भावः सौराज्यं तेन प्रकाशाभिः प्रकाशमानाभिः पौराणां विभूतिभिरैश्वर्य्यैः, स्वर्गस्याभिष्यन्दोऽतिरिक्तजनः, तस्य वमनमाहरणं कृत्वा उपनिवेशिता उपस्थापिता इव बभौ। अत्र कौटिल्यः—'भूतपूर्व्वमभूतपूर्व्वं वा जनपदं परदेशप्रवाहेण स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति ॥

২৯। উত্তম রাজার পালনগুণে তত্রত্য পুরবাসীদিগের ঐশ্বর্য্য দেখিয়া মনে হইতে লাগিল—যেন স্বর্গ হইতে অতিরিক্ত লোক আহরণ করিয়া তথায় উপনিবেশ স্থাপন করা হইয়াছে।

**तत्र सौधगतः पश्यन् यमुनां चक्रवाकिनीम्।**
**हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥ ३०**

३० अ:। तत्र सौधगतः चक्रवाकिनीं यमुनां हेमभक्तिमतीं भूमेः प्रवेणीं इव, पश्यन् पिप्रिये।

३०। तत्र मथुरायां सौधगतो हर्म्यारूढ़ः स चक्रवाकिनीं चक्रवाकवतीं यमुनां हेमभक्तिमतीं सुवर्णरचनावतीं भूमेः प्रवेणीं वेणीमिव। 'वेणी प्रवेणी' इत्यमरः। पश्यन् पिप्रिये प्रीतः। 'प्रीञ् प्रीणने' इति धातोर्दैवादिकाल्लिट् ॥

৩০। তিনি তথাকার সৌধোপরি আরোহণপূর্ব্বক ভূমির স্বর্ণখচিত বেণীর ন্যায় চক্রবাক-মিথুন-পরিবৃত যমুনাকে সন্দর্শন করিয়া পরম প্রীত হইলেন।

**सखा दशरथस्यापि जनकस्य च मन्त्रकृत्।**
**सञ्चस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१**

३१ अ:। दशरथस्य जनकस्य च सखा मन्त्रकृत् (वाल्मीकिः) अपि उभयप्रीत्या मैथिलेयौ यथाविधि सञ्चस्कार ॥

३१। सम्प्रति रामसन्तानवृत्तान्तमाह—सखा इति। दशरथस्य जनकस्य च सखा मन्त्रकृत् मन्त्रद्रष्टा स वाल्मीकिरपि। 'सुकर्म्मपापमन्त्रपुण्येषु कृञ' इति क्विप्। उभयोर्दशरथजनकयोः प्रीत्या स्नेहेन मैथिलेयौ मैथिलीपुत्रौ यथाविधि यथाशास्त्रं सञ्चस्कार संस्कृतवान्। जातकर्म्मादिभिरिति शेषः ॥

৩১। এদিকে দশরথ ও জনকের সখা মন্ত্রকর্ত্তা মহর্ষি বাল্মীকি উভয় মিত্রের প্রতি প্রীতিবশত যথাবিধি বৈদেহীতনয়দ্বয়ের জাতকর্ম্মাদি সংস্কার সম্পন্ন করিলেন।

**स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया।**
**कविः कुशलवावेव चकार किल नामतः ॥ ३२**

३२ अ:। सः कविः (वाल्मीकिः) कुशलवोन्मृष्टगर्भक्लेदौ तौ तदाख्यया नामतः कुशलवौ एव चकार किल ॥

३२। स कविर्वाल्मीकिः कुशैः दर्भैः लवैर्गोपुच्छलोमभिः। 'लवो लवणकिञ्जल्कपक्ष्मगोपुच्छलोमसु' इति वैजयन्ती। उन्मृष्टो गर्भक्लेदो गर्भोपद्रवो ययोस्तौ कुशलवोन्मृष्टगर्भक्लेदौ तौ मैथिलेयौ तेषां कुशानाञ्च लवानां चाख्यया नामतो नाम्ना यथासंख्यं कुशलवावेव चकार किल। कुशोन्मृष्टः कुशः, लवोन्मृष्टः लवः ॥

৩২। সেই শিশুদ্বয়ের একটীর কুশ এবং অপরটীর লব অর্থাৎ গোপুচ্ছলোমদ্বারা

(গ)র্ভক্লেশ গার্জ্জিত হইয়াছিল বলিয়া আদিকবি বাল্মীকি তাহাদের নাম যথাক্রমে কুশ ও লব রাখিলেন।

**साङ्गञ्च वेदमध्याप्य किञ्चिदुत्क्रान्तशैशवौ ।**
**स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ ३३**

३३ अ: । किञ्चित् उत्क्रान्तशैशवौ ( तौ ) साङ्गं च वेदम् अध्याप्य कविप्रथमपद्धतिं स्वकृतिं च गापयामास ॥

३३ । किञ्चिदुत्क्रान्तशैशवौ अतिक्रान्तबाल्यौ तौ साङ्गञ्च वेदमध्याप्य कवीनां प्रथमपद्धतिम् कवितावीजमित्यर्थ: । स्वकृतिं काव्यं रामायणाख्यं गापयामास । गापयतेर्लिट् । शब्दकर्म्मत्वात् 'गतिबुद्धि—' इत्यादिना द्विकर्म्मकत्वम् ॥

৩৩। কুমারদ্বয় কথঞ্চিৎ শৈশবকাল অতিক্রম করিলে তিনি তাহাদিগকে সাঙ্গ-বেদ অধ্যয়ন করাইয়া কবিদিগের প্রথম সোপানস্বরূপ স্বকৃত রামায়ণ কাব্য গান করা-ইতে লাগিলেন।

**रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रत: ।**
**तद्वियोगव्यथां किञ्चिच्छिथिलीचक्रतु: सुतौ ॥ ३४**

३४ अ: । सुतौ रामस्य वृत्तं मातु: अग्रत: मधुरं गायन्तौ तद्वियोगव्यथां किञ्चित् शिथिलीचक्रतु: ॥

३४ । तौ सुतौ रामस्य वृत्तं मातुरग्रतो मधुरं गायन्तौ तद्वियोगव्यथां रामविरहवेदनां किञ्चित् शिथिलीचक्रतु: ॥

৩৪। সেই তনয়দ্বয় জননীসন্নিধানে রামের মধুর চরিত গান করিয়া তাঁহার স্বামি-বিরহব্যথার কথঞ্চিৎ লাঘব করিয়াছিলেন।

**इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजस: ।**
**तद्योगात् पतिवत्नीषु पत्नीष्वासन् द्विसूनव: ॥ ३५**

३५ अ: । रघो: वंश्या: त्रेताग्नितेजस: इतरे त्रय: अपि तद्योगात् पतिवत्नीषु द्विसूनव: आसन् ॥

३५ । रघोर्वंश्या वंशे भवा:, त्रेतेत्यग्नयस्त्रेताग्नय:, तेषां तेज इव तेजो येषां ते त्रेताग्नितेजस:, इतरे रामादन्ये त्रयो भरतादयोऽपि तद्योगात् तेषां योगात् भरतादिसम्बन्धात् पतिवत्नीषु भर्त्तृमतीषु जीवत्पतिकासु ख्यातिमतीष्वित्यर्थ: । 'पतिवत्नी सभर्त्तृका' इत्यमर: । 'अन्तर्वत्पति-वतोर्नुक्' इति ङीप्प्रत्ययो नुमागमश्च । पत्नीषु द्विसूनव आसन् । द्वौ द्वौ सूनू येषां ते द्विसूनव इति विग्रह:, क्वचित् संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् ॥

৩৫। এদিকে গার্হপত্যাদি অগ্নিত্রয়-তেজঃসদৃশ রঘুবংশভূষণ ভরত, লক্ষ্মণ ও শত্রুঘ্ন এই অপর ভ্রাতৃত্রয়ের স্ব স্ব পত্নীতে দুই দুইটী করিয়া পুত্র জন্মিয়াছিল।

शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते ।
मथुराविदिशे सून्वोर्निदधे पूर्वजोत्सुकः ॥ ३६

३६ अ:। पूर्वजोत्सुकः शत्रुघ्नः बहुश्रुते शत्रुघातिनि सुबाहौ च सून्वोः मथुराविदिशे निदधे।

३६। पूर्वजोत्सुको ज्येष्ठप्रियः शत्रुघ्नो बहुश्रुते शत्रुघातिनि सुबाहौ च तन्नामकयोः सून्वोर्मथुरा च विदिशा च ते नगर्यौ निदधे, निधाय गत इत्यर्थः ॥

৩৬। শত্রুঘ্ন জ্যেষ্ঠতনয় দর্শনে সমুৎসুক হইয়া প্রভূত শাস্ত্রজ্ঞানসম্পন্ন শত্রুঘাতী ও সুবাহু নামক তনয়দ্বয়কে মথুরা ও বিদিশার আধিপত্য প্রদান করিলেন।

भूयस्तपोव्ययो मा भूद्वाल्मीकेरिति सोऽत्यगात् ।
मैथिलीतनयोद्गीतनिःस्पन्दमृगमाश्रमम् ॥ ३७

३७ अ:। सः मैथिलीतनयोद्गीतनिःस्पन्दमृगं वाल्मीकेः आश्रमं भूयः (अपि) तपोव्ययो मा भूत् इति अत्यगात् ॥

३७। स शत्रुघ्नः मैथिलीतनययोः कुशलवयोरुद्गीतेन निःस्पन्दमृगं गीतप्रियतया निश्चलहरिणं वाल्मीकेराश्रमं भूयः पुनरपि तपोव्ययः संविधानकरणार्थं तपोहानिर्मा भूदिति हेतोः, अत्यगात्, अतिक्रम्य गत इत्यर्थः ॥

৩৭। শত্রুঘ্ন পুনরায় তথায় অবস্থান করিলে তাঁহার আতিথ্য করিতে পাছে বাল্মীকির তপোবিঘ্ন ঘটে, এজন্য তিনি জানকীতনয়দ্বয়ের সঙ্গীতশ্রবণে নিস্পন্দ মৃগকুল-সমাকীর্ণ তদীয় আশ্রম অতিক্রমপূর্ব্বক গমন করিলেন।

वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम् ।
लवणस्य वधात् पौरैरीक्षितोऽत्यन्तगौरवम् ॥ ३८

३८ अ:। वशी लवणस्य वधात् पौरैः अत्यन्तगौरवम् ईक्षितः (सन्) रथ्यासंस्कारशोभिनीम् अयोध्यां विवेश च ॥

३८। वशी स लवणस्य वधाद्धेतोः पौरैः पौरजनैरत्यन्तं गौरवं यस्मिन् कर्मणि तत् तथा ईक्षितः सन् रथ्यासंस्कारैस्तोरणादिभिः शोभते या तामयोध्यां विवेश च ॥

৩৮। অনন্তর বশী শত্রুঘ্ন পথসংস্কার দ্বারা পরিশোভিত অযোধ্যায় প্রবেশ করিলেন. তৎকালে পৌরগণ লবণবধজন্য তাঁহাকে অত্যন্ত গৌরবসহকারে নিরীক্ষণ করিতে লাগিল।

**स ददर्श सभामध्ये सभासद्भिरुपस्थितम् ।**
**रामं सीतापरित्यागादसामान्यपतिं भुवः ॥ ३९**

३९ अ: । स सभामध्ये सभासद्भिः उपस्थितं सीतापरित्यागात् भुवः असामान्यपतिं रामं ददर्श ॥

३९ । स शत्रुघ्नः सभामध्ये सभासद्भिः सभ्यैरुपस्थितं सेवितं सीतापरित्यागाद्भुवोऽसामान्यपतिम् असाधारणपतिं रामं ददर्श ॥

৩৯। তিনি তথায় উপস্থিত হইয়া সভাসদ্গণে সেবেত সীতাপরিত্যাগহেতু একমাত্র পৃথিবীরই পতি রামচন্দ্রকে দর্শন করিলেন।

**तमभ्यनन्दत् प्रणतं लवणान्तकमग्रजः ।**
**कालनेमिवधात् प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥ ४०**

४० अ: । अग्रजः लवणान्तकं प्रणतं तं कालनेमिवधात् प्रीतः तुराषाट् शार्ङ्गिणम् इव अभ्यनन्दत् ॥

४० । अग्रजो रामो लवणस्यान्तकं हन्तारं प्रणतं तं शत्रुघ्नं, कालनेमिर्नाम राक्षसः, तस्य वधात् प्रीतः । तुरं वेगं सहत इति तुराषाडिन्द्रः । 'छन्दसि सहः' इति ण्विः, यद्वा सहतेर्णिचि कृते साहयतेः क्विप्, 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः 'सहेः साढः सः' इति षत्वम् । शार्ङ्गिणम् उपेन्द्रमिव अभ्यनन्दत् ॥

৪০। অনন্তর ইন্দ্র যেরূপ কালনেমিবধহেতু প্রীত হইয়া বিষ্ণুর অভিনন্দন করিয়াছিলেন, অগ্রজ রামচন্দ্রও তদ্রূপ লবণান্তক প্রণত শত্রুঘ্নের অভিনন্দন করিলেন।

**स पृष्टः सर्वतो वार्त्तमाख्यद्राज्ञे न सन्ततिम् ।**
**प्रत्यर्पयिष्यतः काले कवेराद्यस्य शासनात् ॥ ४१**

४१ अ: । सः पृष्टः ( सन् ) सर्वतः वार्त्तं राज्ञे आख्यत्, सन्ततिं नाख्यत्, ( कुतः ) ? काले प्रत्यर्पयिष्यतः आद्यस्य कवेः शासनात् ॥

४१ । स शत्रुघ्नः पृष्टः सन् सर्वतो वार्त्तं कुशलं राज्ञे रामाय आख्यत् आख्यातवान् । चक्षिङो लुङ्, 'चक्षिङः ख्याञ्' इति ख्याञादेशः, 'अस्यतिवक्ति—' इत्यङ्, 'आतो लोप इति च' इत्याकारलोपः, ख्यातेर्वा लुङ् । सन्ततिं कुशलवोत्पत्तिं न आख्यत् । कुतः ? कालेऽवसरे प्रत्यर्पयिष्यत आद्यस्य कवेर्वाल्मीकेः शासनात् ॥

৪১। রাজা রামচন্দ্র তাঁহাকে কুশলসংবাদ জিজ্ঞাসা করিলে তিনি সকলবিষয়েরই সংবাদ নিবেদন করিলেন, কিন্তু তনয়োৎপত্তির বিষয় কিছুই বলিলেন না; আদিকবি বাল্মীকি স্বয়ং আসিয়াই যথাকালে তাঁহাকে পুত্রদ্বয়সমর্পণ করিবেন, এজন্য তিনি ঐ বিষয় প্রকাশ করিতে নিষেধ করিয়াছিলেন।

**अथ जानपदो विप्रः शिशुमप्राप्तयौवनम्।**
**अवतार्य्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः॥ ४२**

४२ अ.। अथ जानपदो विप्रः अप्राप्तयौवनं शिशुं भूपतेः द्वारि अङ्कशय्यास्थं (यथा तथा) अवतार्य्य चक्रन्द॥

४२। अथ जनपदे भवो जानपदो विप्रः, कश्चिदिति शेषः, अप्राप्तयौवनं शिशुम् मृतमिति शेषः, भूपतेः रामस्य द्वारि अङ्कशय्यास्थं यथा तथा अवतार्य्य अङ्कस्थत्वेनैव अवरोप्य चक्रन्द चुक्रोश॥

৪২। অনন্তর কোন সময়ে জনপদবাসী এক ব্রাহ্মণ অপ্রাপ্তযৌবন একটী শিশুকে শবশয্যা হইতে রাজদ্বারে নামাইয়া ক্রোড়ে করিয়া ক্রন্দন করিতে লাগিলেন।

**शोचनीयासि वसुधे या त्वं दशरथाच्च्युता।**
**रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता॥ ४३**

४३ अः। (हे) वसुधे! शोचनीया असि या त्वं दशरथात् च्युता रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता॥

४३। हे वसुधे! दशरथात् च्युता या त्वं रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता सती शोचनीयासि॥

৪৩। "হে বসুন্ধরে! একেই তুমি রাজা দশরথের হস্তচ্যুত হইয়া শোচনীয় দশায় উপনীত হইয়াছিলে, তারপর সম্প্রতি রামের হস্তগত হইয়া কষ্ট হইতেও কষ্টতর দশা প্রাপ্ত হইয়াছ!"

**श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः।**
**न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत्॥ ४४**

४४ अः। गोप्ता राघवः तस्य शुचः हेतुं श्रुत्वा जिह्राय, हि (यस्मात्) अकालभवः मृत्युः इक्ष्वाकुपदं न अस्पृशत्॥

४४। गोप्ता रक्षको राघवस्तस्य विप्रस्य शुचः शोकस्य हेतुं पुत्रमरणरूपं श्रुत्वा जिह्राय लज्जितः। कुतः? हि यस्मात् अकालभवो मृत्युरिक्ष्वाकूणां पदं राष्ट्रं न अस्पृशत्। वृद्धे जीवति यवीयान् न म्रियते इत्यर्थः॥

৪৪। প্রজাপ্রতিপালক রাজা রামচন্দ্র ব্রাহ্মণের শোককারণ শ্রবণ করিয়া লজ্জিত হইলেন, কেননা, ইতঃপূর্ব্বে অকালমৃত্যু ইক্ষ্বাকুকুলকে কখনও স্পর্শ করে নাই।

**स मुहूर्त्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम्।**
**यानं सस्मार कौबेरं वैवस्वतजिगीषया॥ ४५**

४५ अ:। स: दु:खितं द्विजं मुहूर्त्तं क्षमस्व इति आश्वास्य वैवस्वतजिगीषया कौवेरं यानं सस्मार ॥

४५। स रामो दु:खितं द्विजं मुहूर्त्तं क्षमस्व इत्याश्वास्य वैवस्वतस्य यमस्यापि जिगीषया जेतुमिच्छया कौवेरं यानं पुष्पकं सस्मार ॥

৪৫। তিনি "আপনি মুহূর্ত্তমাত্র অপেক্ষা করুন" দুঃখিত দ্বিজকে এই কথা বলিয়া আশ্বাসপ্রদানপূর্ব্বক যমকে জয় করিবার জন্য কুবেরের পুষ্পকরথ স্মরণ করিলেন।

**आत्तशस्त्रस्तदध्यास्य प्रस्थित: स रघूद्वह: ।**
**उच्चचार पुरस्तस्य गूढ़रूपा सरस्वती ॥ ४६**

४६ अ:। स: रघूद्वह: आत्तशस्त्र: (सन्) तत् अध्यास्य प्रस्थित:। तस्य पुर: गूढ़रूपा सरस्वती उच्चचार ॥

४६। स रघूद्वहो राम: आत्तशस्त्र: सन् तत् पुष्पकमध्यास्य प्रस्थित:। तस्य पुरो गूढ़रूपा सरस्वती अशरीरा वाक् उच्चचार उद्बभूव ॥

**राजन् प्रजासु ते कश्चित् अपचार: प्रवर्त्तते ।**
**तमन्विष्य प्रशमयेर्भवितासि तत: कृती ॥ ४७**

४७ अ:। (हे) राजन् ! ते प्रजासु कश्चित् अपचार: प्रवर्त्तते, तम् अन्विष्य प्रशमये:, तत: भवितासि ॥

४७। हे राजन् ! ते प्रजासु कश्चिदपचारो वर्णधर्म्मव्यतिरेक: प्रवर्त्तते। तमपचारमन्विष्य प्रशमये:, तत: कृती कृतकृत्यो भवितासि भविष्यसि ॥

৪৬—৪৭। অনন্তর রঘুকুলতিলক রাম শস্ত্রগ্রহণপূর্ব্বক পুষ্পকরথে আরোহণ করিয়া প্রস্থিত হইলে, তাঁহার সম্মুখভাগে সহসা "রাজন্! আপনার প্রজাগণমধ্যে কোন এক অপচার ঘটিয়াছে, অনুসন্ধান করিয়া তাহার শান্তিবিধান করুন, এইরূপ করিলেই আপনি কৃতকার্য্য হইতে পারিবেন।" এইরূপ এক অশরীরিণী আকাশবাণী উত্থিত হইল।

**इत्याप्तवचनाद्रामो विनेष्यन् वर्णविक्रियाम् ।**
**दिश: पपात पत्रेण वेगनिष्कम्पकेतुना ॥ ४८**

४८ अ:। इति आप्तवचनात् राम: वर्णविक्रियां विनेष्यन् वेगनिष्कम्पकेतुना पत्रेण दिश: पपात ॥

४८। इत्याप्तवचनात् रामो वर्णविक्रियां वर्णापचारं विनेष्यन् अपनेष्यन् वेगेन निष्कम्पकेतुना पत्रेण वाहनेन पुष्पकेण। 'पत्रं वाहनपक्षयो:' इत्यमर:। दिश: पपात धावति स्म ॥

৪৮। রাম এবংবিধ বিশ্বস্তবাক্য শ্রবণ করিয়া ব্রাহ্মণাদি চতুর্ব্বর্ণের ধর্ম্মবিকার

নিবারণকামনায় অত্যন্ত বেগবশতঃ নিষ্কম্পপতাকান্বিত রথদ্বারা চতুর্দ্দিক্ ভ্রমণ করিতে লাগিলেন।

**অথ ধূমাভিতাম্রাক্ষং বৃক্ষশাখাবলম্বিনম্।**
**দদর্শ কঞ্চিদৈক্ষ্বাকস্তপস্যন্তমধোমুখম্॥ ৪৯**

৪৯ অ:। অথ ঐক্ষ্বাকঃ ধূমাভিতাম্রাক্ষং বৃক্ষশাখাবলম্বিনম্ অধোমুখং তপস্যন্তং কঞ্চিৎ দদর্শ॥

৪৯। অথ ইক্ষ্বাকুবংশপ্রভব ঐক্ষ্বাকো রামঃ 'কোপধাদণ্' ইত্যণি 'দাণ্ডিনায়ন—' ইত্যাদিনোকারলোপনিপাতঃ। ধূমেন পীয়মানেন অভিতাম্রাক্ষং বৃক্ষশাখাবলম্বিনমধোমুখং তপস্যন্তং তপশ্চরন্তং কঞ্চিৎ পুরুষং দদর্শ॥

৪৯। অনন্তর ইক্ষ্বাকুবংশভূষণ রাম দেখিতে পাইলেন,—এক ব্যক্তি বৃক্ষশাখায় লম্বমান হইয়া অধোমুখে তপস্যা করিতেছে এবং ঐ বৃক্ষের তলদেশস্থিত হুতাশনের ধূমপানে তাহার নয়নদ্বয় তাম্রবর্ণ ধারণ করিয়াছে।

**পৃষ্টনামান্বয়ো রাজ্ঞা স কিলাচষ্ট ধূমপঃ।**
**আত্মানং শম্বুকং নাম শূদ্রং সুরপদার্থিনম্॥ ৫০**

৫০ অ:। রাজ্ঞা পৃষ্টনামান্বয়ঃ ধূমপঃ সঃ আত্মানং সুরপদার্থিনং শম্বুকং নাম শূদ্রম্ আচষ্ট কিল।

৫০। রাজ্ঞা নাম চ অন্বয়শ্চ তৌ পৃষ্টৌ নামান্বয়ৌ যস্য স তথোক্তঃ। ধূমং পিবতীতি ধূমপঃ। 'সুপি' ইতি যোগবিভাগাৎ কপ্রত্যয়ঃ স পুরুষঃ আত্মানং সুরপদার্থিনং স্বর্গার্থিনম্ অনেন প্রয়োজনমপি পৃষ্ট ইতি গম্যম্। শম্বুকং নাম শূদ্রম্ আচষ্ট বভাষে কিল॥

৫০। রাজা রামচন্দ্র তাহার নাম ও বংশাদির পরিচয় জিজ্ঞাসা করিলে ঐ ধূমপায়ী তপস্বী উত্তর করিল,—আমি শম্বুকনামক শূদ্র, স্বর্গকামনায় তপস্যা করিতেছি।

**তপস্যনধিকারিত্বাৎ প্রজানাং তমঘাবহম্।**
**শীর্ষচ্ছেদ্যং পরিচ্ছিদ্য নিয়ন্তা শস্ত্রমাদদে॥ ৫১**

৫১ অ:। তপসি অনধিকারিত্বাৎ প্রজানাম্ অঘাবহং তং শীর্ষচ্ছেদ্যম্ পরিচ্ছিদ্য নিয়ন্তা শস্ত্রম্ আদদে॥

৫১। তপসি অনধিকারিত্বাৎ প্রজানামঘাবহং দুঃখাবহং তং শূদ্রং শীর্ষচ্ছেদ্যম্। 'শীর্ষচ্ছেদাদ্যচ্চ' ইতি যৎ প্রত্যয়ঃ। পরিচ্ছিদ্য নিশ্চিত্য নিয়ন্তা রক্ষকো রামঃ শস্ত্রমাদদে জগ্রাহ॥

৫১। লোকনিয়ন্তা রাম তপস্যায় অনধিকারিতাহেতু প্রজাগণের অশুভদায়ক সেই শূদ্রের শিরশ্ছেদ কর্ত্তব্য মনে করিয়া শস্ত্রগ্রহণ করিলেন।

स तद्वक्त्रं हिमक्लिष्ट-किञ्जल्कमिव पङ्कजम् ।
ज्योतिष्कणाहतश्मश्रु कण्ठनालादपातयत् ॥ ५२

৫২ अ:। सः ज्योतिष्कणाहतश्मश्रु तद्वक्त्रं हिमक्लिष्टकिञ्जल्कं पङ्कजम् इव, कण्ठनालात् अपातयत् ॥

५२। स रामो ज्योतिष्कणैः स्फुलिङ्गैराहतानि दग्धानि श्मश्रूणि यस्य तस्य वक्त्रं हिमक्लिष्टकिञ्जल्कं पद्मजमिव कण्ठ एव नालं तस्मात् अपातयत् ॥

৫২। তিনি অগ্নিস্ফুলিঙ্গে দগ্ধশ্মশ্রু শূদ্রকের বদনমণ্ডল নীহারক্লিষ্টপরাগ পদ্মের ন্যায় কণ্ঠনাল হইতে পাতিত করিলেন।

कृतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम् ।
तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥ ५३

৫৩ अ:। शूद्रः राज्ञा स्वयं कृतदण्ड (सन्) सतां गतिं लेभे, दुश्चरेण अपि स्वमार्गविलङ्घिना तपसा न (लेभे) ॥

५३। शूद्रः शम्बूकः राज्ञा स्वयं कृतदण्डः कृतशिक्षः सन् सतां गतिं लेभे। दुश्चरेणापि स्वमार्गविलङ्घिना अनधिकारदुष्टेनेत्यर्थः, तपसा न लेभे। अत्र मनुः—'राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥" इति ॥

৫৩। শূদ্রক, স্বয়ং রাজা কর্ত্তৃক দণ্ডিত হইয়া যেরূপ সাধুদিগের সদ্গতি লাভ করিল, অনধিকারদুষ্ট দুষ্কর তপস্যাদ্বারাও তদ্রূপ ফললাভ তাহার ঘটিত না।

रघुनाथोऽप्यगस्त्येन मार्गसन्दर्शितात्मना ।
महौजसा संयुयुजे शरत्काल इवेन्दुना ॥ ५४

৫৪ अ:। रघुनाथः अपि मार्गसन्दर्शितात्मना महौजसा अगस्त्येन, इन्दुना शरत्काल इव संयुयुजे ।

५४। रघुनाथोऽपि मार्गसन्दर्शितात्मना महौजसा अगस्त्येन इन्दुना शरत्काल इव संयुयुजे सङ्गतः। इन्दावपि विशेषणं योज्यम्। रघुनाथ इव शुभ्रादित्वाच्छुक्लाभावः ॥

৫৪। রঘুপতি রামচন্দ্রের পথিমধ্যে মহাতেজা মহর্ষি অগস্ত্যের সহিত সাক্ষাৎকার হইল; তখন মনে হইল যেন বর্ষাপগমে শরৎকাল, শীতরশ্মি শশধরের সহিত সুহৃদ্-সম্মিলিত হইলেন।

**कुम्भयोनिरलङ्कारं तस्मै दिव्यपरिग्रहम् ।**
**ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् ॥ ५५**

५५ अ:। कुम्भयोनि: पीतेन समुद्रेण आत्मनिष्क्रयम् इव, दत्तं दिव्यपरिग्रहम् अलङ्कारं तस्मै ददौ ॥

५५। कुम्भयोनिरगस्त्यः पीतेन समुद्रेण आत्मनिष्क्रयमिव आत्ममोचनमूल्यमिव दत्तम्, अतएव परिगृह्यत इति व्युत्पत्त्या परिग्रहः दिव्यानां परिग्रहः परिग्राह्य इत्यर्थः, तमलङ्कारं तस्मै रामाय ददौ ॥

৫৫। কুম্ভসম্ভব মহর্ষি অগস্ত্য সাগরকে নিঃশেষরূপে পান করিলে আত্মনিষ্ক্রয়ের জন্য সাগর যে দেববাঞ্ছিত দিব্য অলঙ্কার প্রদান করিয়াছিল, তৎকালে সেই অলঙ্কার রামচন্দ্রকে প্রদান করিলেন।

**तं दधन्मैथिलीकण्ठनिर्व्यापारेण बाहुना ।**
**पश्चान्निववृते रामः प्राक् परासुर्द्विजात्मजः ॥ ५६**

५६ अ:। मैथिलीकण्ठनिर्व्यापारेण बाहुना तं दधत् रामः पश्चात् निववृते, परासुः द्विजात्मजः प्राक् (निववृते) ॥

५६। मैथिलीकण्ठनिर्व्यापारेण बाहुना तमलङ्कारं दधत् रामः पश्चात् निववृते निवृत्तः। परासुर्मृतो द्विजात्मजः प्राक् रामात् पूर्वं निववृते।

৫৬। রাম সীতার কণ্ঠাশ্লেষসম্পর্কশূন্য বাহুতে অগস্ত্যপ্রদত্ত অলঙ্কার গ্রহণ করিয়া অযোধ্যায় প্রত্যাবৃত্ত হইলেন, এদিকে তাঁহার আসিবার পূর্ব্বেই মৃত ব্রাহ্মণশিশু সঞ্জীবিত হইয়া উঠিল।

**तस्य पूर्वोदितां निन्दां द्विजः पुत्रसमागतः ।**
**स्तुत्या निवर्त्तयामास त्रातुर्वैवस्वतादपि ॥ ५७**

५७ अ:। पुत्रसमागतः द्विजः वैवस्वतात् अपि त्रातुः तस्य पूर्व्वोदितां निन्दां स्तुत्या निवर्त्तयामास ॥

५७। पुत्रसमागतः पुत्रेण सङ्गतो द्विजो वैवस्वतादन्तकादपि त्रातू रक्षकस्य, 'भीत्रार्थानां भयहेतुः' इत्यपादानात् पञ्चमी। तस्य रामस्य पूर्व्वोदितां पूर्व्वोक्तां निन्दां स्तुत्या निवर्त्तयामास ॥

৫৭। ব্রাহ্মণ পুত্রকে প্রাপ্ত হইয়া যমের নিকট হইতে তনয়ের ত্রাণকারী রামচন্দ্রের স্তুতিবাক্য দ্বারা পূর্ব্বকৃত নিন্দার প্রত্যাহার করিলেন।

**तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।**
**मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥ ५८**

५८ अ:। अध्वराय मुक्ताश्वं तं रक्षःकपिनरेश्वराः मेघाः अम्भोभिः शस्यम् इव, उपायनैः वर्षन्।

५८। अध्वराय अश्वमेधाय मुक्ताश्वं तं रामं रक्षःकपिनरेश्वराः ग्रीवविभीषणादयो राजानश्च मेघाः अम्भोभिः शस्यमिव उपायनैरभ्यवर्षन्॥

৫৮। অনন্তর রাম অশ্বমেধ সম্পাদন মানসে অবাধবিচরণ জন্য যজ্ঞীয় অশ্বের বিমোচন করিলে—মেঘ যেমন শস্যের উপর বারিবর্ষণ করে, তদ্রূপ রাক্ষসেন্দ্র বিভীষণ, কপিরাজ সুগ্রীব এবং অন্যান্য নরনাথগণ বিবিধ উপায়ন দ্বারা তাঁহাকে অভিষিক্ত করিলেন।

दिग्भ्यो निमन्त्रितास्चैनमभिजग्मुर्महर्षयः।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि॥५९

५९ अ:। निमन्त्रिताः महर्षयश्च भौमानि धिष्ण्यानि न (किन्तु) ज्योतिर्मयानि अपि (धिष्ण्यानि) हित्वा दिग्भ्यः एनम् अभिजग्मुः॥

५९। निमन्त्रिता आहूता महर्षयश्च भूम्याः सम्बन्धीनि भौमानि धिष्ण्यानि स्थानान्येव न। 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः। किन्तु ज्योतिर्मयानि नक्षत्ररूपाणि धिष्ण्यान्यपि हित्वा दिग्भ्य एनं राममभिजग्मुः॥

৫৯। নিমন্ত্রিত মহর্ষি সকল তৎকালে কেবল ভূলোক হইতে নহে, জ্যোতির্ম্ময় লোক সকল পরিত্যাগ করিয়া দিগ্দিগন্ত হইতে সেই যজ্ঞে আগমন করিতে লাগিলেন।

उपशल्यनिविष्टैस्तैः चतुर्द्वारमुखी बभौ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः॥ ६०

६० अ:। चतुर्द्वारमुखी अयोध्या उपशल्यनिविष्टैः तैः सद्यः सृष्टलोका पैतामही तनुः इव बभौ॥

६०। चत्वारि द्वाराणि एव मुखानि यस्याः सा चतुर्द्वारमुखी अयोध्या उपशल्येषु ग्रामान्तेषु निविष्टैः। 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः। तैर्महर्षिभिः सद्यः सृष्टलोका पितामहस्येयं पैतामही तनुर्मूर्त्तिरिव बभौ॥

৬০। নগরোপান্তে অবস্থিত পূতাত্মা মহর্ষিগণদ্বারা চতুর্দ্বারমুখী অযোধ্যাপুরী লোকসৃষ্টিকারিণী পিতামহতনুর ন্যায় উপশোভিত হইতে লাগিল।

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः।
अनन्यजानेः सैवासीत् यस्माज्जाया हिरण्मयी॥६१

६१ अ: । वैदेह्या: त्याग: अपि श्लाघ्य:, यस्मात् प्राग्वंशवासिन: अनन्यजाये: पत्यु: हिरण्मयी सा एव जाया आसीत् ॥

६१ । वैदेह्यास्त्यागोऽपि श्लाघ्यो वश्य एव । कुत: ? यस्मात् प्राग्वंश: प्राचीनस्थूण: यज्ञशालाविशेष: तद्वासिन:, नास्त्यन्या जाया यस्य तस्य अनन्यजाने: । 'जायाया निङ्' इति समासान्तो निङादेश: । पत्यु: रामस्य हिरण्मयी सौवर्णी । 'दाण्डिनायन—' आदिसूत्रेण निपात: । सा निजैव जाया पत्नी आसीत् । कविवाक्यमेतत् ॥

৬১। রামচন্দ্র প্রাগ্‌বংশ নামক যজ্ঞশালায় বাসকালে অন্য পত্নী পরিগ্রহ না করিয়া বৈদেহীর হিরণ্ময়ী মূর্ত্তি নির্ম্মাণপূর্ব্বক ভার্য্যার কার্য্য সম্পাদন করিয়াছিলেন, অতএব পতিকর্তৃক পরিত্যাগও সীতার পক্ষে শ্লাঘনীয় হইয়াছিল।

विधेरधिकसम्भारस्तत: प्रववृते मख: ।
आसन् यत्र क्रियाविघ्ना राक्षसा एव रक्षिण: ॥ ६२

६२ अ: । तत: विधे: अधिकसम्भार: मख: प्रववृते । तत्र क्रियाविघ्ना: राक्षसा: एव रक्षिण: आसन् ॥

६२ । ततो विधे: शास्त्रादधिकसम्भारोऽतिरिच्यमानपरिकर: मख: प्रववृते प्रवृत्त: । यत्र मखे, विहन्यन्त एभिरिति विघ्ना: प्रत्यूहा: । 'यज्ञार्थे कविधानम्' इति क: । क्रियाविघ्ना अनुष्ठानविघातका: राक्षसा एव रक्षिणो रक्षका आसन् ॥

৬২। অনন্তর বিধিবিহিত উপকরণ হইতেও অধিক দ্রব্যসম্ভার দ্বারা রামচন্দ্রের যজ্ঞ অনুষ্ঠিত হইলে পূর্ব্বে যাহারা যজ্ঞবিঘ্নকারী ছিল, সেই রাক্ষসগণই তাঁহার যজ্ঞ রক্ষা করিতে লাগিল।

अथ प्राचेतसोपज्ञं रामायणमितस्तत: ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३

६३ अ: । अथ मैथिलेयौ कुशलवौ गुरुचोदितौ ( सन्तौ ) प्राचेतसोपज्ञं रामायणम् इतस्तत: जगतु: ॥

६३ । अथ मैथिलेयौ मैथिलीतनयौ । 'स्त्रीभ्यो ढक्' इति ढक् । कुशलवौ गुरुणा वाल्मीकिना चोदितौ प्रेरितौ सन्तौ, प्राचेतस: वाल्मीकि:, उपज्ञायत इत्युपज्ञा, 'आतश्चोपसर्गे' इति कर्म्मणि अङ्प्रत्यय: । प्राचेतसस्योपज्ञा प्राचेतसोपज्ञम्, प्राचेतसेनादौ ज्ञातमित्यर्थ: । 'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमर: । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति नपुंसकत्वम् । अथ

गायतेऽनेनेत्ययनम्, रामस्यायनं चरितं रामायणं रामायणाख्यं काव्यम् । 'पूर्वपदात् संज्ञायाम्' इति णत्वम् उत्तरायणमितिवत् । इतस्ततो जगतुः । गायतेर्लिट् ॥

৬৩। তদনন্তর জানকীতনয় লব ও কুশ এই অবসরে গুরু মহর্ষি বাল্মীকির নির্দেশে তৎকৃত রামায়ণ ইতস্তত গান করিতে লাগিলেন।

**वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ ।**
**किं तद् येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥ ६४**

६४ अः । रामस्य वृत्तं, वाल्मीकेः कृतिः, तौ किन्नरस्वनौ, (अतएव) तत् किम्? येन शृण्वतां मनः हर्तुम् अलं न स्याताम् ॥

६४। रामस्य वृत्तं वर्ण्यं वस्त्विति शेषः । वाल्मीकेः कृतिः काव्यम् गेयमिति शेषः । तौ कुशलवौ किन्नरस्वनौ किन्नरकण्ठौ गायकौ, पुनरिति शेषः । अतएव तत् किम्? येन निमित्तेन तौ शृण्वतां मनो हर्तुमलं शक्तौ न स्याताम् । सर्वं सरसमित्यर्थः ॥

৬৪। একে ত রামের চরিত্র, বিশেষতঃ বাল্মীকি-বিরচিত, তাহাতে আবার গায়ক লব ও কুশ কিন্নরস্বরশালী; ইহা ভিন্ন আর কোন্ বস্তু শ্রোতৃগণের চিত্ত হরণ করিতে সমর্থ হইতে পারে?

**रूपे गीते च माधुर्य्यं तयोस्तज्ज्ञैर्निवेदितम् ।**
**ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५**

६५ अः । तज्ज्ञैः निवेदितं तयोः रूपे गीते च माधुर्य्यं सानुजः रामः कुतूहली (सन्) ददर्श शुश्राव च ॥

६५। तं जानन्तीति तज्ज्ञाः तैस्तज्ज्ञैरभिज्ञैर्निवेदितं तयोः कुशलवयोः रूपे आकारे गीते च माधुर्य्यं रामणीयकं सानुजो रामः कुतूहली सानन्दः सन् यथासंख्यं ददर्श शुश्राव च ॥

৬৫। অভিজ্ঞ লোকসকল সেই কুশ ও লবের রূপ ও গীতের মাধুর্য্য বিদিত হইয়া রামচন্দ্রের নিকট নিবেদন করিল; অনুজগণসহ রাম কুতূহলী হইয়া তাঁহাদিগকে দর্শন ও তাঁহাদিগের কৃত গীত শ্রবণ করিলেন।

**तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।**
**हिमनिष्यन्दिनी प्रातः निर्वातेव वनस्थली ॥ ६६**

६६ अः । तद्गीतश्रवणैकाग्रा अश्रुमुखी संसत् प्रातः हिमनिष्यन्दिनी निर्व्वाता वनस्थली इव बभौ ॥

६६। तयोर्गीतश्रवणे एकाग्रा आसक्ता अश्रुमुखी आनन्दादिति भाव:। संसत् सभा प्रात: हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थली इव बभौ शुशुभे। आनन्दपारवश्यान्निष्पन्दमास्ते इत्यर्थ:॥

৬৬। সঙ্গীত শ্রবণে একাগ্রমনা সভাস্থ সমস্ত লোক অশ্রুবর্ষণ করিতে থাকিলে সভা যেন প্রাতঃকালে হিমবর্ষিণী পবনবিরহিতা বনস্থলীর ন্যায় শোভা পাইতে লাগিল।

**वयोवेशविसंवादि रामस्य च तयोस्तदा।**
**जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत॥ ६७**

६७ अ:। जनता वयोवेशविसंवादि तदा तयो: रामस्य च सादृश्यं प्रेक्ष्य, नाक्षिकम्पं व्यतिष्ठत।

६७। जनता जनानां समूह:। 'ग्रामजनबन्धुसहायेभ्यस्तल्' इति तल्प्रत्यय:। वयोवेशाभ्यामेव विसंवादि विलक्षणं तदा तयो: कुशलवयो: रामस्य च सादृश्यं प्रेक्ष्य नास्ति अक्षिकम्पो यस्मिन् कर्मणि तद् यथा तथा। नञर्थस्य नशब्दस्य बहुव्रीहि:। व्यतिष्ठत अतिष्ठत्। 'समवप्रविभ्य: स्थ:' इत्यात्मनेपदम्। विस्मयादनिमिषमद्राक्षीदित्यर्थ:॥

৬৭। তৎকালে জনসঙ্ঘ সেই লব ও কুশের, রামচন্দ্রের বয়স ও বেশ ব্যতীত আকারগত সৌসাদৃশ্য সন্দর্শন করিয়া নির্নিমেষ নয়নে অবস্থান করিতে লাগিল।

**उभयोर्न तथा लोक: प्रावीण्येन विसिष्मिये।**
**नृपते: प्रीतिदानेषु वीतस्पृहतया यथा॥ ६८**

६८ अ:। लोक: उभयो: प्रावीण्येन तथा न विसिष्मिये, यथा नृपते: प्रीतिदानेषु वीतस्पृहतया (विसिष्मिये)॥

६८। लोको जन: उभयो: कुमारयो: प्रावीण्येन नैपुण्येन तथा न विसिष्मिये न विस्मितवान्, यथा नृपते: प्रीतिदानेषु वीतस्पृहतया नैस्पृह्येण विसिष्मिये॥

৬৮। নৃপতি রামচন্দ্র প্রদত্ত পারিতোষিক গ্রহণে লব ও কুশের স্পৃহাহীনতায় লোকে যেরূপ বিস্মিত হইয়াছিল, তাঁহাদের সঙ্গীত নৈপুণ্যাদি দর্শনে তাদৃশ বিস্ময়-প্রাপ্ত হইল না।

**गेये को नु विनेता वां कस्य चेयं कृति: कवे:।**
**इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम्॥ ६९**

६९ अ:। गेये क: नु वां विनेता, इयञ्च कस्य कवे: कृति: इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिम् अशंसताम्॥

६९। गेये गीते को नु वां युवयोर्विनेता शिक्षकः, नुशब्दः प्रश्ने, 'नु पृच्छायां वितर्के च' इत्यमरः। विनेतारं कविञ्चेत्यर्थः। 'गेये केन विनीतौ वाम्' इति पाठे वामिति युष्मदर्थप्रतिपादकमव्ययं द्रष्टव्यम्। तत्रायमर्थः—केन पुंसा वां युवां गेये गीतविषये विनीतौ शिक्षितौ। कर्मणि निष्ठाप्रत्ययः। इयञ्च कस्य कवेः कृतिरिति राज्ञा स्वयं पृष्टौ तौ कुशलवौ वाल्मीकिम् अशंसताम् उक्तवन्तौ॥

৬৯। অনন্তর "এই গীত কাহার কৃত এবং কোন্ ব্যক্তি ইহা তোমাদিগকে শিক্ষা দিয়াছেন" স্বয়ং রাজা এইরূপ জিজ্ঞাসা করিলে লব ও কুশ বাল্মীকির নাম নির্দ্দেশ করিলেন।

**अथ सावरजो रामः प्राचेतसमुपेयिवान्।**
**उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत्॥ ७०**

७० अः। अथ सावरजः रामः प्राचेतसम् उपेयिवान् (सन्) देहम् आत्मनः उरीकृत्य राज्यम् अस्मै न्यवेदयत्॥

७०। अथ सावरजो रामः प्राचेतसं वाल्मीकिमुपेयिवान् प्राप्तः सन् देहमात्मन उरीकृत्य आत्मानं स्थापयित्वेत्यर्थः राज्यम् अस्मै प्राचेतसाय न्यवेदयत् समर्पितवान्॥

৭০। তদনন্তর অনুজগণসহ রাম বাল্মীকির সমীপে গমন করিয়া স্বীয় শরীর ব্যতীত সমস্ত রাজ্য তাঁহাকে প্রদান করিলেন।

**स तावाख्याय रामाय मैथिलेयौ तदात्मजौ।**
**कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम्॥ ७१**

७१ अः। कारुणिकः स कविः रामाय तौ मैथिलेयौ तदात्मजौ आख्याय सीतायाः सम्परिग्रहं वव्रे॥

७१। करुणा प्रयोजनमस्य कारुणिको दयालुः। 'प्रयोजनम्' इति ठञ्। 'स्याद्दयालुः कारुणिकः' इत्यमरः। स कविः रामाय तौ मैथिलेयौ तदात्मजौ रामसुतावाख्याय सीतायाः सम्परिग्रहं स्वीकारं वव्रे ययाचे॥

৭১। তখন পরম কারুণিক কবি বাল্মীকি "এই কুমারদ্বয় জানকীর গর্ভসম্ভূত,—আপনারই পুত্র" এইরূপ পরিচয় প্রদান করিয়া সীতাকে গ্রহণ করিবার জন্য অনুরোধ করিলেন।

**तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि।**
**दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः॥ ७२**

৭২ অ:। (হে) তাত! তে স্নুষা নঃ সমক্ষং জাতবেদসি শুদ্ধা, (কিন্তু) রক্ষসঃ দৌরাত্ম্যাৎ অবত্যাঃ প্রজাঃ তাং ন শ্রদ্দধুঃ ॥

৭২। হে তাত! তে স্নুষা সীতা নোঽস্মাকম্ অক্ষ্ণোঃ সমীপং সমক্ষম্। 'অব্যয়ীভাবে শরৎপ্রভৃতিভ্যঃ' ইতি সমাসান্তষ্টচ্। জাতবেদসি বহ্নৌ শুদ্ধা। নাস্মাকমবিশ্বাস ইত্যর্থঃ। কিন্তু রক্ষসো রাবণস্য দৌরাত্ম্যাদত্যাঃ প্রজাস্তাং ন শ্রদ্দধুঃ ন বিশশ্বসুঃ ॥

তাঃ স্বচারিত্রমুদ্দিশ্য প্রত্যায়যতু মৈথিলী।
ততঃ পুত্রবতীমেনাং প্রতিপৎস্যে ত্বদাজ্ঞয়া ॥ ৭৩

৭৩ অ:। মৈথিলী স্বচারিত্রম্ উদ্দিশ্য তাঃ প্রত্যায়যতু। ততঃ পুত্রবতীম্ এনাং ত্বদাজ্ঞয়া প্রতিপৎস্যে ॥

৭৩। মৈথিলী স্বচারিত্রম্ উদ্দিশ্য তাঃ প্রজাঃ প্রত্যায়যতু বিশ্বাসয়তু। বিশ্বাসস্য বুদ্ধিরূপত্বাৎ। 'ণৌ গমিরবোধনে' ইতি ইণো গম্যাদেশো নাস্তি। ততোঽনন্তরং পুত্রবতীম্ এনাং সীতাং ত্বদাজ্ঞয়া প্রতিপৎস্যে স্বীকরিষ্যে ॥

৭২—৭৩। রাম উত্তর করিলেন,—হে তাত! আপনার বধূ বৈদেহী আমাদের সমক্ষেই অগ্নিপরীক্ষায় বিশুদ্ধা হইয়াছেন, কিন্তু রাক্ষসরাজ রাবণের দুরাত্মতা নিবন্ধন অত্রত্য প্রজাগণ তাঁহাকে পবিত্র বলিয়া বিশ্বাস করিতেছে না। অতএব এক্ষণে মৈথিলী স্বীয় চরিত্রবিষয়ে সেই প্রজাগণের বিশ্বাস উৎপাদন করুন, তারপর আপনার নির্দেশে তনয়সহ তাঁহাকে গ্রহণ করিব।

ইতি প্রতিশ্রুতে রাজ্ঞা জানকীমাশ্রমান্মুনিঃ।
শিষ্যৈরানায়য়ামাস স্বসিদ্ধিং নিয়মৈরিব ॥ ৭৪

৭৪ অ:। রাজ্ঞা ইতি প্রতিশ্রুতে (সতি) মুনিঃ আশ্রমাৎ জানকীং শিষ্যৈঃ স্বসিদ্ধিং নিয়মৈঃ ইব আনায়য়ামাস ॥

৭৪। রাজ্ঞা ইতি প্রতিশ্রুতে প্রতিজ্ঞাতে সতি মুনিরাশ্রমাজ্জানকীং শিষ্যৈঃ প্রযোজ্যৈঃ স্বসিদ্ধিং স্বার্থসিদ্ধিং নিয়মৈস্তপোভিরিব আনায়য়ামাস ॥

৭৪। রাজা রামচন্দ্র এইরূপ প্রতিশ্রুত হইলে মুনিবর বাল্মীকি নিয়মদ্বারা আত্মসিদ্ধির ন্যায় শিষ্যগণ দ্বারা জানকীকে আশ্রম হইতে আনয়ন করিলেন।

অন্যেদ্যুরথ কাকুৎস্থঃ সন্নিপাত্য পুরৌকসঃ।
কবিমাহ্বায়য়ামাস প্রস্তুতপ্রতিপত্তয়ে ॥ ৭৫

৭৫ অ:। অথ কাকুৎস্থ: রাম: অন্যেদ্যু: প্রস্তুতপ্রতিপত্তয়ে পুরৌকস: সন্নিপাত্য কবিম্ আহ্বাযয়ামাস ॥

৭৫। অথ কাকুৎস্থো রাম: অন্যেদ্যু: অন্যস্মিন্নহনি প্রস্তুতপ্রতিপত্তয়ে প্রস্তুতকার্য্যানুসন্ধানায় পুরৌকস: পৌরান্ সন্নিপাত্য মেলযিত্বা কবিং বাল্মীকিমাহ্বায়য়ামাস আকারয়ামাস ॥

৭৫। ককুৎস্থকুলতিলক রাম অপর একদিনে জানকীর পরীক্ষার জন্য পৌরগণকে সমবেত করিয়া মুনিবর আদিকবি বাল্মীকিকে আহ্বান করাইলেন।

স্বরসংস্কারবত্যাসৌ পুত্রাভ্যামথ সীতয়া।
ঋচেবোদর্চিষং সূর্য্যং রামং মুনিরুপস্থিত: ॥ ৭৬

৭৬ অ:। অথ অসৌ মুনি: স্বরসংস্কারবত্যা ঋচা উদর্চিষং সূর্য্যম্ ইব পুত্রাভ্যাম্ (উপলক্ষিতয়া) সীতয়া রামম্ উপস্থিত: ॥

৭৬। অথ স্বর উদাত্তাদি: সংস্কার: শব্দশুদ্ধি: তদ্বত্যা ঋচা সাবিত্র্যা উদর্চিষং সূর্য্যমিব, পুত্রাভ্যামুপলক্ষিতয়া সীতয়া করণেন উদর্চিষং রামম্ অসৌ মুনিরুপস্থিত উপতস্থে ॥

৭৬। উদাত্তাদি স্বরসমন্বিত ঋক্‌দ্বারা যেরূপ উজ্জ্বরশ্মি রবির উপাসনা করিতে হয়, তদ্রূপ সেই মুনিবর বাল্মীকি লব, কুশ ও সীতাদ্বারা মনোরঞ্জনার্থ তেজস্বী রামের নিকট উপস্থিত হইলেন।

কাষায়পরিবীতেন স্বপদার্পিতচক্ষুষা।
অন্বমীয়ত শুদ্ধেতি শান্তেন বপুষৈব সা ॥ ৭৭

৭৭ অ:। কাষায়পরিবীতেন স্বপদার্পিতচক্ষুষা শান্তেন বপুষা এব সা শুদ্ধা ইতি অন্বমীয়ত ॥

৭৭। কষায়েণ রক্তং কাষায়ম্ 'তেন রক্তং রাগাৎ' ইত্যণ্। তেন পরিবীতেন সংবৃতেন স্বপদার্পিতচক্ষুষা শান্তেন প্রসন্নেন বপুষৈব সা সীতা শুদ্ধা সাধ্বী ইত্যন্বমীয়ত অনুমিতা ॥

৭৭। কাষায়বসনাবৃতা সীতা নিজচরণে নয়নদ্বয় সমর্পণপূর্ব্বক তথায় উপস্থিত হইলে তাঁহার প্রশান্ত শরীর দর্শনে লোকসকল তাঁহাকে দেখিয়াই পবিত্র বলিয়া অনুমান করিল।

জনাস্তদালোকপথাৎ প্রতিসংহৃতচক্ষুষ:।
তস্থুস্তেঽবাঙ্মুখা: সর্ব্বে ফলিতা ইব শালয়: ॥ ৭৮

৭৮ অ:। তদালোকপথাৎ প্রতিসংহৃতচক্ষুষ: তে সর্ব্বে জনা:, ফলিতা: শালয়: ইব, অবাঙ্মুখা: তস্থু:।

৭৮। তস্যা: সীতায়া: কর্ম্মণি আলোকপথাৎ দর্শনমার্গাৎ প্রতি-

संहृतचक्षुषो निवर्तितदृष्टयः ते सर्वे जनाः फलिताः शालय इव अवाङ्मुखाः अवनतमुखाः तस्थुः ॥

৭৮। তখন প্রজাগণ সীতা হইতে দৃষ্টি প্রত্যাহৃত করিয়া ফলিত শালিধান্যের ন্যায় অবনতমস্তকে অবস্থান করিতে লাগিল।

तां दृष्टिविषये भर्त्तुर्मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥ ৭৯

৭৯ অ:। आस्थितविष्टरः मुनिः (हे) वत्से ! भर्त्तुः दृष्टिविषये स्ववृत्ते लोकं निःसंशयं कुरु इति ताम् अशात् ।

৭৯। आस्थितविष्टरोऽधिष्ठितासनो मुनिः वत्से ! भर्त्तुर्दृष्टिविषये समक्षं स्ववृत्ते स्वचरिते विषये लोकं निःसंशयं कुरु इति तां सीतामशात् शास्ति स्म ।

৭৯। পরে মুনিবর বাল্মীকি আসনে উপবেশন করিয়া সীতাকে আদেশ করিলেন,—বৎসে! তুমি স্বামিসমক্ষে স্বীয় চরিত্রবিষয়ে লোক সকলের সংশয় দূর কর।

अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ৮০

৮০ অ:। अथ वाल्मीकिशिष्येण आवर्ज्जितं पुण्यं पयः आचम्य सीता सत्यां सरस्वतीम् उदीरयामास ॥

৮০। अथ वाल्मीकिशिष्येण आवर्जितं दत्तं पुण्यं पय आचम्य सीता सत्यां सरस्वतीं वाचमुदीरयामास उच्चारयामास ॥

৮০। অনন্তর সীতা বাল্মীকিশিষ্যসমাহৃত পবিত্র জলে আচমন করিয়া এইরূপ সত্য বাক্য উচ্চারণ করিলেন।

वाङ्मनःकर्म्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वम्भरे देवि मामन्तर्द्धातुमर्हसि ॥ ৮১

৮১। वाङ्मनःकर्म्मभिः पत्यौ मे व्यभिचारः न यथा, तथा (हे) विश्वम्भरे ! देवि! माम् अन्तर्द्धातुम् अर्हसि ॥

৮১। वाङ्मनःकर्म्मभिः पत्यौ विषये मे व्यभिचारः स्खालित्यं न यथा, नास्ति यदि, तथा तर्हि विश्वं बिभर्त्तीति विश्वम्भरा भूमिः 'संज्ञायां भृत'—इत्यादिना खच्प्रत्ययः, 'अरुर्द्विषत्'—इत्यादिना मुमागमः, विश्वम्भरे ! देवि ! माम् अन्तर्द्धातुं गर्भे वासयितुमर्हसि ॥

৮১। হে বিশ্ববিধাত্রি! আমি কায়, মন কিংবা বাক্যদ্বারাও পতির প্রতি

কোন ব্যভিচার না করিয়া থাকি, তবে হে দেবি! আমাকে তোমার গর্ভে স্থান দান কর।

# एवमुक्ते तया साध्व्या रन्ध्रात् सद्योभवाद्भुवः।
# शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ॥ ८२

८२ अ:। साध्व्या तया एवम् उक्ते (सति) सद्योभवात् भुवः रन्ध्रात् शातह्रदं ज्योतिः इव, प्रभामण्डलम् उद्ययौ॥ ८२

८२। साध्व्या पतिव्रतया तया सीतया एवमुक्ते सति सद्योभवाद्भुवो रन्ध्रात् शातह्रदं वैद्युतं ज्योतिरिव प्रभामण्डलमुद्ययौ॥

৮২। সাধ্বী সীতা এরূপ বলিলে সদ্যোজাত ভূবিবর হইতে বিদ্যুদগ্নির ন্যায় এক প্রভামণ্ডল উদ্গত হইল।

# तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी।
# समुद्ररशना साक्षात् प्रादुरासीद्वसुन्धरा॥ ८३॥

८३ अ:। तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी समुद्ररशना साक्षात् वसुन्धरा प्रादुरासीत्॥

८३। तत्र प्रभामण्डले नागफणोत्क्षिप्ते सिंहासने निषेदुषी आसीना समुद्ररशना समुद्रमेखला साक्षात्, वसूनि धारयतीति वसुन्धरा भूमिः, 'संज्ञायां भृतॄ' इति खश्। 'खित्यनव्ययस्य' इति ह्रस्वः। प्रादुरासीत्॥

৮৩। সেই প্রভামণ্ডল মধ্য হইতে ভুজঙ্গেন্দ্রফণোৎক্ষিপ্ত সিংহাসনে সমাসীনা সাগর-রশনা সাক্ষাৎ ধরিত্রীদেবী প্রাদুর্ভূতা হইলেন।

# सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम्।
# मा मेति व्याहरत्येव तस्मिन् पातालमभ्यगात्॥ ८४

८४ अ:। सा भर्तृप्रणिहितेक्षणां सीताम् अङ्कम् आरोप्य तस्मिन् (भर्तरि) मा मेति व्याहरति (सति) एव पातालम् अभ्यगात्॥

८४। सा वसुन्धरा भर्तरि प्रणिहितेक्षणां दत्तदृष्टिं सीतामङ्कमारोप्य तस्मिन् भर्तरि रामे मा मा इति मा हरेति व्याहरति वदत्येव, व्याहरन्तमनादृत्येत्यर्थः, 'षष्ठी चानादरे' इति सप्तमी, पातालमभ्यगात्॥

৮৪। তিনি স্বামিনিক্ষিপ্তনেত্রা তনয়া সীতাকে স্বীয় ক্রোড়ে স্থাপনপূর্ব্বক রাম বারবার নিষেধ করিলেও রসাতলে প্রবেশ করিলেন।

# धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः।
# गुरुर्विधिबलापेक्षी शमयामास धन्विनः॥ ८५

८५ अ:। विधिबलापेक्षी गुरुः सीताप्रत्यर्पणैषिणः धन्विनः तस्य धरायां संरम्भं शमयामास॥

८५। सीताप्रत्यर्पणमिच्छतीति तथोक्तस्य धन्विनः आत्तधनुष्कस्य रामस्य धरायां विषये संरम्भं विधिबलापेता दैवशक्तिदर्शी गुरुर्वशिष्ठः शमयामास। अवश्यम्भावी विधिरिति भावः॥

৮৫। সীতার প্রত্যানয়নাভিলাষী ক্রোধাবিষ্ট রাম ধরার প্রতি ধনুর্দ্ধারণ করিলে দৈবশক্তিদর্শী কুলগুরু বশিষ্ঠ তাঁহার ক্রোধের শান্তি করিলেন।

**ऋषीन् विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान्।**
**रामः सीतागतं स्नेहं निदधे तदपत्ययोः॥ ८६**

८६ अः। रामः यज्ञान्ते पुरस्कृतान् ऋषीन् सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोः निदधे।

८६। रामो यज्ञान्ते पुरस्कृतान् पूजितान् ऋषीन् सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोः कुशलवयोर्निदधे॥

৮৬। রাম যজ্ঞসমাপনান্তে সমাগত ঋষিসকল ও সুহৃদ্গণকে পুরস্কৃত করিয়া বিদায় দিলেন এবং তাঁহার সীতাগত স্নেহভার তনয়দ্বয়ে ন্যস্ত করিলেন।

**युधाजितश्च सन्देशात् स देशं सिन्धुनामकम्।**
**ददौ दत्तप्रभावाय भरताय भृतप्रजः॥ ८७**

८७ अः। भृतप्रजः सः युधाजितः सन्देशात् सिन्धुनामकं देशं दत्तप्रभावाय भरताय ददौ।

८७। किञ्च, भृतप्रजः स रामो युधाजितो भरतमातुलस्य सन्देशात् सिन्धुनामकं देशं दत्तप्रभावाय दत्तैश्वर्य्याय, रामेणेति शेषः, भरताय ददौ॥

৮৭। অনন্তর প্রজাপালক রাম ভরতমাতুল যুধাজিতের নিদেশে ভরতকে বিপুল ঐশ্বর্য্য প্রদানপূর্ব্বক সিন্ধুনামক দেশের আধিপত্য প্রদান করিলেন।

**भरतस्तत्र गन्धर्वान् युधि निर्जित्य केवलम्।**
**आतोद्यं ग्राहयामास समत्याजयदायुधम्॥ ८८**

८८ अः। तत्र भरतः युधि गन्धर्व्वान् निर्ज्जित्य केवलम् आतोद्यं ग्राहयामास आयुधं समत्याजयत॥

८८। तत्र सिन्धुदेशे भरतोऽपि युधि गन्धर्वान् निर्जित्य केवलमेकम् आतोद्यं वीणाम्। 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकन्तु सुषिरं कांस्यतालादिकं घनम्। चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्॥' इत्यमरः। ग्राहयामास, आयुधं समत्याजयत् त्याजितवान्। ग्रहित्यज्योर्ण्यन्तयोर्द्विकर्म्मकत्वं नित्यमित्यनुसन्धेयम्॥

৮৮। তথায় ভরত গন্ধর্ব্বগণকে সমরে পরাজিত করিলেন এবং তাহাদিগকে নিরস্ত্র করিয়া কেবল বীণা ধারণ করাইলেন।

स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः ।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात् पुनः ॥ ८९

८९ अः। सः अभिषेकार्हौ तक्षपुष्कलौ, (नाम) पुत्रौ तदाख्ययोः राजधान्योः अभिषिच्य पुनः रामान्तिकम् अगात् ॥

८९। स भरतः, अभिषेकार्हौ तक्षपुष्कलौ नाम पुत्रौ तदाख्ययोः तक्षपुष्कलाख्ययोरित्यर्थः। पुष्कलं पुष्कलावत्यां तक्षं तक्षशिलायामिति राजधान्योर्नगर्य्योः अभिषिच्य पुनः रामान्तिकम् अगात् ॥

৮৯। অনন্তর ভরত তক্ষ ও পুষ্কল নামক তনয়দ্বয়কে তাঁহাদের নিজ নামচিহ্নিত তক্ষশিলা ও পুষ্কলাবতী নামক রাজধানীদ্বয়ে অভিষিক্ত করিয়া পুনরায় রাম সমীপে আগমন করিলেন।

अङ्गदं चन्द्रकेतुञ्च लक्ष्मणोऽप्यात्मसम्भवौ ।
शासनाद् रघुनाथस्य चक्रे कारापथेश्वरौ ॥ ९०

९० अः। लक्ष्मणः अपि रघुनाथस्य शासनात् अङ्गदं चन्द्रकेतुं च आत्मसम्भवौ कारापथेश्वरौ चक्रे ॥

९०। लक्ष्मणोऽपि रघुनाथस्य रामस्य शासनादङ्गदं चन्द्रकेतुञ्च तदाख्यौ आत्मसम्भवौ पुत्त्रौ, कारापथो नाम देशः तस्येश्वरौ चक्रे ॥

৯০। লক্ষ্মণও রঘুনাথ রামের আদেশে অঙ্গদ ও চন্দ্রকেতু নামক আত্মজদ্বয়কে কারাপথের অধীশ্বর করিয়া দিলেন।

इत्यारोपितपुत्रास्ते जननीनां जनेश्वराः ।
भर्त्तृलोकप्रपन्नानां निवापान् विदधुः क्रमात् ॥ ९१

९१ अः। इति आरोपितपुत्राः ते जनेश्वरा भर्त्तृलोकप्रपन्नानां जननीनां क्रमात् निवापान् विदधुः ॥

९१। इत्यारोपितपुत्त्राः ते जनेश्वरा रामादयो भर्त्तृलोकप्रपन्नानां स्वर्य्यातानां जननीनां क्रमात् निवापान् श्राद्धादीन् विदधुः चक्रुः ॥

৯১। রামাদি নরনাথগণ স্ব স্ব তনয়দিগকে এইরূপে রাজ্যে প্রতিষ্ঠিত করিয়া পতিলোকগত জননীগণের যথাক্রমে ঔর্দ্ধদেহিক ক্রিয়া সম্পন্ন করিলেন।

उपेत्य मुनिवेशोऽथ कालः प्रोवाच राघवम् ।
रहःसंवादिनौ पश्येदावां यस्तं त्यजेरिति ॥ ९२

९२ अः। अथ कालः मुनिवेशः (सन्) उपेत्य राघवं प्रोवाच। रहःसंवादिनौ आवां यः पश्येत् तं त्यजेः इति ।

९२। अथ कालोऽन्तको मुनिवेशः सन् उपेत्य राघवं प्रोवाच, किम्? इत्याह, रहस्येकान्ते संवादिनौ सम्भाषिणौ आवां यः पश्येत् रहस्यभङ्गं कुर्य्यादित्यर्थः। तं त्यजेरिति॥

৯২। অনন্তর এক দিন কৃতান্ত মুনিবেশ ধারণপূর্ব্বক রাম সমীপে আগমন করিয়া বলিলেন,—"আমরা উভয়ে নির্জ্জনে কোন কথোপকথন করিব, এই সময়ে যে ব্যক্তি আমাদিগকে সন্দর্শন করিবে, তুমি তাহাকে পরিত্যাগ করিবে।"

**तथेति प्रतिपन्नाय विव्रतात्मा नृपाय सः।**
**आचख्यौ दिवमध्यास्स्व शासनात् परमेष्ठिनः॥ ९३**

९३ अ:। सः तथेति प्रतिपन्नाय नृपाय विव्रतात्मा ( सन् ) परमेष्ठिनः शासनात् दिवं अध्यास्स्व ( इति ) आचख्यौ॥

९३। स कालस्तथेति प्रतिपन्नाय नृपाय रामाय विव्रतात्मा प्रकाशितनिजस्वरूपः सन् परमेष्ठिनो ब्रह्मणः शासनाद्दिवमध्यास्स्व इत्याचख्यौ।

৯৩। রাজা রামচন্দ্র "তাহাই হউক" বলিয়া অঙ্গীকার করিলে কৃতান্ত নিজ-মূর্ত্তি পরিগ্রহ করিয়া তাঁহাকে বলিলেন,—পরমেষ্ঠী ব্রহ্মার নিদেশে তুমি এক্ষণে স্বর্গে গমন কর।

**विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत्।**
**भीतो दुर्वाससः शापात् रामसन्दर्शनार्थिनः॥ ९४॥**

९४ अ:। द्वाःस्थः लक्ष्मणः विद्वान् अपि रामसन्दर्शनार्थिनः दुर्वाससः शापात् भीतः ( सन् ) तयोः समयम् अभिनत्॥

९४। द्वाःस्थो द्वारि नियुक्तो लक्ष्मणो विद्वानपि पूर्वश्लोकोक्तं जानन्नपि रामसन्दर्शनार्थिनो दुर्व्वाससो मुनेः शापाद्भीतः सन् तयोः समयं संवादम् अभिनत् बिभेद॥

৯৪। ইত্যবসরে রামদর্শনার্থী দুর্ব্বাসা তথায় উপস্থিত হইলে তাঁহার শাপভয়ে ভীত হইয়া দ্বারস্থিত লক্ষ্মণ পূর্ব্বোক্ত বিবরণ বিদিত থাকিলেও উহাঁদিগের রহস্য নিয়ম ভঙ্গ করিলেন।

**स गत्वा सरयूतीरं देहत्यागेन योगवित्।**
**चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः॥ ९५**

९५ अ:। योगवित् सः सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनः भ्रातुः प्रतिज्ञाम् अवितथां चकार।

९५। योगविद् योगमार्गवेदी स लक्ष्मणः सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनो भ्रातुः प्रतिज्ञाम् अवितथां सत्यां चकार॥

९५। অনন্তর যোগস্থ লক্ষ্মণ সরযূতীরে গমনপূর্ব্বক দেহত্যাগ করিয়া অগ্রজ রাঘবের প্রতিজ্ঞা রক্ষা করিলেন।

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ।
राघवः शिथिलं तस्थौ भुवि धर्म्मस्त्रिपादिव ॥ ९६

९६ अः। आत्मचतुर्भागे तस्मिन् प्राक् नाकम् अधितस्थुषि ( सति ) राघवः भुवि त्रिपात् धर्म्मः इव शिथिलं तस्थौ ॥

९६। चतुर्थो भागश्चतुर्भागः। संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं पञ्चभागवत्, आत्मचतुर्भागे तस्मिन् लक्ष्मणे प्राङ्नाकमधितस्थुषि पूर्वं स्वर्गं गतवति सति राघवो रामः, भुवि त्रिपाद्धर्म्म इव, शिथिलं तस्थौ। पादविकलो हि शिथिलं तिष्ठतीति भावः। त्रेतायां धर्म्मस्त्रिपादित्याहुः। पाङ्घ्रि-स्त्र ध्वन्यते। 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः। त्रयः पादा पाद-चतुर्थांशो यस्यासौ त्रिपात्। 'संख्यासुपूर्वस्य' इत्यकारलोपः समासान्तः॥

৯৬। স্বীয় চতুর্থাংশ সেই লক্ষ্মণ প্রথম পরলোকগমন করিলে রাম ত্রিপাদ ধর্ম্মের ন্যায় শিথিলভাবে ভূতলে অবস্থান করিতে লাগিলেন।

स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥ ९७
उदक् प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः ।
अन्वितः पतिवात्सल्याद् गृहवर्जमयोध्यया ॥ ९८

९७-९८ अः। स्थिरधीः सः रिपुनागाङ्कुशं कुशं कुशावत्यां निवेश्य सूक्तैः सतां जनिताश्रुलवं लवं शरावत्यां ( निवेश्य ) सानुजः अग्निपुरःसरः ( सन् ) पतिवात्सल्यात् गृहवर्ज्जम् अयोध्यया अन्वितः उदक् प्रतस्थे ॥

९७-९८। युग्मम्। स्थिरधीः स रामः रिपव एव नागा गजास्तेषामङ्कुशं निवारकं कुशं कुशावत्यां पुर्यां निवेश्य स्थापयित्वा, सूक्तैः समीचीनवचनैः सतां जनिता अश्रुलवा अश्रुलेशा येन तं लवं लवाख्यं पुत्रम्। 'लवो लेशे विलासे च छेदने रामनन्दने' इति विश्वः। शरावत्यां पुर्याम्। 'शरादीनाञ्च' इति शरकुशशब्दयोर्दीर्घः। निवेश्य, सानुजोऽग्निपुरःसरः सन् पत्यौ भर्त्तरि वात्सल्यादनुरागात् गृहान् वर्जयित्वा गृहवर्जम्। 'द्वितीयायाञ्च' इति णमुल्। अयं क्वचिदपरीप्सायामपीष्यते। 'अनुदात्तं पदमेकवर्जम्' इत्येकाचः शेषतया व्याख्यातत्वात्। परीप्सा त्वरा। अयोध्यया अन्वितोऽनुगत उदक् प्रतस्थे ॥

৯৭—৯৮। অনন্তর স্থিরমতি রঘুপতি অরিকুল করীর অঙ্কুশস্বরূপ কুশকে কুশা-

বতীতে এবং যিনি সুমধুর বাক্যবিন্যাসে সাধুগণের অশ্রুপাত করাইয়া থাকেন, সেই লবকে শরাবতীতে প্রতিষ্ঠিত ও অনুজগণসহ হুতাশনকে অগ্রে করিয়া উত্তর দিকে গমন করিলেন। তখন মনে হইতে লাগিল,—পতিবাৎসল্যবশতঃ অযোধ্যাও যেন গৃহ পরিত্যাগ করিয়া তাঁহার অনুগমন করিয়াছিলেন।

**জগৃহুস্তস্য চিত্তজ্ঞাঃ পদবীং হরিরাক্ষসাঃ।**
**কদম্বমুকুলস্থূলৈরভিবৃষ্টাং প্রজাশ্রুভিঃ ॥ ৯৯**

৯৯ অঃ। চিত্তজ্ঞাঃ হরিরাক্ষসাঃ কদম্বমুকুলস্থূলৈঃ প্রজাশ্রুভিঃ অভিবৃষ্টাং তস্য পদবীং জগৃহুঃ।

৯৯। চিত্তজ্ঞা হরিরাক্ষসাঃ কদম্বমুকুলস্থূলৈঃ প্রজাশ্রুভিরভিবৃষ্টাং তস্য রথস্য পদবীং মার্গং জগৃহুঃ। তেঽপ্যনুজগ্মুরিত্যর্থঃ ॥

৯৯। রামের অভিপ্রায়ে অভিজ্ঞ রাক্ষস ও বানর প্রজাগণের কদম্বকুসুমসদৃশ স্থূল অশ্রুবিন্দুদ্বারা অভিষিক্ত রামপদবীর অনুসরণ করিল।

**উপস্থিতবিমানেন তেন ভক্তানুকম্পিনা।**
**চক্রে ত্রিদিবনিঃশ্রেণিঃ সরযূরনুযায়িনাম্ ॥ ১০০**

১০০ অঃ। উপস্থিতবিমানেন ভক্তানুকম্পিনা তেন অনুযায়িনাং সরযূঃ ত্রিদিবনিঃশ্রেণিঃ চক্রে।

১০০। উপস্থিতং প্রাপ্তং বিমানং যস্য তেন, ভক্তাননুকম্পত ইতি ভক্তানুকম্পিনা তেন রামেণানুযায়িনাং সরযূস্ত্রিদিবনিঃশ্রেণিঃ স্বর্গাধিরোহণী চক্রে। 'নিঃশ্রেণিস্ত্বধিরোহণী' ইত্যমরঃ ॥

১০০। বিমানারূঢ় ভক্তবৎসল রাম সরযূকে অনুগামিগণের স্বর্গারোহণের সোপান করিয়া দিলেন।

**যদ্গোপ্রতরকল্পোঽভূৎ সম্মর্দস্তত্র মজ্জতাম্।**
**অতস্তদাখ্যয়া তীর্থং পাবনং ভুবি পপ্রথে ॥ ১০১**

১০১ অঃ। যৎ তত্র মজ্জতাং সংমর্দঃ গোপ্রতরকল্পঃ অভূৎ, অতঃ তদাখ্যয়া পাবনং তীর্থং ভুবি পপ্রথে।

১০১। যদ্যস্মাৎ তত্র সরয্বাং মজ্জতাং সম্মর্দঃ গোপ্রতরো গোপ্রতরণং তৎকল্পঃ অভূৎ অতস্তদাখ্যয়া গোপ্রতরাখ্যয়া পাবনং শোধকং তীর্থং ভুবি পপ্রথে ॥

১০১। তৎকালে সরযূতে মজ্জনকারী জনগণের সংমর্দ্দ যেন গোপ্রতরণের অনুরূপ হইয়াছিল, এজন্য ঐ স্থান 'গোপ্রতরণ' নামে পৃথিবীর পবিত্র তীর্থ বলিয়া প্রখ্যাত হইয়াছে।

**স বিভুর্বিবুধাংশেষু প্রতিপন্নাত্মমূর্ত্তিষু।**
**ত্রিদশীভূতপৌরাণাং স্বর্গান্তরমকল্পয়ৎ ॥ ১০২**

१०२ अ:। विभुः सः विबुधांशेषु प्रतिपन्नात्ममूर्त्तिषु ( सत्सु ) त्रिदशीभूतपौराणां स्वर्गान्तरम् अकल्पयत् ॥

१०२। विभुः प्रभुः स रामो विबुधानामंशेषु सुग्रीवादिषु प्रतिपन्नात्ममूर्त्तिषु सत्सु त्रिदशीभूता देवभूयं गता ये पौरास्तेषां नूतनसुराणां स्वर्गान्तरमकल्पयत् ॥

১০২। দেবাংশ সুগ্রীবাদি স্ব স্ব মূর্ত্তি পরিগ্রহপূর্ব্বক স্বর্গে গমন করিলে বিভু রাম দেবভাবাপন্ন পৌরগণের জন্য স্বর্গান্তর নির্দ্দেশ করিয়া দিলেন।

निर्वर्त्त्यैवं दशमुखशिरश्छेदकार्य्यं सुराणां
विष्वक्सेनः स्वतनुमविशत् सर्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयञ्चोभयं स्थापयित्वा
कीर्त्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥ १०३

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ रामस्वर्गारोहणं
नाम पञ्चदशः सर्गः ॥ १५

१०३ अ:। विष्वक्सेनः एवं सुराणां दशमुखशिरश्छेदकार्य्यं निर्वर्त्त्य लङ्कानाथं पवनतनयं च उभयं कीर्त्तिस्तम्भद्वयम् इव दक्षिणे गिरौ च उत्तरे ( गिरौ ) च स्थापयित्वा, सर्वलोकप्रतिष्ठां स्वतनुम् अविशत् ॥

१०३। विष्वक्सेनो विष्णुः एवं सुराणां दशमुखशिरश्छेदकार्य्यं निर्वर्त्त्य निष्पाद्य, लङ्कानाथं विभीषणं पवनतनयं हनूमन्तं चोभयं कीर्त्तिस्तम्भद्वयमिव दक्षिणे गिरौ चित्रकूटे चोत्तरे गिरौ हिमवति च स्थापयित्वा, सर्वलोकप्रतिष्ठां सर्वलोकाश्रयभूतां स्वतनुं स्वमूर्त्तिम् अविशत् ॥

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरिविरचितया सञ्जीवनी-समाख्यया व्याख्यया समेतो महाकवि-श्रीकालिदासकृतौ रघुवंशे महाकाव्ये श्रीरामस्वर्गारोहणं नाम पञ्चदशः सर्गः ॥ १५

১০৩। ভগবান্ বিষ্ণু এইরূপে নিশাচর দশাননের বধরূপ সুরগণের হিতসাধন করিয়া লঙ্কাধিপতি বিভীষণ এবং পবনতনয় হনূমান্ এই উভয়কে দক্ষিণে চিত্রকূট ও উত্তরে হিমালয়পর্ব্বতে দুই কীর্ত্তিস্তম্ভের ন্যায় সংস্থাপিত করিয়া নিখিল লোকের আশ্রয়স্বরূপ স্বমূর্ত্তিতে পুনরায় প্রবেশ করিলেন।

পঞ্চদশ সর্গ সমাপ্ত ॥ ১৫

---

# षोड़शः सर्गः ।

—००ℵ००—

**अथेतरे सप्त रघुप्रवीरा ज्येष्ठं पुरोजन्मतया गुणैश्च ।**
**चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि कुलानुसारि ॥१॥**

१ अः। अथ इतरे सप्त रघुप्रवीराः पुरोजन्मतया गुणैः च ज्येष्ठं कुशं रत्नविशेषभाजं चक्रुः सौभ्रात्रम् एषां कुलानुसारि हि ॥

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः ।
तवारविन्दाक्ष ! पदारविन्दं वन्दे चतुर्व्वर्गचतुष्पदं तत् ॥

१। अथ रामनिर्व्वाणानन्तरमितरे लवादयः सप्त रघुप्रवीराः, पुरः पूर्वं जन्म यस्य तस्य भावस्तत्ता तया, गुणैश्च ज्येष्ठं कुशं रत्नविशेषभाजं तत्तच्छ्रेष्ठवस्तुभागिनं चक्रुः। तदुक्तम्—'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते।' इति। तथाहि—सुभ्रातॄणां भावः सौभ्रात्रम्, 'हायनान्त-' इत्यादिना युवादित्वादण् प्रत्ययः। एषां कुशलवादीनां कुलानुसारि वंशानुगतं हि ॥

১। রামচন্দ্র নির্ব্বাণপদ প্রাপ্ত হইলে পর লব প্রভৃতি অপর সপ্ত রঘুপ্রবীরগণ গুণশ্রেষ্ঠ ও বয়োজ্যেষ্ঠ বলিয়া কুশকে উৎকৃষ্ট রত্নসকলের আধিপত্য প্রদান করিলেন; কেননা ভ্রাতৃবাৎসল্য ইহাঁদের বংশপরম্পরাগত।

**ते सेतुवार्त्तागजबन्धमुख्यैरभ्युच्छ्रिताः कर्म्मभिरप्यबन्ध्यैः ।**
**अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः ॥२॥**

२ अः। सेतुवार्त्तागजबन्धमुख्यैः अवन्ध्यैः कर्म्मभिः अभ्युच्छ्रिताः अपि ते अन्योन्यदेशप्रविभागसीमां वेलां समुद्राः इव न व्यतीयुः ॥

२। सेतुर्जलबन्धः वार्त्ता कृषिगोरक्षणादिः। 'वार्त्ता कृष्यादुदन्तयोः' इति विश्वः। गजबन्ध आकरेभ्यो गजग्रहणम्, तं मुख्यं प्रधानं येषां तैरबन्ध्यैः, सफलैः कर्म्मभिरभ्युच्छ्रिताः अतिसमर्था अपीत्यर्थः। ते कुशादयः प्रविभज्यन्त इति प्रविभागाः, अन्योन्यदेशप्रविभागानां या सीमा ताम् वेलां समुद्रा इव न व्यतीयुर्न अतिचक्रमुः। अत्र कामन्दकः—'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरधनादानं शून्यानाञ्च निवेशनम्। अष्टवर्गमिमं साधुः स्वयं वृद्धोऽपि वर्द्धयेत॥' इति ॥

২। তাঁহারা সেতুনির্ম্মাণ, আকর হইতে করিগ্রহণ এবং কৃষি ও পশুপালন প্রভৃতি প্রধান প্রধান ফলবান্ কার্য্যজাত প্রভাবে অতিমাত্র প্রভাশালী হইলেও সাগর যেরূপ স্বীয় তীরভূমি অতিক্রম করে না,—তাঁহারাও তদ্রূপ নিজ নিজ রাজ্যের সীমা উল্লঙ্ঘন করেন নাই।

चतुर्भुजांशप्रभवः स तेषां दानप्रवृत्तेरनुपारतानाम्।
सुरद्विपानामिव सामयोनिः भिन्नोऽष्टधा विप्रससार वंशः॥३

३ अः। चतुर्भुजांशप्रभवः दानप्रवृत्तेः अनुपारतानां तेषां सः वंशः सामयोनिः ( दानप्रवृत्तेः अनुपारतानां ) सुरद्विपानां ( वंशः ) इव, अष्टधा भिन्नः ( सन् ) विप्रससार॥

३। चतुर्भुजो विष्णुः, तस्यांशा रामादयः, ते प्रभवाः कारणानि यस्य स तथोक्तः, दानं त्यागो मदश्च। 'दानं गजमदे त्यागे' इति विश्वः। प्रवृत्तिः व्यापारः प्रवाहश्च, दानप्रवृत्तेरनुपारतानां तेषां कुशलवादीनां स वंशः सामयोनिः सामवेदप्रभवो दानप्रवृत्तेरनुपारतानां सुरद्विपानां दिग्गजानां वंश इव अष्टधा भिन्नः सन् विप्रससार विस्तृतोऽभूत्। सामयोनिरित्यत्र पालकाव्यः—"सूर्य्यस्याण्डकपाले द्वे समानीय प्रजापतिः। हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत। गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजाः॥" इति॥

৩। নারায়ণের অংশাবতার রামচন্দ্র প্রভৃতি হইতে সমুদ্ভূত দানধর্ম্মে এবং প্রবৃত্ত কুশ লবাদির বংশ সামবেদোৎপন্ন অষ্ট দিগ্‌গজের বংশের ন্যায় আট অংশে বিভক্ত হইয়া বিস্তৃতিলাভ করিল।

अथार्द्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने प्रबुद्धः।
कुशः प्रवासस्थकलत्रवेशाम् अदृष्टपूर्व्वां वनितामपश्यत्॥४

४ अः। अथ अर्द्धरात्रे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः कुशः प्रवासस्थकलत्रवेशाम् अदृष्टपूर्व्वां वनिताम् अपश्यत्॥

४। अथ अर्द्धं रात्रेरर्द्धरात्रः, 'अर्द्धं नपुंसकम्' इत्येकदेशसमासः। 'अहः-सर्व्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति समासान्तोऽच् प्रत्ययः। 'रात्राह्नाहाः पुंसि' इति नियमात् पुंस्त्वम्। अर्द्धरात्रे निशीथे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः न तु सुप्तः कुशः प्रवासस्थकलत्रवेषां प्रोषितभर्त्तृकावेशाम्, अदृष्टा पूर्व्वमित्यदृष्टपूर्व्वा तां सुप्सुपेति समासः वनितामपश्यत्॥

৪। অনন্তর একদা নিশীথ সময়ে দীপশিখা স্তিমিত ও আবাসস্থ সমস্ত লোক শয়নগৃহে সুপ্ত হইলে, কুশ সহসা প্রবুদ্ধ হইয়া বিরহবেশধারিণী অদৃষ্টপূর্ব্বা এক রমণীকে সন্দর্শন করিলেন।

सा साधुसाधारणपार्थिवर्द्धेः स्थित्वा पुरस्तात् पुरुहूतभासः।
जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥५

५ अः। साधुसाधारणपार्थिवर्द्धेः पुरुहूतभासः जेतुः बन्धुमतः तस्य (कुशस्य) पुरस्तात् स्थित्वा जयशब्दपूर्व्वम् ( यथा तथा ) अञ्जलिं बबन्ध ॥

५। सा वनिता साधुसाधारणपार्थिवर्द्धेः सज्जनसाधारणराज्यश्रियः पुरुहूतभासः इन्द्रतेजसः परेषां शत्रूणां जेतुर्बन्धुमतस्तस्य कुशस्य पुरस्तात् स्थित्वा जयशब्दपूर्व्वं यथा तथा अञ्जलिं बबन्ध ॥

৫। অনন্তর কমনীয়াকৃতি সেই কামিনী পুরন্দরপ্রভাশালী সাধুজনোপভোগ্য রাজশ্রীসম্পন্ন শত্রুবিজয়ী কুশের সমীপে জয় শব্দ উচ্চারণপূর্ব্বক কৃতাঞ্জলিপুটে অবস্থিত হইলেন।

अथानपोढार्गलमप्यगारं छायामिवादर्शतलं प्रविष्टाम्।
सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्द्धविसृष्टतल्पः ॥६

६ अः। अथ सविस्मयः पूर्वार्द्धविसृष्टतल्पः दाशरथेः तनूजः अनपोढार्गलम् अपि अगारम् आदर्शतलं छायाम् इव, प्रविष्टां ( तां ) प्रोवाच ॥

६। अथ सविस्मयः पूर्व्वार्द्धेन शरीरपूर्वभागेन विसृष्टतल्पः त्यक्तशय्यो दाशरथेस्तनूजः कुशः अनपोढार्गलम् अनुद्घाटितविष्कम्भमपि। 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः। अगारम् आदर्शम् आदर्शतलं छायामिव प्रविष्टां तां वनितां प्रोवाच अवदत्।

लब्धान्तरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते।
बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम्॥७
का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति॥८

७—८ अः। सावरणे अपि गेहे लब्धान्तरा, योगप्रभावश्च ते न लक्ष्यते, मृणालिनी हैमम् उपरागम् इव, अनिर्वृतानाम् आकारं बिभर्षि च। ( किञ्च ) ( हे ) शुभे! त्वं का, कस्य वा परिग्रहः, ते मदभ्यागमकारणं वा किम्? वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति मत्वा आचक्ष्व॥

७—८। युग्मम्। सावरणेऽपि गेहे लब्धान्तरा लब्धावकाशा त्वमिति शेषः। योगप्रभावश्च ते न लक्ष्यते। मृणालिनी हैमं हिमसञ्जातमुपरागमुपद्रवमिव अनिर्वृतानां दुःखितानामाकारं बिभर्षि च, न हि योगिनां दुःखमस्तीति भावः। किञ्च शुभे त्वं का, कस्य वा परिग्रहः पत्नी

...तव मदभ्यागमे कारणं वा किम्? वशिनां जितेन्द्रियाणां रघूणां मनः परस्त्रीषु विषये विमुखा प्रवृत्तिर्यस्य तत् तथाभूतं सत्वा आचक्ष्व ॥

৬—৭। তদনন্তর দাশরথিতনয় ধনুর্দ্ধর কুশ শয়নগৃহের দ্বার রুদ্ধ থাকিলেও দর্পণ-...িত প্রতিবিম্বের ন্যায় সেই রমণীকে গৃহে প্রবেশ করিতে দেখিয়া বিস্ময়সহকারে ...রীরের পূর্ব্বভাগ উত্থিত করিয়া কহিলেন,—ভদ্রে! তুমি রুদ্ধদ্বার এই শয়নাগারে ...রূপে প্রবেশ করিলে? এক্ষণে তোমার বিশেষ কোন যোগপ্রভাবও পরিলক্ষিত ...ইতেছে না, এবং দেখিতেছি,—তুমি নীহারসম্পাতশীর্ণ কমলিনীর ন্যায় অত্যন্ত ...দুঃখভার ধারণ করিয়াছ!।

৮। হে শুভে! তুমি কে, কাহার রমণী, আর আমার নিকট তোমার আগমন ...করিবার কারণই বা কি? রঘুবংশীয়েরা জিতেন্দ্রিয়, ইহাঁদের পররমণীতে মন সতত ...বিমুখ, এই সকল অনুধাবন করিয়া নির্ভয়ে আমার এই সকল বাক্যের উত্তর প্রদান কর।

**तमब्रवीत् सा गुरुणानवद्या**
**या नीतपौरा स्वपदोन्मुखेन।**
**तस्याः पुरः सम्प्रति वीतनाथां**
**जानीहि राजन्नधिदेवतां माम् ॥ ९**

९ अ:। सा तम् अब्रवीत्, अनवद्या या स्वपदोन्मुखेन गुरुणा नीतपौरा, (हे) राजन्! मां सम्प्रति वीतनाथाम् तस्याः पुरः अधिदेवतां जानीहि ॥

९। सा वनिता तं कुशमब्रवीत्। अनवद्या अदोषा या पूः स्वपदोन्मुखेन विष्णुपदोन्मुखेन गुरुणा त्वत्पित्रा नीतपौरा, हे राजन् मां सम्प्रति वीतनाथाम् अनाथां तस्याः पुरो नगर्य्या अयोध्याया अधिदेवतां जानीहि ॥

৯। অনিন্দনীয়া সেই কামিনী কুশের এবংবিধ বাক্য শ্রবণ করিয়া উত্তর করিল,—"রাজন্! আপনার পিতা স্বপদে প্রস্থানকালে দোষপরিশূন্য যে অযোধ্যাপুরীর অধিবাসিগণকে সঙ্গে লইয়া গমন করিয়াছেন, আমাকে সেই নাথহীনা অযোধ্যার অধিদেবতা বলিয়া বিদিত হউন।"

**वस्वौकसारामभिभूय साहं सौराज्यबद्धोत्सवया विभूत्या।**
**समग्रशक्तौ त्वयि सूर्य्यवंश्ये सति प्रपन्ना करुणामवस्थाम् १०**

१० अ:। सा अहं सौराज्यबद्धोत्सवया विभूत्या वस्वौकसाराम् अभिभूय समग्रशक्तौ सूर्य्यवंश्ये त्वयि सति करुणाम् अवस्थां प्रपन्ना ॥

१०। सा अहं सौराज्येन राजन्वत्ताहेतुना बद्धोत्सवया विभूत्या वस्वौकसारां अलकापुरीं। 'अलका पुरी वस्वौकसारा स्यात्' इति कोशः। अथवा मानसोत्तरशैलशिखरवर्तिनी शक्रनगरी। 'वस्वौकसारा शक्रस्य' इति विष्णुपुराणात्। तामभिभूय तिरस्कृत्य समग्रशक्तौ त्वयि सूर्य्यवंश्ये सति करुणामवस्थां दीनां दशां प्रपन्ना प्राप्ता ॥

১০। "আমি সুরাজার শাসন পালনগুণে উৎসববিভূতি দ্বারা ঐশ্বর্য্যশালিনী কুবেরের অলকাপুরীকেও অভিভব করিতাম, এক্ষণে সমস্ত প্রভুশক্তিসম্পন্ন সূর্য্যবংশপ্রভব ভবাদৃশ ব্যক্তি বিদ্যমান থাকিতেও দেখুন, আমি কি শোচনীয় দশায় উপনীত হইয়াছি!"

**विशीर्णतल्पाट्टशतो निवेशः पर्य्यस्तशालः प्रभुणा विना मे।**
**विडम्बयत्यस्तनिमग्नसूर्य्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥११**

११ अः। विशीर्णतल्पाट्टशतः पर्य्यस्तशालः प्रभुणा विना मे निवेशः अस्तनिमग्नसूर्य्यम् उग्रानिलभिन्नमेघं दिनान्तं विडम्बयति ॥

११। तल्पानि अट्टालिकाः। 'तल्पं शय्याट्टदारेषु' इत्यमरः। अट्टानि गृहाभेदाः। 'अट्टं भक्ते च शुष्के च क्षौमेऽत्यर्थे गृहान्तरे' इति विश्वः। विशीर्णानि तल्पानामट्टानां च शतानि यस्य स तथोक्तः। 'विशीर्णकल्पाट्टशतो निवेशः' इति वा पाठः। अट्टाः क्षौमाः 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः। ईषत् असमाप्तं विशीर्णानि विशीर्णकल्पानि अट्टशतानि यस्य स तथोक्तः, पर्य्यस्तशालः स्रस्तप्राकारः। 'प्राकारो वरणः शाल' इत्यमरः। प्रभुणा स्वामिना विना एवम्भूतो मे निवेशो निवेशनम् अस्तनिमग्नसूर्य्यम् अस्ताद्रिलीनार्कम् उग्रानिलेन भिन्नमेघं दिनान्तं विडम्बयति अनुकरोति।

১১। "প্রভুহীন হওয়ায় আমার আবাসের শত শত অট্টালিকা ভগ্ন এবং প্রাচীর সকল পতিত হইয়া দিবাবসানে তপনদেব অস্তমিত ও প্রবল বায়ুবেগে মেঘগণ বিচ্ছিন্ন হইলে সন্ধ্যাসময়ের যে অবস্থা হয়, মদীয় বাসভবনের তদ্রূপ অবস্থা ঘটিয়াছে।"

**निशासु भास्वत्कलनूपुराणां**
**यः सञ्चरोऽभूदभिसारिकाणाम्।**
**नदन्मुखोल्काविचितामिषाभिः**
**स वाह्यते राजपथः शिवाभिः ॥ १२**

१२ अः। निशासु भास्वत्कलनूपुराणाम् अभिसारिकाणां, यः राजपथः, सञ्चरः अभूत्, नदन्मुखोल्काविचितामिषाभिः शिवाभिः वाह्यते॥

१२। निशासु भास्वन्ति दीप्तिमन्ति कलानि अव्यक्तमधुराणि नूपुराणि यासां तासामभिसारिकाणाम्। 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' इत्यमरः। यो राजपथः, सञ्चरत्यनेनेति सञ्चरः सञ्चारसाधनम् अभूत्। 'गोचरसञ्चर'—इत्यादिना घप्रत्ययान्तो निपातः। नदत्सु मुखेषु या उल्कास्ताभिर्विचितामिषाभिरन्विष्टमांसाभिः शिवाभिः क्रोष्ट्रीभिः स राजपथो वाह्यते गम्यते। वहेरन्यो वहिधातुरस्तीत्युपदेशः॥

১২। "পূর্ব্বে যামিনীযোগে অভিসারিকাগণ যে রাজপথ দিয়া সমুজ্জল নূপুরের মধুর ধ্বনি করিয়া নির্ভয়ে বিচরণ করিত, এক্ষণে শৃগালীরা সশব্দ মুখনিঃসৃত উল্কার সাহায্যে সেই রাজপথে মাংসের অনুসন্ধান করিতেছে।"

> आस्फालितं यत् प्रमदाकराग्रै-
> र्मृदङ्गधीरध्वनिमन्वगच्छत्।
> वन्यैरिदानीं महिषैस्तदम्भः
> शृङ्गाहतं क्रोशति दीर्घिकाणाम्॥ १३

१३ अः। यत् अम्भः प्रमदाकराग्रैः आस्फालितं (सत्) मृदङ्गधीरध्वनिम् अन्वगच्छत् तत् दीर्घिकाणां (अम्भः) इदानीं वन्यैः महिषैः शृङ्गाहतं (सत्) क्रोशति॥

१३। यदम्भः प्रमदाकराग्रैरास्फालितं ताड़ितं सत् जलक्रीड़ास्विति शेषः। मृदङ्गानां यो धीरध्वनिः तम् अन्वगच्छत् अन्वकरोत्। तद्दीर्घिकाणां अम्भः इदानीं वन्यैर्महिषैः कर्तृभिः शृङ्गैर्विषाणैराहतं सत् क्रोशति। न तु मृदङ्गध्वनिमनुकरोतीत्यर्थः॥

১৩। পূর্ব্বে জলকেলিকালে দীর্ঘিকার যে নির্ম্মল জল প্রমদাদিগের করাগ্র দ্বারা আস্ফালিত হইয়া শ্রুতিসুখকর মৃদঙ্গের গম্ভীর স্বরের অনুকরণ করিত, আজ সেই দীর্ঘিকাসলিল বন্য মহিষসমূহের শৃঙ্গদ্বারা আহত হইয়া আর সেরূপ মধুর রব উৎপাদন করে না।

> वृक्षेशया यष्टिनिवासभङ्गान्मृदङ्गशब्दापगमादलास्याः।
> प्राप्ता दवोल्काहतशेषबर्हाः क्रीड़ामयूरा वनबर्हिणत्वम्॥१४

१४ अः। यष्टिनिवासभङ्गात् वृक्षेशयाः मृदङ्गशब्दापगमात् अलास्याः दवोल्काहतशेषबर्हाः क्रीड़ामयूराः वनबर्हिणत्वं प्राप्ताः॥

१४। यष्टिरेव निवासः स्थानं तस्य भङ्गात् वृक्षे शेरत इति वृक्षेशयाः। 'अधिकरणे शेतेः' इत्यच् प्रत्ययः। 'शयवासवासिष्वकालात्'

इत्यलुक् सप्तम्याः। मृदङ्गशब्दानां अपगमात् अलास्याः नृत्यशून्याः दवो-ऽरण्यवह्निः। 'दवदावौ वनारण्यवह्नी' इत्यमरः। तस्य उल्काभिः स्फुलिङ्गैर्हतेभ्यः शेषाणि बर्हाणि येषां ते क्रीड़ामयूरा वनबर्हिणत्वं वन-मयूरत्वं प्राप्ताः॥

১৪। আবাসযষ্টি ভগ্ন হওয়ায় ক্রীড়াময়ূরগণ বৃক্ষে শয়ন ও মৃদঙ্গধ্বনির অভাবে নৃত্য পরিত্যাগ করিয়াছে এবং অগ্নিস্ফুলিঙ্গে তাঁহাদের কলাপের কিয়দংশ দগ্ধ হওয়ায় তাহারা এখন বনময়ূরের ভাব প্রাপ্ত হইয়াছে।

**सोपानमार्गेषु च येषु रामाः निक्षिप्तवत्यश्चरणान् सरागान्।**
**सद्यो हतन्यङ्कुभिरस्रदिग्धं व्याघ्रैः पदं तेषु निधीयते मे॥१५॥**

१५ अः। येषु सोपानमार्गेषु रामाः सरागान् चरणान् निक्षिप्तवत्यः, तेषु मे सद्यः हतन्यङ्कुभिः व्याघ्रैः अस्रदिग्धं पदं निधीयते॥

१५। किञ्च, येषु सोपानमार्गेषु रामा रमण्यः सरागान् लाक्षारसार्द्रान् चरणान् निक्षिप्तवत्यः, तेषु मे मम मार्गेषु सद्यो हतन्यङ्कुभिर्मारित-मृगैर्व्याघ्रैरस्रदिग्धं रुधिरलिप्तं पदं निधीयते॥

১৫। পূর্ব্বে পুররমণীগণ আমার যে সমস্ত সোপানপথে অলক্তসিক্ত চরণ নিক্ষেপ করিত, এক্ষণে তথায় শার্দ্দূলগণ মৃগবধ করিয়া তাহাদের উষ্ণরুধিরলিপ্ত পদক্ষেপ করিতেছে।

**चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः।**
**नखाङ्कुशाघातविभिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति॥१६॥**

१६। पद्मवनावतीर्णा करेणुभिः दत्तमृणालभङ्गाः चित्रद्विपा नखाङ्कुशाघातविभिन्नकुम्भाः (सन्तः) संरब्धसिंहप्रहृतं वहन्ति॥

१६। पद्मवनमवतीर्णाः प्रविष्टाः तथा लिखिता इत्यर्थः। करेणुभिः करिणीभिः चित्रगताभिरेव। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः। दत्त-मृणालभङ्गाश्चित्रद्विपा आलेख्यमातङ्गाः नखा एवाङ्कुशाः तेषाम् आघातैः विभिन्नकुम्भाः सन्तः संरब्धसिंहप्रहृतं कुपितसिंहप्रहारं वहन्ति॥

১৬। চিত্রপটে চিত্রিত যে সকল করেণু পদ্মবন হইতে অবতীর্ণ হইয়া যেন করিগণকে মৃণালখণ্ড অর্পণ করিত এবং যাঁহারা নিঃশঙ্কচিত্তে যেন সতত বনে বিচরণ করিত, এক্ষণে ক্রোধাবিষ্ট সিংহগণ জীবিতবোধে নখাঙ্কুশের আঘাতে সেই সকল আলেখ্যলিখিত মাতঙ্গগণের কুম্ভ বিদারণ করিতেছে।

**स्तम्भेषु योषित्प्रतियातनाना-**

**मुत्क्रान्तवर्णक्रमधूसराणाम्।**

स्तनोत्तरीयाणि भवन्ति सङ्गा-
न्निर्मोकपट्ट्यः फणिभिर्विमुक्ता ॥ १७

१७ अ:। उत्क्रान्तवर्णक्रमधूसराणां स्तम्भेषु योषित्प्रतियातनानां फणिभिः निर्मुक्ता: निर्मोक-पट्ट्य: सङ्गात् स्तनोत्तरीयाणि भवन्ति ॥

१७। उत्क्रान्तवर्णक्रमा विशीर्णवर्णविन्यासास्तास्च धूसराश्च यास्तासां स्तम्भेषु योषित्प्रतियातनानां स्त्रीप्रतिकृतीनां दारुमयीणां फणिभिर्वि-मुक्ता निर्मोका: कञ्चुका एव पट्ट्य:। 'समौ कञ्चुकनिर्मोकौ' इत्यमर:। सङ्गात् सक्तत्वात् स्तनोत्तरीयाणि स्तनाच्छादनवस्त्राणि भवन्ति ॥

১৭। কালক্রমে বর্ণবিন্যাস বিলুপ্ত হওয়ায় ধূসরতাপ্রাপ্ত স্তম্ভোপরি বিন্যস্ত দারুময়ী স্ত্রীপ্রতিকৃতিসমূহের উপর ভুজঙ্গনির্মুক্ত নির্মোক সকল পতিত হওয়ায় স্তনাবরণের কার্য্য করিতেছে।

कालान्तरश्यामसुधेषु नक्त-
मितस्ततो रूढ़तृणाङ्कुरेषु ।
त एव मुक्तागुणशुद्धयोऽपि
हर्म्येषु मूर्च्छन्ति न चन्द्रपादा: ॥ १८

१८ अ:। कालान्तरश्यामसुधेषु इतस्तत: रूढ़तृणाङ्कुरेषु हर्म्येषु नक्तं मुक्तागुणशुद्धय: अपि (ये) मूर्च्छन्ति स्म, त एव चन्द्रपादा: न मूर्च्छन्ति ॥

१८। कालान्तरेण कालभेदवशेन श्यामसुधेषु मलिनचूर्णेषु इतस्ततो रूढ़तृणाङ्कुरेषु हर्म्येषु गृहेषु नक्तं रात्रौ मुक्तागुणानां शुद्धिरिव शुद्धि: स्वाच्छ्यं येषां तादृशा अपि तत: पूर्वं ये मूर्च्छन्ति स्म त एव चन्द्रपादा चन्द्ररश्मय:। 'पादा रश्म्यङ्घ्रितुर्यांशा' इत्यमर:। न मूर्च्छन्ति न प्रतिफलन्तीत्यर्थ: ॥

১৮। কালবশে রাজপ্রাসাদের ধবলবর্ণ সুধা বিলুপ্ত হইয়া মলিনভাব ধারণ করিয়াছে এবং ইতস্ততঃ তৃণাঙ্কুর সকল উৎপন্ন হইয়াছে ; সুতরাং রাত্রিকালীন মুক্তার ন্যায় স্বচ্ছ চন্দ্রকিরণ আর নগরমধ্যে প্রতিফলিত হইতেছে না।

आवर्ज्य शाखा: सदयञ्च यासां
पुष्पाण्युपात्तानि विलासिनीभि: ।
वन्यै: पुलिन्दैरिव वानरैस्ता:
क्लिश्यन्त उद्यानलता मदीया: ॥ १९

१९ अ:। (किञ्च) विलासिनीभि: सदयं शाखा: आवर्ज्य यासां पुष्पाणि उपात्तानि ता: मदीया उद्यानलता:, वन्यै: पुलिन्दै: इव वानरै: क्लिश्यन्ते ॥

१९। किञ्च, विलासिनीभि: सदयं शाखा लतावयवान् आवर्ज्य आनमय्य यासां लतानां पुष्पाणि उपात्तानि गृहीतानि, ता मदीया उद्यानलता: वन्यै: पुलिन्दै: म्लेच्छविशेषैरिव वानरै: उभयैरपीत्यर्थ:, क्लिश्यन्ते पीड्यन्ते। क्लिश्नाति: कर्म्मणि लट्। 'भेदा: किरातशबरपुलिन्दा म्लेच्छजातय:' इत्यमर: ॥

১৯। পূর্ব্বে বিলাসিনী কামিনীগণ উদ্যানস্থিত যে লতাসমূহের শাখা দয়ার্দ্র ভাবে আনত করিয়া কুসুমচয়ন করিত, এক্ষণে বন্য পুলিন্দগণের ন্যায় বানরেরা আমার সেই উপবনলতা ছিন্ন ভিন্ন করিতেছে।

**रात्रावनाविष्कृतदीपभास: कान्तामुखश्रीवियुता दिवापि।**
**तिरस्क्रियन्ते कृमितन्तुजालैर्विच्छिन्नधूमप्रसरा गवाक्षा: ॥२०॥**

२० अ:। रात्रौ अनाविष्कृतदीपभास: दिवापि कान्तामुख-श्रीवियुता विच्छिन्नधूमप्रसरा गवाक्षा: कृमितन्तुजालै: तिरस्क्रियन्ते ॥

२०। रात्रौ अनाविष्कृतदीपभास: दीपप्रभाशून्या इत्यर्थ:, दिवापि दिवसेऽपि कान्तामुखानां श्रिया कान्त्या वियुता रहिता: विच्छिन्नो नष्टो धूमप्रसरो येषां ते गवाक्षा: कृमितन्तुजालैर्लूतातन्तुवितानैस्तिरस्क्रियन्ते छाद्यन्ते ॥

২০। এক্ষণে রজনীযোগে মদীয় গবাক্ষ দিয়া নগরমধ্যে দীপশিখা বহির্গত হয় না, দিবাভাগে রমণীগণের মুখকান্তিতে গবাক্ষদ্বারশোভিত হয় না এবং কালবশে অগুরুচন্দনসংযুক্ত পবিত্র ধূমনির্গম একেবারে রহিত হওয়ায় অট্টালিকাসমূহে এখন কেবল কৃমিকুল নিরন্তর তন্তুজাল বিস্তার করিতেছে।

**बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवन्ति।**
**उपान्तवानीरगृहाणि दृष्ट्वा शून्यानि दूये सरयूजलानि ॥२१॥**

२१ अ:। बलिक्रियावर्ज्जितसैकतानि स्नानीयसंसर्गम् अनाप्नुवन्ति, सरयूजलानि शून्यानि उपान्तवानीरगृहाणि दृष्ट्वा दूये ॥

२१। 'बलि: पूजोपहार: स्यात्' इति शाश्वत:। बलिक्रियावर्ज्जितानि सैकतानि येषां तानि स्नानीयानि स्नानसाधनानि चूर्णादीनि। 'कृत्यल्युटो बहुलम्' इति करणेऽनीयर् प्रत्यय:। स्नानीयसंसर्गम् अनाप्नुवन्ति। सरयूजलानि शून्यानि रिक्तानि उपान्तेषु वानीरगृहाणि येषां तानि च दृष्ट्वा दूये परितप्ये ॥

২১। সরযূর পুলিনে আর বলি প্রদত্ত হয় না, তাঁহার জলে স্নানসাধন সুগন্ধি দ্রব্যের সম্পর্ক নাই এবং তীরস্থ বেতসকুঞ্জ সকল জনমানবহীন; এই সকল অবস্থা দর্শন করিয়া আমি দুঃখিত হইতেছি।

तदर्हसीमां वसतिं विसृज्य
मामभ्युपैतुं कुलराजधानीम्।
हित्वा तनुं कारणमानुषीं तां
यथा गुरुस्ते परमात्ममूर्त्तिम्॥ २२

२२ अः। ते गुरुः तां कारणमानुषीं तनुं हित्वा परमात्ममूर्त्तिं यथा, तत् इमां वसतिं विसृज्य कुलराजधानीं माम् अभ्युपैतुम् अर्हसि॥

२२। तत् तस्मात् इमां वसतिं कुशावतीं विसृज्य कुलराजधानीम् अयोध्यां मामभ्युपैतुमर्हसि। कथमिव? ते गुरुः पिता रामस्तां प्रसिद्धां कारणवशात् मानुषीं तनुं मानुषमूर्त्तिं हित्वा परमात्ममूर्त्तिं यथा विष्णुमूर्त्तिमिव॥

২২। হে রাঘব! আপনার পিতা কার্য্যানুরোধে যেরূপ মানুষীমূর্ত্তি পরিত্যাগ করিয়া স্বীয় বিষ্ণুমূর্ত্তি পরিগ্রহ করিয়াছেন, তদ্রূপ আপনিও কুশাবতী পরিত্যাগ করিয়া পৈতৃক রাজধানী অযোধ্যাপুরীতে প্রবেশ করুন।

तथेति तस्याः प्रणयं प्रतीतः प्रत्यग्रहीत् प्राग्रहरो रघूणाम्।
पूरप्यभिव्यक्तमुखप्रसादा शरीरबन्धेन तिरोबभूव॥ २३

२३ अः। रघूणां प्राग्रहरः तस्याः प्रणयं प्रतीतः (सन्) तथा इति प्रत्यग्रहीत्, पूः अपि अभिव्यक्तमुखप्रसादा (सती) शरीरबन्धेन तिरोबभूव॥

२३। रघूणां प्राग्रहरः श्रेष्ठः कुशस्तस्याः पुरः प्रणयं याच्ञां प्रतीतो हृष्टः सन् तथेति प्रत्यग्रहीत् स्वीकृतवान्। पूः पुराधिदेवतापि अभिव्यक्तमुखप्रसादा सती इष्टलाभादिति भावः। शरीरबन्धेन शरीरयोगेन करणेन तिरोबभूव अन्तर्दधे। मानवं रूपं विहाय दैवं रूपमग्रहीदित्यर्थः॥

২৩। রঘুবর কুশ 'তাহাই হউক বলিয়া' প্রফুল্লচিত্তে তাঁহার বাক্যে অঙ্গী করিলেন। তখন পুরদেবীর মুখকমলে প্রসাদ চিহ্ন ফুটিয়া উঠিল এবং তিনি মানুষী তনু পরিত্যাগ করিয়া দেবরূপ ধারণ করত তথা হইতে অন্তর্হিত হইলেন।

तदद्भुतं संसदि रात्रिवृत्तं
प्रातर्द्विजेभ्यो नृपतिः शशंस।

শ্রুত্বা ত এনং কুলরাজধান্যা
সাক্ষাৎ পতিত্বে বৃতমভ্যনন্দন্ ॥ ২৪

২৪ অ:। নৃপতি: তৎ অদ্ভুতং রাত্রিবৃত্তং প্রাত: সংসদি দ্বিজেভ্য: শশংস, তে শ্রুত্বা এনং কুলরাজধান্যা সাক্ষাৎ পতিত্বে বৃতম্ অভ্যনন্দন্ ॥

২৪। নৃপতি: কুশস্তৎ অদ্ভুতং রাত্রিবৃত্তং রাত্রিবৃত্তান্তং প্রাত: সংসদি সভায়াং দ্বিজেভ্য: শশংস। তে দ্বিজা: শ্রুত্বা এনং কুশং কুলরাজধান্যা: সাক্ষাৎ স্বয়মেব পতিত্বে বিষয়ে বৃতম্ অভ্যনন্দন্। পতিত্বেন বৃতোঽসীত্য- পূজয়ন্ আশিরিতি শেষ:। অত্র গার্গ্য:—'দৃষ্ট্বা স্বপ্নং শোভনং নৈব সুপ্যাৎ পশ্চাদ্দৃষ্টো য: স: পাকং বিধত্তে। শংসেদিষ্টং তত্র সাধুর্দ্বিজেভ্যস্তে চাশীর্ভি: প্রীণয়েয়ুর্নরেন্দ্রম্' ॥ ইদমপি স্বপ্নতুল্যমিতি ভাব: ॥

২৪। পরদিন প্রভাতকালে নৃপতি কুশ সভামধ্যে সমাগত দ্বিজগণ সমীপে রাত্রির সেই অদ্ভুত স্বপ্ন বৃত্তান্ত জ্ঞাপন করিলেন। তাঁহারা তৎসমুদয় শ্রবণপূর্ব্বক "কুল- রাজধানী স্বয়ং তাঁহাকে পতিত্বে বরণ করিয়াছেন" এজন্য কুশকে আশীর্ব্বাদাদি দ্বারা অভিনন্দিত করিলেন।

কুশাবতীং শ্রোত্রিয়সাৎ স কৃত্বা
যাত্রানুকূলেঽহনি সাবরোধ:।
অনুদ্রুতো বায়ুরিবাভ্রবৃন্দৈ:
সৈন্যৈরযোধ্যাভিমুখ: প্রতস্থে ॥ ২৫

২৫ অ:। স: কুশাবতীং শ্রোত্রিয়সাৎ কৃত্বা যাত্রানুকূলে অহনি সাবরোধ: (সন্) অভ্রবৃন্দৈ: ইব সৈন্যৈ: অনুদ্রুত: (সন্) অযোধ্যাভিমুখ: প্রতস্থে ॥

২৫। স কুশ: কুশাবতীং শ্রোত্রিয়েষু ছান্দসেষু অধীনাং শ্রোত্রিয়সাৎ। 'তদধীনবচনে' ইতি সাতিপ্রত্যয:। 'শ্রোত্রিয়চ্ছন্দোঽধীতে' ইতি নিপাত:। 'শ্রোত্রিয়শ্ছান্দসৌ সমৌ' ইত্যমর:। কৃত্বা যাত্রানুকূলেঽহনি সাবরোধ: সান্ত:পুর: সন্ বায়ু: অভ্রবৃন্দৈরিব সৈন্যৈরনুদ্রুত: অনুগত: সন্ অযোধ্যাভি- মুখ: প্রতস্থে ॥

২৫। নৃপতি কুশ বেদজ্ঞ ব্রাহ্মণগণের করে কুশাবতীর ভার ন্যস্ত করিয়া অন্ত:পুর- মহিলাগণসহ শুভদিনে অযোধ্যাভিমুখে গমন করিলেন। তৎকালে মেঘমালা যেরূপ বায়ুর অনুসরণ করে, তদ্রূপ তদীয় সৈন্যগণ তাঁহার পশ্চাৎ পশ্চাৎ গমন করিল।

সা কেতুমালোপবনা বৃহদ্ভির্বিহারশৈলানুগতেব নাগৈ:।
সেনা রথোদারগৃহা প্রয়াণে তস্যাভবজ্জঙ্গমরাজধানী ॥ ২৬

२६ अ: । केतुमालीपवना सा बृहद्भि: नागै: विहारशैलानुगता इव (स्थिता) रथोदारगृहा [सेना] तस्य प्रयाणे, जङ्गमराजधानी इव, अभवत् ॥

२६ । केतुमाला एव उपवनानि यस्या: सा बृहद्भिर्नागैर्गजैर्विहारशैलै: क्रीड़ाशैलैरनुगता इव स्थिता, रथा एव उदारगृहा यस्या: सा, [सेना] सेना तस्य कुशस्य प्रयाणे जङ्गमराजधानी सञ्चारिणी नगरी इव अभवत् बभूव ॥

२६। সেনাগণের গমনকালে ধ্বজশ্রেণী উদ্যানের, অত্যুচ্চ মাতঙ্গগণ বিহার[শৈ]লের এবং রথসমূহ সুবৃহৎ গৃহের শোভা ধারণ করায় মনে হইল যেন স্বয়ং রাজ[ধা]নীই গমন করিতেছে।

**[ते]नातपत्रामलमण्डलेन प्रस्थापित: पूर्वनिवासभूमिम् ।**
**[ब]भौ बलौघ: शशिनोदितेन वेलामुदन्वानिव नीयमान:॥ २७**

२७ अ: । आतपत्रामलमण्डलेन तेन पूर्वनिवासभूमिं प्रस्थापित: बलौघ: (आतपत्रामलमण्डलेन) [उ]दितेन शशिना वेलां नीयमान उदन्वान् इव बभौ ॥

२७ । आतपत्रमिव अमलं मण्डलं बिम्बं यस्य तेन, तेन कुशेन [पू]र्वनिवासभूमिमयोध्यां प्रति प्रस्थापितो बलौघ: आतपत्रवदमलमण्डलेन [उ]दितेन शशिना वेलां नीयमान: प्राप्यमाण: उदकमस्यास्तीत्युदन्वान् [उ]दधिरिव बभौ । 'उदन्वानुदधौ च' इति निपातनात् साधु: ॥

২৭। বিমল আতপত্রমণ্ডলসমন্বিত কুশ এইরূপে সৈন্যগণকে পূর্ব নিবাসভূমি [অ]যোধ্যায় প্রেরণ করিলে সৈন্যগণ যেন চন্দ্রোদয়ে বেলাভূমিগত জলধির ন্যায় শোভা [ধা]রণ করিল।

**[त]स्य प्रयातस्य वरूथिनीनां पीड़ामपर्य्याप्तवतीव सोढुम् ।**
**वसुन्धरा विष्णुपदं द्वितीयमध्यारुरोहेव रजश्छलेन ॥ २८**

२८ अ: । प्रयातस्य तस्य वरूथिनीनां (कर्त्तॄणाम्) पीड़ां सोढुम् अपर्य्याप्तवती इव वसुन्धरा [र]जश्छलेन द्वितीयं विष्णुपदम् अध्यारुरोह इव ॥

२८ । प्रयातस्य प्रस्थितस्य तस्य कुशस्य वरूथिनीनां सेनानां [क]र्त्तॄणाम् 'कर्त्तृकर्म्मणो: कृति' इति कर्त्तरि षष्ठी, पीड़ां सोढुमपर्य्याप्तवती इव अशक्ता इव वसुन्धरा रजश्छलेन द्वितीयं विष्णुपदं आकाशम् अध्यारुरोह इव इत्युत्प्रेक्षा ॥

২৮। কুশের প্রস্থানকালে বসুধাদেবী সৈন্যগণের বাধা সহ করিতে অসমর্থা হইয়াই যেন ধূলিজালচ্ছলে নভোমণ্ডলে আরোহণ করিলেন।

**उद्यच्छमाना गमनाय पश्चात् पुरो निवेशे पथि च व्रजन्ती।**
**सा यत्र सेना ददृशे नृपस्य तत्रैव सामग्र्यमतिं चकार ॥२९**

२९ अः। पश्चात् गमनाय पुरः निवेशे उद्यच्छमाना पथि च व्रजन्ती नृपस्य सा सेना यत्र ददृशे तत्र एव सामग्र्यमतिं चकार ॥

२९। पश्चात् कुशावत्याः सकाशात् गमनाय प्रयाणाय तथा पुरोऽग्रे निवेशे निमित्ते निवेष्टुं चेत्यर्थः। उद्यच्छमाना उद्योगं कुर्व्वती। 'समो दाङ्भ्यो यमोऽग्रन्थे' इत्यस्य सकर्म्मकाधिकारत्वादात्मनेपदम्। पथि च व्रजन्ती नृपस्य कुशस्य सा सेना यत्र पश्चात् पुरो मध्ये वा ददृशे, तत्रैव सामग्र्यमतिं कृत्स्नताबुद्धिं चकार अपरिमिता तस्य सेनेत्यर्थः॥

२९। সেনাগণের কিয়দংশ কুশাবতী হইতে নিষ্ক্রমণের উপক্রম, কতক অংশ সম্মুখভাগে অবস্থানের জন্য ব্যস্ত এবং অপর কতকগুলি পথিমধ্যে গমন করিতে লাগিল; কিন্তু দর্শকগণ যে অংশ দর্শন করিল, তাহাই যেন সমগ্র বলিয়া বিবেচনা করিতে লাগিল।

**तस्य द्विपानां मदवारिसेकात् खुराभिघाताच्च तुरङ्गमाणाम्।**
**रेणुः प्रपेदे पथि पङ्कभावं पङ्कोऽपि रेणुत्वमियाय नेतुः ॥३०**

३० अः। नेतुः तस्य द्विपानां मदवारिसेकात् तुरङ्गमाणां खुराभिघातात् च पथि रेणुः पङ्कभावं प्रपेदे, पङ्कः अपि रेणुत्वम् इयाय ॥

३०। नेतुस्तस्य कुशस्य द्विपानां मदवारिभिः सेकात् तुरङ्गमाणां खुराभिघाताच्च यथासंख्यं पथि रेणुः रजः पङ्कभावं पङ्कतां प्रपेदे। पङ्कोऽपि रेणुत्वमियाय। तस्य तावदस्तीत्यर्थः॥

३०। সেনানায়ক নৃপতি কুশের মাতঙ্গগণের মদবারি ক্ষরণে এবং অশ্বগণের খুরাঘাতে পথিমধ্যে ধূলিজাল পঙ্কভাব ও পঙ্কসকল শুষ্ক হইয়া ধূলিভাব প্রাপ্ত হইল।

**मार्गैषिणी सा कटकान्तरेषु वैन्ध्येषु सेना बहुधा विभिन्ना।**
**चकार रेवेव महाविरावा बद्धप्रतिश्रुन्ति गुहामुखानि ॥३१**

३१ अः। वैन्ध्येषु कटकान्तरेषु मार्गैषिणी (अतएव) बहुधा विभिन्ना महाविरावा सा सेना रेवा इव गुहामुखानि बद्धप्रतिश्रुन्ति चकार ॥

३०। वैन्ध्येषु विन्ध्यसम्बन्धिषु कटकान्तरेषु नितम्बावकाशेषु 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः। मार्गैषिणी मार्गावलोकिनी अतएव बहुधा विभिन्ना महाविरावा दीर्घशब्दा सा सेना रेवा इव नर्म्मदा इव

...वा तु नर्म्मदा सोमोद्भवा मेखलकन्यका' इत्यमरः। गुहामुखानि बद्ध-...तिश्रुन्ति प्रतिध্বानवन्ति चकार अकरोत् ॥

৩১। বিন্ধ্যপর্ব্বতের সানুদেশে পথান্বেষী সেনাগণ বহুধা বিভিন্ন হইয়া মহা কলরব ...তে করিতে রেবা নদীর ন্যায় গুহামুখ সকল প্রতিধ্বনিত করিয়াছিল।

**...धातुभेदारुणयाननेमिः प्रभुः प्रयाणध्वनिमिश्रतूर्य्यः ।**
**...लङ्घयद्विन्ध्यमुपायनानि पश्यन् पुलिन्दैरुपपादितानि ३२**

३२ अः। धातुभेदारुणयाननेमिः प्रयाणध्वनिमिश्रतूर्य्यः सः प्रभुः पुलिन्दैः उपपादितानि ...यनानि पश्यन् विन्ध्यं व्यलङ्घयत् ॥

३२। धातूनां गैरिकादीनां भेदेन अरुणा याननेमि रथचक्रधारा ...य, प्रयाणे ये ध्वनयः क्ष्वेड़क्ष्वेषादयः तन्मिश्राणि तूर्य्याणि यस्य, ...विधः स प्रभुः कुशः पुलिन्दैः किरातैरुपपादितानि समर्पितानि ...पायनानि पश्यन् विन्ध्यं व्यलङ्घयत् ॥

৩২। তাঁহার রথচক্রের অগ্রভাগ গৈরিকাদি ধাতু ভেদ করিয়া রক্তবর্ণ এবং তূর্য্য-...নাদে সৈন্যগণের গমন শব্দ মিশ্রিত হইয়া গেল। এইরূপে নরপতি কুশ পুলিন্দগণ ...ত্ত উপঢৌকন দর্শন করিতে করিতে বিন্ধ্যগিরি অতিক্রম করিতে লাগিলেন।

**...र्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।**
**...यत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥ ३३**

३३ अः। तदीये तीर्थे गजसेतुबन्धात् प्रतीपगां गङ्गाम् उत्तरतः अस्य नभोलङ्घनलोलपक्षाः हंसाः ...यत्नबालव्यजनीबभूवुः ॥

३३। तदीये वैन्ध्ये तीर्थेऽवतारे गजा एव सेतुस्तस्य बन्धाद्धेतोः ...तीपगां पश्चिमवाहिनीं गङ्गाम् उत्तरतोऽस्य कुशस्य नभोलङ्घनेन लोलपक्षा ...सा अयत्नेन बालव्यजनीबभूवुः चामराणि अभूवन्। अभूततद्भावे च्विः ॥

৩৩। কুশ যখন বিন্ধ্যপর্ব্বতের অবতরণপথে হস্তী দ্বারা সেতু প্রস্তুত করিয়া পশ্চিম-...হিনী গঙ্গা পার হন, তৎকালে হংসগণ অবনত পক্ষ সঞ্চালনপূর্ব্বক ক্ষণকাল তাঁহার ...সঞ্চালিত চামরের কার্য্য করিয়াছিল।

**...पूर्वजानां कपिलेन रोषात् भस्मावशेषीकृतविग्रहाणाम् ।**
**...सुरालयप्राप्तिनिमित्तमम्भस्त्रैस्रोतसं नौलुलितं ववन्दे ॥ ३४**

३४ अः। सः कपिलेन रोषात् भस्मावशेषीकृतविग्रहाणां पूर्वजानां सुरालयप्राप्तिनिमित्तं ...लुलितं त्रैस्रोतसम् अम्भः ववन्दे ॥

३४। स कुशः कपिलेन मुनिना रोषात् भस्मावशेषीकृता विग्रहा देहा येषां तेषां पूर्वजानां वृद्धानां सागराणां सुरालयस्य स्वर्गस्य प्राप्ते निमित्तं नौभिर्लुलितं क्षुभितं त्रिस्रोतस इदं त्रैस्रोतसं गाङ्गमम्भो ववन्दे॥

৩৪। তখন নরনাথ কুশ কপিলকোপানলে ভস্মীভূত পূর্ব্বপুরুষ সাগরগণের সুর-লোকলাভের কারণ নৌকাদ্বারা আলোড়িত সুরতরঙ্গিণীকে প্রণিপাত করিলেন।

इत्यध्वनः कैश्चिदहोभिरन्ते
कूलं समासाद्य कुशः सरय्वाः।
वेदिप्रतिष्ठान् विततध्वराणां
यूपानपश्यच्छतशो रघूणाम्॥ ३५

३५ अ:। इति कैश्चित् अहोभिः अध्वनः अन्ते कुशः सरय्वाः कूलं समासाद्य विततध्वराणां रघूणां वेदिप्रतिष्ठान् शतशः अपश्यत्॥

३५। इति कैश्चित् अहोभिरध्वनोऽन्तेऽवसाने कुशः सरय्वाः कूलं समासाद्य विततध्वराणां विस्तृतमखानां रघूणाम्, वेदिः प्रतिष्ठास्पदं येषां तान् यूपान् शतशः अपश्यत्॥

৩৫। নরপতি কুশ এইরূপে কয়েক দিবসের পথ অতিক্রম করিয়া সরযূতীরে উপনীত হইলেন। তিনি তথায় উপস্থিত হইয়া দেখিলেন,—নিয়ত যজ্ঞানুষ্ঠানকারী রঘুবংশীয় রাজগণের বেদিপ্রতিষ্ঠিত শত শত যূপ তীরে নিখাত রহিয়াছে।

आधूय शाखाः कुसुमद्रुमाणां
स्पृष्ट्वा च शीतान् सरयूतरङ्गान्।
तं क्लान्तसैन्यं कुलराजधान्याः
प्रत्युज्जगामोपवनान्तवायुः॥ ३६

३६ अ:। कुलराजधान्याः उपवनान्तवायुः कुसुमद्रुमाणां शाखाः आधूय शीतान् सरयूतरङ्गान् स्पृष्ट्वा च क्लान्तसैन्यं तं प्रत्युज्जगाम।

३६। कुलराजधान्या उपवनान्तवायुः कुसुमद्रुमाणां शाखा आधूय ईषद्धूत्वा, सुरभिर्मन्दश्चेत्यर्थः। शीतान् सरयूतरङ्गान् च स्पृष्ट्वा, अनेन शैत्योक्तिः। क्लान्तसैन्यं तं कुशं प्रत्युज्जगाम॥

৩৬। তৎকালে কুলরাজধানী অযোধ্যার উপবনবায়ু সরযূর তরঙ্গসম্পর্কে শীতল এবং কুসুমিত তরুশাখা কম্পিত করিয়া পথশ্রান্ত সৈন্যগণপরিবৃত নৃপতি কুশকে প্রত্যুদ্গমন করিল।

अथोपशल्ये रिपुमग्नशल्यस्तस्याः पुरः पौरसखः स राजा ।
कुलध्वजस्तानि चलध्वजानि निवेशयामास बली बलानि॥३७

३७ अः । अथ रिपुमग्नशल्यः पौरसखः कुलध्वजः बली सः राजा चलध्वजानि तानि बलानि तस्याः पुरः उपशल्ये निवेशयामास ॥

३७। अथ रिपुषु मग्नं शल्यं शङ्कुः शरो वा यस्य सः, 'शल्यं शङ्कौ शरे वंशे' इति विश्वः। पौराणां सखा पौरसखः, कुलस्य ध्वजश्चिह्नभूतो बली स राजा चलाश्चलन्त्यो वा ध्वजा येषां तानि, तानि बलानि सैन्यानि तस्याः पुरः पुर्य्या उपशल्ये ग्रामान्ते, 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः। निवेशयामास ॥

৩৭। অনন্তর শত্রুবিজয়ী পুরপ্রিয় বলবান্ কুলশ্রেষ্ঠ নৃপতি কুশ চপল ধ্বজদণ্ড-শোভিত সেনাগণকে রাজধানী অযোধ্যার প্রান্তভাগে সন্নিবেশিত করিলেন।

तां शिल्पिसङ्घाः प्रभुणा नियुक्ता-
स्तथागतां सम्भृतसाधनत्वात्
पुरं नवीचक्रुरपां विसर्गात् ।
मेघा निदाघग्लपितामिवोर्वीम् ॥ ३८

३८ अः । प्रभुणा नियुक्ताः शिल्पिसङ्घाः सम्भृतसाधनत्वात् तां तथागतां पुरं मेघाः अपां विसर्गात् निदाघग्लपिताम् उर्वीम् इव नवीचक्रुः ॥

३८। प्रभुणा नियुक्ताः शिल्पिनां तक्षादीनां सङ्घाः सम्भृतसाधनत्वात् मिलितोपकरणत्वात् तां तथागतां, शून्यामित्यर्थः। पुरम् अयोध्यां, मेघा अपां विसर्गात् जलसेकात् निदाघग्लपितां ग्रीष्मतप्ताम् उर्वीमिव नवीचक्रुः परिपूरयाञ्चक्रुः ॥

৩৮। মেঘগণ যেমন বারিবর্ষণ দ্বারা নিদাঘতাপিত পৃথিবীকে নূতনাবস্থাপন্ন করে, তদ্রূপ নৃপতিনিযুক্ত শিল্পিগণ প্রচুর উপকরণদ্বারা সেই দুর্দ্দশাগ্রস্ত অযোধ্যা নগরীকে নূতন করিয়া তুলিল।

ततः सपर्य्यां सपशूपहारां पुरः परार्द्ध्यप्रतिमागृहायाः ।
उपोषितैर्वास्तुविधानविद्भिर्निर्वर्त्तयामास रघुप्रवीरः ॥३९

३९ अः । ततः रघुप्रवीरः परार्द्ध्यप्रतिमागृहायाः पुरः उपोषितैः वास्तुविधानविद्भिः ( प्रयोज्यैः ) सपशूपहारां सपर्य्यां निवर्त्तयामास ॥

३९। ततो रघुप्रवीरः कुशः प्रतिमा देवताप्रतिकृतयः, अर्च्चा इत्यर्थः।

पराईप्रतिमागृहायाः प्रशस्तदेवतायतनायाः पुरः उपोषितैः वास्तुविधानविद्भिः प्रयोज्यैः पशूपहारैः सहितां सपशूपहारां सपर्य्यां निवर्त्तयामास कारयामास । अत्र ण्यन्तात् णिच् पुनरित्यनुसन्धेयम् । अन्यथा हृतेरकर्म्मकस्य करोत्यर्थत्वे कारयत्यर्थाभावप्रसङ्गात् । भवितव्यं हृतेरण्यन्तकर्त्तुः प्रयोज्यत्वेन तन्निर्देशात् प्रयोगान्तरस्यापेक्षितत्वात् ॥

৩৯। তদনন্তর রঘুপ্রবীর কুশ অযোধ্যার সুপ্রশস্ত দেবায়তনে উপোষিত বাস্তুবিধানজ্ঞ ব্যক্তিগণদ্বারা পশূপহারসংযুক্ত পূজাবিধি সম্পাদিত করিলেন।

**तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं प्रविश्य।**
**यथार्हमन्यैरनुजीविलोकं सम्भावयामास यथाप्रधानम् ॥४०॥**

४० अ:। सः तस्या राजोपपदं निशान्तं कामी कान्ताहृदयमिव प्रविश्य अन्यैः (निशान्तैः) अनुजीविलोकं यथाप्रधानं यथार्हं सम्भावयामास ॥

४०। स कुशस्तस्याः पुरः सम्बन्धि राजोपपदं राजशब्दपूर्वं निशान्तं राजभवनमित्यर्थः। 'निशान्तं भवनोषसोः' इति विश्वः। कामी कान्ताहृदयमिव प्रविश्य, अन्यैर्निशान्तैरनुजीविलोकम् अमात्यादिकं यथाप्रधानं मान्यानुसारेण यथार्हं यथोचितं तत्तदुचितगृहैरित्यर्थः सम्भावयामास ॥

৪০। নরপতি কুশ, কামী ব্যক্তির কান্তাহৃদয়ে প্রবেশের ন্যায় অযোধ্যা-রাজভবনে প্রবিষ্ট হইয়া প্রধান প্রধান অমাত্যবর্গকে মর্য্যাদানুসারে বাসভবন প্রদান করিয়া যথাযোগ্য সম্মান প্রদর্শন করিলেন।

**सा मन्दुरासंश्रयिभिस्तुरङ्गैः शालाविधिस्तम्भगतैश्च नागैः।**
**पूराबभासे विपणिस्थपण्या सर्वाङ्गनद्धाभरणेव नारी ॥ ४१ ॥**

४१ अ:। विपणिस्थपण्या सा मन्दुरासंश्रयिभिः तुरङ्गैः शालाविधिस्तम्भगतैः नागैः च सर्वाङ्गनद्धाभरणा नारी इव आबभासे ॥

४१। विपणिस्थानि पण्यानि क्रयविक्रयार्हवस्तूनि यस्याः सा, 'विपणिः पण्यवीथिका' इत्यमरः। सा पूरयोध्या मन्दुरासंश्रयिभिरश्वशालासंश्रयशीलैः, 'वाजिशाला तु मन्दुरा' इत्यमरः। 'जिदृक्षि—' इत्यादिना इनिप्रत्ययः। तुरङ्गैरश्वैः शालासु गृहेषु ये विधिना स्थापिताः स्तम्भास्तान् गतैः प्राप्तैर्नागैश्च सर्वाङ्गेषु नद्धानि आभरणानि यस्याः सा नारी इव आबभासे ॥

৪১। বিপণিস্থিত স্তূপীকৃত বহুবিধ পণ্যদ্রব্যে পরিপূর্ণ সেই পুরী নিয়মানুসারে

[ভব]শালাস্থিত অশ্ব ও স্তম্ভনিবদ্ধ গজশ্রেণীদ্বারা আভরণভূষিত রমণীর ন্যায় শোভা [পা]ইতে লাগিল ।

वसन् स तस्यां वसतौ रघूणां पुराणशोभामधिरोपितायाम्
न मैथिलेयः स्पृहयाम्बभूव भर्त्रे दिवो नाप्यलकेश्वराय ॥४२

४२ अः । सः मैथिलेयः पुराणशोभाम् अधिरोपितायां तस्यां रघूणां वसतौ वसन् दिवः भर्त्रे [अल]केश्वराय अपि न स्पृहयाम्बभूव ॥

४२ । स मैथिलेयः कुशः पुराणशोभां पूर्वशोभाम् अधिरोपितायां [त]स्यां रघूणां वसतौ अयोध्यायां वसन् । दिवो भर्त्रे देवेन्द्राय तथा [अ]लकेश्वराय कुवेराय अपि न स्पृहयाम्बभूव, तावपि न गणयामास [इत्य]र्थः । 'स्पृहेरीप्सितः' इति सम्प्रदानत्वात् चतुर्थी । एतेन अयोध्याया [अ]न्यनगरातिशयित्वं गम्यते ॥

৪২ । এইরূপে পুনরায় পূর্ব্বরূপ অযোধ্যার শোভা সম্পাদিত হইলে মৈথিলীতনয় [অবনী]পতি কুশ তথায় বাস করিয়া দেবেন্দ্রভবন অমরাবতী এবং কুবেরভবন অলকাপুরীর [প্র]তিও বীতস্পৃহ হইলেন ।

अथास्य रत्नग्रथितोत्तरीय-
मेकान्तपाण्डुस्तनलम्बिहारम् ।
निश्वासहार्य्यांशुकमाजगाम
घर्म्मः प्रियावेशमिवोपदेष्टुम् ॥ ४३

४३ अः । अथ अस्य रत्नग्रथितोत्तरीयम् एकान्तपाण्डुस्तनलम्बिहारं निश्वासहार्य्यांशुकं प्रियावेशम् [उप]देष्टुम् इव घर्म्मः आजगाम ॥

४३ । कुशस्य कुमुद्वतीसङ्गमं प्रस्तौति—अथेति । अथ अस्य कुशस्य [रत्नै]र्मुक्तामणिभिर्ग्रथितानि उत्तरीयाणि यस्मिन् तम् एकान्तम्, अत्यन्तं [पा]ण्डोः स्तनयोर्लम्बिनो हारा यस्मिन् तं, निश्वासहार्य्याणि अतिसूक्ष्माणि [अं]शुकानि यत्र तम्, एवं शीतलप्रायं प्रियाया वेशं नेपथ्यम् उपदेष्टुम् इव [घ]र्म्मो ग्रीष्म आजगाम ॥

৪৩ । অনন্তর অবনীপতি কুশের রমণীদিগকে মুক্তামণিগ্রথিত উত্তরীয় ধারণ, [পা]ণ্ডুবর্ণ স্তনমণ্ডলে হারপরিধান এবং নিশ্বাসসমীরণে সঞ্চরণশীল অতি সূক্ষ্ম বসন ধারণ [প্র]ভৃতি বেশবিন্যাস বিষয়ে উপদেশ প্রদান করিবার জন্যই যেন গ্রীষ্মকাল আসিয়া [উ]পস্থিত হইল ।

अगस्त्यचिह्नादयनात् समीपं दिगुत्तरा भास्वति सन्निवृत्ते।
आनन्दशीतामिव बाष्पवृष्टिं हिमस्रुतिं हैमवतीं ससर्ज ॥४४

४४ अः। अगस्त्यचिह्नात् अयनात् भास्वति समीपं सन्निवृत्ते (सति) उत्तरा दिक्, आनन्दशीतां बाष्पवृष्टिम् इव, हैमवतीं हिमस्रुतिं ससर्ज ॥

৪৪। अगस्त्यश्चिह्नं यस्य तस्मात् अयनात् मार्गात् दक्षिणायनात्, भास्वति समीपं सन्निवृत्ते सति, उत्तरा दिक् आनन्दशीतां बाष्पवृष्टिमिव हैमवतीं हिमवत्सम्बन्धिनीं हिमस्रुतिं हिमनिष्यन्दं ससर्ज। अत्र प्रोषित-प्रियासमागमसमाधिर्गम्यते ॥

৪৪। দিবাকর অগস্ত্যাধিষ্ঠিত দক্ষিণদিক্ হইতে উত্তরায়ণ অবলম্বন করিলে উত্তরদিক্ আনন্দ সুশীতল অশ্রুবৃন্দের ন্যায় তুষারজল বর্ষণ করিতে লাগিল।

प्रवृद्धतापो दिवसोऽतिमात्र-
मत्यर्थमेव क्षणदा च तन्वी।
उभौ विरोधक्रियया विभिन्नौ
जायापती सानुशयाविवास्ताम् ॥ ४५

४५ अः। अतिमात्रं प्रवृद्धतापः दिवसः अत्यर्थमेव तन्वी क्षणदा च उभौ विरोधक्रियया विभिन्नौ सानुशयौ जायापती इव आस्ताम् ॥

৪৫। अतिमात्रं प्रवृद्धतापो दिवसः, अत्यर्थमेव अनल्पं तन्वी कृशा क्षणदा च इत्येतावुभौ, विरोधक्रियया प्रणयकलहादिना विरोधाचरणेन विभिन्नौ सानुशयौ सानुतापौ जायापती दम्पती इव आस्ताम्। तयोरपि तापकार्श्यसम्भवात् तत्सदृशावभूतामित्यर्थः ॥

৪৫। তৎকালে দিবসের উত্তাপ অতিমাত্র বর্দ্ধিত হইল, যামিনী অত্যন্ত ক্ষীণ হইয়া গেল; তখন দিবস-রজনী উভয়ে যেন প্রণয়কলহদ্বারা বিরোধাচরণ করিয়া দম্পতীর ন্যায় অনুতাপানলে দগ্ধ হইতে লাগিল।

दिने दिने शैवलवन्त्यधस्तात् सोपानपर्वाणि विमुञ्चदम्भः।
उद्दण्डपद्मं गृहदीर्घिकाणां नारीनितम्बद्वयसं बभूव ॥४६

४६ अः। दिने दिने शैवलवन्ति अधस्तात् सोपानपर्वाणि विमुञ्चत् (अतएव) उद्दण्डपद्मं गृहदीर्घिकाणाम् अम्भः नारीनितम्बद्वयसं बभूव ॥

৪৬। दिने दिने प्रतिदिनं शैवलवन्ति अधस्तात् यानि सोपानानां पर्वाणि भङ्गास्तानि विमुञ्चत्, अतएव उद्दण्डपद्मं गृहदीर्घिकाणामम्भः

नारीनितम्बः प्रमाणमस्य नारीनितम्बद्वयसं बभूव। विहारयोग्यमभूदित्यर्थः। 'प्रमाणे द्वयसच्'—इति द्वयसच् प्रत्ययः॥

४६। দিনে দিনে গৃহদীর্ঘিকার শৈবালসকল নিম্নস্থিত সোপানশ্রেণী পরিত্যাগ করিতে লাগিল, কমলের মৃণালদণ্ড ঊর্দ্ধে জাগিয়া উঠিল; এইরূপে ক্রমে ক্রমে দীর্ঘিকাবারি নারীনিতম্বের সমপরিমাণ হইয়া উঠিল।

**वनेषु सायन्तनमल्लिकानां विजृम्भणोद्गन्धिषु कुट्मलेषु।**
**प्रत्येकनिक्षिप्तपदः सशब्दं संख्यामिवैषां भ्रमरश्चकार॥४७**

४७ अः। वनेषु विजृम्भणोद्गन्धिषु सायन्तनमल्लिकानां कुट्मलेषु सशब्दं प्रत्येकनिक्षिप्तपदः भ्रमरः एषां संख्यां चकार इव॥

४७। वनेषु विजृम्भणेन विकासेन उद्गन्धिषु उद्गतसौरभेषु 'गन्धस्य'—इत्यादिना समासान्त इकारादेशः। सायन्तनमल्लिकानां कुट्मलेषु सशब्दं यथा तथा प्रत्येकमेकैकस्मिन् निक्षिप्तपदः मकरन्दलोभादित्यर्थः। भ्रमर एषां कुट्मलानां संख्यां गणनां चकार इव॥

৪৭। কাননমধ্যে সায়ন্তন মল্লিকাকুসুমসকল প্রস্ফুটিত হইয়া সৌরভ বিকিরণ করিলে অলিকুল প্রত্যেক কুসুমেই পদনিক্ষেপপূর্ব্বক গুন্ গুন্ ধ্বনি করিয়া যেন তাহাদের সংখ্যা গণনা করিতে লাগিল।

**स्वेदानुविद्धार्द्रनखक्षताङ्के**
**भूयिष्ठसन्दष्टशिखं कपोले।**
**च्युतं न कर्णादपि कामिनीनां**
**शिरीषपुष्पं सहसा पपात॥ ४८॥**

४८ अः। स्वेदानुविद्धार्द्रनखक्षताङ्के कामिनीनां कपोले भूयिष्ठसन्दष्टशिखं (अतएव) कर्णात् च्युतम् अपि शिरीषपुष्पं सहसा न पपात॥

४८। स्वेदानुविद्धम् आर्द्रं नूतनं नखक्षतम् अङ्को यस्य तस्मिन् कामिनीनां कपोले भूयिष्ठमत्यर्थं सन्दष्टशिखं संश्लिष्टकेशरम् अतएव कर्णात् च्युतमपि शिरीषपुष्पं सहसा न पपात॥

৪৮। শিরীষকুসুম কামিনীগণের কর্ণ হইতে স্খলিত হইলেও নূতন নখক্ষতচিহ্নিত স্বেদজলসিক্ত কপোলদেশে উহার কেশর সংলগ্ন হওয়াতে উহা আর সহসা পতিত হইতে সমর্থ হইল না।

**यन्त्रप्रवाहैः शिशिरैः परीतान् रसेन धौतान् मलयोद्भवस्य।**
**शिलाविशेषानधिशय्य निन्युर्धारागृहेष्वातपमृद्धिमन्तः॥४९**

४९ अ:। ऋद्धिमन्तः धारागृहेषु शिशिरैः यन्त्रप्रवाहैः परीतान् मलयोद्भवस्य रसेन धौतान् शिलाविशेषान् अधिशय्य आतपं निन्युः ॥

४९। ऋद्धिमन्तो धनिका धारागृहेषु यन्त्रधारागृहेषु शिशिरैर्यन्त्रप्रवाहैर्यन्त्रसञ्चारितसलिलपूरैः परीतान् व्याप्तान् मलयोद्भवस्य रसेन चन्दनोदकेन धौतान् क्षालितान् शिलाविशेषान् मणिमयासनानि अधिशय्य तेषु शयित्वा आतपं निन्युरातपपरिहारं चक्रुः ॥

৪৯। সমৃদ্ধিসম্পন্ন ব্যক্তিগণ যন্ত্রসঞ্চালিত সুশীতল সলিলে সংসিক্ত সুরভিচন্দনরস-ধৌত শিলাতলে শয়ন করিয়া আতপতাপ নিবারণ করিতে লাগিল।

स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु ।
कामो वसन्तात्ययमन्दवीर्य्यः केशेषु लेभे बलमङ्गनानाम् ॥५०

५० अ:। वसन्तात्ययमन्दवीर्य्यः कामः स्नानार्द्रमुक्तेषु विन्यस्तसायन्तनमल्लिकेषु अनुधूपवासम् अङ्गनानां केशेषु बलं लेभे ॥

५०। वसन्तस्य आत्मसहकारिणोऽत्ययेन अतिक्रमेण मन्दवीर्य्योऽतिदुर्बलः कामः स्नानार्द्राश्च धूपसञ्चारणार्थमित्यर्थः। तेषु अनुधूपवासं धूपवासानन्तरं विन्यस्ताः सायन्तनमल्लिका येषु तेषु अङ्गनानां केशेषु बलं लेभे। तैरुद्दीपित इत्यर्थः।

৫০। বসন্তাগমে অঙ্গনাগণের উন্মুক্ত ধূপগন্ধে সুবাসিত সায়ন্তন মল্লিকাকুসুম-বিমণ্ডিত কেশপাশের বিলাসপ্রভাবে মন্দবীর্য্য অনঙ্গও উদ্দীপিত হইতে লাগিল।

आपिञ्जराबद्धरजःकणत्वात्
मञ्जर्य्युदारा शुशुभेऽर्जुनस्य ।
दग्ध्वापि देहं गिरिशेन रोषात्
खण्डीकृता ज्येव मनोभवस्य ॥ ५१

५१ अ:। बद्धरजःकणत्वात् आपिञ्जरा उदारा अर्जुनस्य मञ्जरी देहं दग्ध्वा अपि रोषात् गिरिशेन खण्डीकृता मनोभवस्य ज्या इव शुशुभे ॥

५१। बद्धरजःकणत्वात् व्याप्तरजःकणत्वात् आपिञ्जरा उदारा द्राघीयसी अर्जुनस्य ककुभवृक्षस्य 'इन्द्रद्रुः ककुभोऽर्जुनः' इत्यमरः। मञ्जरी, देहं दग्ध्वापि रोषात् गिरिशेन गिरिरस्त्यस्य निवासत्वेन गिरिशः तेन लोमादित्वाच्छप्रत्ययः। गिरौ शेत इति विग्रहे तु 'गिरौ शेतेर्डः' इत्यस्य छन्दसि विधानात् लोके प्रयोगानुपपत्तिः स्यात्। तस्मात् पूर्वोक्तमेव विग्रहवाक्यं न्याय्यम्। खण्डीकृता मनोभवस्य ज्या मौर्वी इव शुशुभे ॥

৫১। পরাগপূর্ণ অর্জ্জুনপুষ্পের ঈষৎ পিঙ্গলবর্ণ সুদীর্ঘমঞ্জরী, হরকোপানলে ভস্মীভূত ...নের খণ্ডীকৃত ধনুর্গুণের ন্যায় শোভা পাইতে লাগিল।

**मनोज्ञगन्धं सहकारभङ्गं**
**पुराणशीधुं नवपाटलञ्च**
**सम्बध्नता कामिजनेषु दोषाः**
**सर्वे निदाघावधिना प्रमृष्टाः ॥ ५२**

५२ अः। मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलञ्च सम्बध्नता निदाघावधिना कामि-...नेषु ( विषये, सर्वे ) दोषाः प्रमृष्टाः ॥

५२। मनोज्ञगन्धमिति सर्वत्र सम्बध्यते। सहकारभङ्गं चूतपल्लव-...खण्डं, पुराणं वासितं शेरतेऽनेनेति शीधुः इक्षुरसप्रकृतिकः सुराविशेष-...तम्, 'शीङो धुक्' इत्युणादिसूत्रेण 'शीङ् स्वप्ने' इत्यस्माद्धातोः धुक्-प्रत्ययः। 'पक्वैरिक्षुरसैरस्त्री शीधुः पक्वरसः शिवः' इति यादवः। नवं ...पाटलायाः पुष्पं पाटलं च सम्बध्नता संघट्टयता निदाघावधिना ग्रीष्मकालेन 'अवधिस्त्ववधाने स्यात् सीम्नि काले बिलेऽपि च' इति विश्वः। कामिजनेषु विषये सर्वे दोषास्तापादयः प्रमृष्टाः परिहृताः ॥

৫২। মনোহরগন্ধ চূতপল্লব, সুবাসিত পুরাতন শীধু (মদ্য) ও নূতন পাটলপুষ্প প্রভৃতি মনোরম বস্তু সকল যোজনা করিয়া নিদাঘকাল যেন কামিজনের নিকট স্বীয় ...তাপতাপপ্রদানরূপ অপরাধ হইতে মুক্তি পাইয়াছিল।

**जनस्य तस्मिन् समये विगाढ़े बभूवतुर्द्वौ सविशेषकान्तौ ।**
**तापापनोदक्षमपादसेवौ स चोदयस्थौ नृपतिः शशी च ॥ ५३**

५३ अः। तस्मिन् समये विगाढ़े ( सति ) जनस्य द्वौ सविशेषकान्तौ बभूवतुः, तापापनोदक्षम-...पादसेवौ उदयस्थौ सः नृपतिः शशी च ॥

५३। तस्मिन् समये ग्रीष्मे विगाढ़े कठिने सति जनस्य द्वौ सवि-...शेषं सातिशयं यथा तथा कान्तौ बभूवतुः। कौ द्वौ ? तापापनोदे क्षमा ...योग्या पादयोरङ्घ्रयोः पादानां रश्मीनां च सेवा ययोस्तौ उदयस्थौ अभ्यु-...दयस्थौ स नृपतिः शशी च ॥

৫৩। গ্রীষ্মের এবংবিধ গাঢ়তর প্রাদুর্ভাব হইলে তৎকালে কেবলমাত্র অভ্যুদয়শীল চন্দ্রমা ও নরপতি কুশের চরণযুগল এই দুইটি বস্তু মানবগণের সন্তাপহারক হইয়াছিল।

**अथोर्मिलोलोन्मदराजहंसे**
**रोधोलतापुष्पवहे सरय्वाः ।**

**विहर्त्तुमिच्छा वनितासखस्य**
**तस्याम्भसि ग्रीष्मसुखे बभूव ॥ ५४**

५४ अ:। ऊर्म्मिलोलोन्मदराजहंसे रोधोलतापुष्पवहे ग्रीष्मसुखे सरय्वा अम्भसि तस्य वनितासखस्य विहर्त्तुम् इच्छा बभूव ॥

५४। अथ ऊर्मिषु लोलाः सतृष्णा उन्मदा राजहंसा यस्मिन् तस्मिन्, 'लोलश्चलसतृष्णयोः' इत्यमरः। रोधो लतापुष्पाणां वहे प्रापके, पचाद्यच्। ग्रीष्मेषु सुखे सुखकरे सरय्वा अम्भसि पयसि तस्य कुशस्य वनितासखस्य वनिताभिः सहेत्यर्थः। विहर्त्तुमिच्छा बभूव ॥

৫৪। তদনন্তর নরপতি কুশ তরঙ্গবিহারী চঞ্চল উন্মত্ত রাজহংসগণসমাকীর্ণ, তীরস্থ লতাজালের কুসুমপরাগবাহী গ্রীষ্মকাল-সুপ্রতর সরযূজলে কামিনীগণ সমভিব্যাহারে বিহার করিবার জন্য অভিলাষ করিলেন।

**স তীরভূমৌ বিহিতোপকার্য্যামানায়িভিস্তামপকৃষ্টনক্রাম্**

**स तीरभूमौ विहितोपकार्य्यामानायिभिस्तामपकृष्टनक्राम्**
**विगाहितुं श्रीमहिमानुरूपं प्रचक्रमे चक्रधरप्रभावः ॥ ५५**

५५ अ:। चक्रधरप्रभावः सः तीरभूमौ विहितोपकार्य्याम् आनायिभिः अपकृष्टनक्रां तां श्रीमहिमानुरूपं विगाहितुं प्रचक्रमे ।

५५। चक्रधरप्रभावो विष्णुतेजाः स कुशस्तीरभूमौ विहितोपकार्य्या यस्यास्ताम्, आनायो जालमेषामस्तीति आनायिनो जालिकाः, 'जालमानायः' इति निपातः। 'आनायः पुंसि जालं स्यात्' इत्यमरः। तैरपकृष्टनक्राम् अपनीतग्राहां तां सरयूं श्रीमहिम्नोः सम्पत्प्रभावयोरनुरूपं योग्यं यथा तथा विगाहितुं प्रचक्रमे। अत्र कामन्दकः—'परितापिषु वासरेषु पश्यन् तटलेखास्थितमाप्तसैन्यचक्रम्। सुविशोधितनक्रमीनजालं व्यवगाहेत जलं सुहृत्समेतः ॥' इति ॥

৫৫। বিষ্ণুতুল্য প্রভাবশালী নরপতি কুশ, তীরভূমিতে পটমণ্ডপ প্রস্তুত করিয়া জালজীবী ধীবরগণদ্বারা কুম্ভীরাদি হিংস্র জন্তুসকল অপসারিত করাইয়া তৎপর নিজ বিভব ও প্রতাপানুরূপ জলবিহারে প্রবৃত্ত হইলেন।

**सा तीरसोपानपथावतारादन्योन्यकेयूरविघट्टिनीभिः।**
**सनूपुरक्षोभपदाभिरासीदुद्विग्नहंसा सरिदङ्गनाभिः ॥ ५६**

५६ अ:। सा सरित् तीरसोपानपथावतारात् अन्योन्यकेयूरविघट्टिनीभिः सनूपुरक्षोभपदाभिः अङ्गनाभिः उद्विग्नहंसा आसीत् ॥

५६। सा सरित् सरय्वास्तीरसोपानपथेन अवतारात् अवतरणात्

न्योन्यं केयूरविघट्टिनीभि: सन्नद्धाङ्गदसङ्घर्षिणीभि: सनूपुरक्षोभाणि सनूपुरस्खलनानि पदानि यासां ताभिरङ्गनाभिर्हेतुभिरुद्विग्नहंसा भीतहंसा आसीत् ॥

५७। तीর হইতে সোপানপথে অবতরণকালে কুলকামিনীগণের পরস্পর অঙ্গসংঘর্ষণশব্দে ও চরণস্থিত নূপুরধ্বনিতে সরযূবিহারী হংসশ্রেণী উদ্বিগ্ন হইয়া উঠিল।

परस्पराभ्युक्षणतत्पराणां
तासां नृपो मज्जनरागदर्शी ।
नौसंश्रय: पार्श्वगतां किराती-
मुपात्तबालव्यजनां बभाषे ॥ ५७

५७ अ: । नौसंश्रय: परस्पराभ्युक्षणतत्पराणां तासां मज्जनरागदर्शी नृप: पार्श्वगताम् उपात्तबालव्यजनां किरातीं बभाषे ॥

५७। नौसंश्रय: परस्परं अभ्युक्षणे सेचने तत्पराणामासक्तानां तासां स्त्रीणां मज्जने रागोऽभिलाषस्तद्दर्शी नृप: पार्श्वगताम् उपात्तबालव्यजनां गृहीतचामरां किरातीं चामरग्राहिणीं बभाषे। 'किरातस्तु द्रुमान्तरे।' स्त्रियां चामरवाहिन्यां मत्स्यजात्यन्तरे द्वयो:।' इति केशव: ॥

पश्यावरोधै: शतशो मदीयैर्विगाह्यमानो गलिताङ्गरागै: ।
सन्ध्योदय: साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाह: ॥५८

५८ अ: । गलिताङ्गरागै: मदीयै: शतश: अवरोधै: विगाह्यमान: एष: सरयूप्रवाह: साभ्र: सन्ध्योदय: इव अनेकं वर्णं पुष्यति, पश्य ।

५८। गलिताङ्गरागैर्मदीयै: शतशोऽवरोधैर्विगाह्यमानो विलोड्यमान एष सरयूप्रवाह: साभ्र: समेघ: सन्ध्योदय: सन्ध्याविर्भाव इव, अनेकं नानाविधं वर्णं रक्तपीतादिकं पुष्यति पश्य। वाक्यार्थ: कर्म ॥

৫৭—৫৮। মহিলাকুল সলিলে অবতীর্ণ হইয়া পরস্পরের শরীরে জলসেকে একান্ত তৎপর হইলেন। তখন নৌকারূঢ় নরপতি কুশ জলবিহারে তাঁহাদিগের অনুরাগ সন্দর্শন করিয়া চামরব্যজনধারিণী পার্শ্ববর্ত্তিনী এক কিরাতরমণীকে কহিলেন,—ভদ্রে! ঐ দেখ, সরযূপ্রবাহ আমার শত শত অন্তঃপুর-মহিলাগণের অবগাহধৌত অঙ্গরাগদ্বারা মেঘমালাসমলঙ্কৃত সন্ধ্যাকালের ন্যায় বিবিধ বর্ণ ধারণ করিয়াছে।

विलुप्तमन्त:पुरसुन्दरीणां यदञ्जनं नौलुलिताभिरद्भि: ।
तद्बध्नतीभिर्मदरागशोभां विलोचनेषु प्रतिमुक्तमासाम् ॥ ५९

५९ अ:। नौलुलिताभि: अद्भि: अन्त:पुरसुन्दरीणां यत् अञ्जनं विलुप्तम्, तत् विलोचनेषु मदरागशोभां बध्नतीभि: ( अद्भि: ) आसां प्रतिमुक्तम् ॥

५९। नौलुलिताभि: नौक्षुभिताभि: अद्भि: अन्त:पुरसुन्दरीणां यत् अञ्जनं कज्जलं विलुप्तं हृतं तत् अञ्जनं विलोचनेषु नयनेषु मदेन या रागशोभा तां बध्नतीभिर्घटयन्तीभि: अद्भि: आसां प्रतिमुक्तं प्रत्यर्पितम्। अतिनिधिदानमपि तत्कार्य्यकारित्वात् प्रत्यर्पणमेवेति भाव: ॥

৫৯। নৌকাদ্বারা আলোড়িত জলরাশি অবগাহনকালে পুরনারীগণের যে কজ্জলরাগ বিলুপ্ত করিয়াছিল, তৎপরিবর্ত্তে তাঁহাদিগের নয়নে মদরাগজনিত শোভা সম্পাদন করিতেছে।

**एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवत्य:।**
**गाढ़ाङ्गदैर्बाहुभिरप्सु बाला: क्लेशोत्तरं रागवशात् प्लवन्ते॥६०**

६० अ:। गुरुश्रोणिपयोधरत्वात् आत्मानम् उद्वोढुम् अशक्नुवत्य: एता: बाला: गाढ़ाङ्गदै: बाहुभि: अप्सु क्लेशोत्तरं ( यथा तथा ) रागवशात् प्लवन्ते ॥

६०। गुरु दुर्वहं श्रोणिपयोधरं यस्य आत्मन इति विग्रह:। गुरुश्रोणिपयोधरत्वात् आत्मानं शरीरम् उद्वोढुम् अशक्नुवत्य एता बाला गाढाङ्गदै: श्लिष्टाङ्गदैर्बाहुभि: क्लेशोत्तरं दु:खप्रायं यथा तथा रागवशात् क्रीड़ाभिनिवेशपारतन्त्र्यात् अप्सु प्लवन्ते तरन्ति ॥

৬০। ঐ সকল রমণী নিতম্ব ও পয়োধরের গুরুত্বহেতু শরীরবহনে স্বীয় অসমর্থ হইলেও জলবিহারে একান্ত অনুরাগহেতু কেয়ূরভূষিত বাহুপাশ দ্বারা অতিকষ্টে সন্তরণ করিতেছে।

**अमी शिरीषप्रसवावतंसा:**
**प्रभ्रंशिनो वारिविहारिणीनाम्।**
**पारिप्लवा: स्रोतसि निम्नगाया:**
**शैवाललोलान् छलयन्ति मीनान्॥ ६१**

६१ अ:। वारिविहारिणीनाम् प्रभ्रंशिन: निम्नगाया: स्रोतसि पारिप्लवा: अमी शिरीषप्रसवावतंसा: शैवाललोलान् मीनान् छलयन्ति ॥

६१। वारिविहारिणीनाम् आसां प्रभ्रंशिनो भ्रष्टा निम्नगाया: स्रोतसि पारिप्लवाश्चञ्चला:। 'चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे' इत्यमर:। अमी शिरीषप्रसवा एव अवतंसा: कर्णभूषा: शैवाललोलान् जलनीलीप्रियान्।

'जलनीली तु शैवालम्' इत्यमरः। मीनान् छलयन्ति प्रादुर्भावयन्ति। शैवालप्रियत्वात् शिरीषेषु शैवालभ्रमात् प्रादुर्भावयन्तीत्यर्थः॥

৬১। বারিবিহারিণী রমণীগণের কর্ণচ্যুত শিরীষকুসুমের কর্ণভূষণসমূহ নদীজল-প্রবাহে পতিত হওয়ায় শৈবাললোলুপ মীনগণ উহা ভক্ষণ করিতে আসিয়া প্রতারিত হইতেছে।

आसां जलास्फालनतत्पराणां
मुक्ताफलस्पर्द्धिषु शीकरेषु।
पयोधरोत्सर्पिषु शीर्य्यमाणः
संलक्ष्यते न च्छिदुरोऽपि हारः॥ ६२

६२ अः। जलास्फालनतत्पराणाम् आसां मुक्ताफलस्पर्द्धिषु पयोधरोत्सर्पिषु शीकरेषु शीर्य्यमाणः हारः, (अतएव) छिदुरः अपि न संलक्ष्यते॥

६२। जलस्य आस्फालने तत्पराणाम् आसक्तानाम् आसां स्त्रीणां मुक्ताफलस्पर्द्धिषु मौक्तिकानुकारिषु पयोधरेषु स्तनेषु उत्सर्पन्ति उत्पतन्ति ये तेषु शीकरेषु शीकराणां मध्ये शीर्य्यमाणो गलन् हारः अतएव च्छिदुरः स्वयं छिन्नोऽपि न संलक्ष्यते। 'विदिभिदिच्छिदेः कुरच्' इति कुरच्-प्रत्ययः। शीकरसंसर्गाच्छिन्न इति न ज्ञायत इति भावः॥

৬২। সলিলাস্ফালনে একান্ত অনুরক্ত কামিনীগণের পয়োধরসংলগ্ন মুক্তাফল-সন্নিভ জলকণার মধ্যে মুক্তাহার ছিন্ন ও স্খলিত হইলেও উহা লক্ষিত হইতেছে না।

आवर्त्तशोभा नतनाभिकान्ते-
र्भङ्गो भ्रुवां द्वन्द्वचराःस्तनानाम्।
जातानि रूपावयवोपमाना-
न्यदूरवर्त्तीनि विलासिनीनाम्॥ ६३

६३ अः। विलासिनीनां रूपावयवोपमानानि अदूरवर्त्तीनि जातानि। नतनाभिकान्तेः आवर्त्तशोभा भ्रुवां भङ्गः स्तनानां द्वन्द्वचराः॥

६३। विलासिनीनां विलसनशीलानां स्त्रीणाम्। 'वौ कषलसकत्थ-स्रम्भः' इति घिनुन्प्रत्ययः। रूपावयवानामुपमेयानां यानि उपमानानि लोकप्रसिद्धानि तानि अदूरवर्त्तीनि अन्तिकगतानि जातानि। कस्य किमुपमानमित्यत्राह ?—नतनाभिकान्ते निम्ननाभिशोभाया आवर्त्तशोभा।

'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः। भ्रुवां भङ्गस्तरङ्गः स्तनानां द्वन्द्वचराश्चक्रवाकाः, उपमानमिति सर्वत्र सम्बध्यते ॥

৬৩। নতনাভির সহিত আবর্ত্তশোভার, ভ্রূভঙ্গের সহিত তরঙ্গভঙ্গীর এবং পয়োধর শোভার সহিত চক্রবাকমিথুনের—শরীরের প্রসিদ্ধ উপমান বস্তু সকল এই বিলাসিনী রমণীগণের সন্নিহিতই রহিয়াছে।

**तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम्।**
**श्रोत्रेषु सम्मूर्च्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम्॥६४॥**

६४ अः। उत्कलापैः प्रस्निग्धकेकैः तीरस्थलीबर्हिभिः अभिनन्द्यमानं रक्तं गीतानुगम् आसां वारिमृदङ्गवाद्यं श्रोत्रेषु सम्मूर्च्छति ॥

६४। उत्कलापैरुच्चबर्हैः प्रस्निग्धा मधुराः केका येषां तैस्तीरस्थलीषु स्थितैर्बर्हिभिर्मयूरैरभिनन्द्यमानं रक्तं श्राव्यं गीतानुगं गीतानुसारि आसां स्त्रीणां सम्बन्धि वारि एव मृदङ्गस्तस्य वाद्यं वाद्यध्वनिः श्रोत्रेषु सम्मूर्च्छति व्याप्नोति ॥

৬৪। তীরবাসী উন্নতকলাপ প্রস্নিগ্ধকেকারব ময়ূরগণ কর্ত্তৃক অভিনন্দ্যমান সুমধুর সঙ্গীতানুগত বিলাসিনীগণকৃত এই সকল বারিরূপ মৃদঙ্গধ্বনি কর্ণকুহর পরিপূরিত করিতেছে।

**सन्दष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुतुल्याः।**
**अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः॥६५॥**

६५ अः। सन्दष्टवस्त्रेषु अबलानितम्बेषु इन्दुप्रकाशान्तरितोडुतुल्याः अमी जलापूरितसूत्रमार्गाः रशनाकलापाः मौनं भजन्ते ॥

६५। सन्दष्टवस्त्रेषु जलसेकात् संश्लिष्टांशुकेषु अबलानां नितम्बेषु अधिकरणेषु इन्दुप्रकाशेन ज्योत्स्नान्तरितानि आवृतानि यानि उडूनि नक्षत्राणि तत्तुल्याः मुक्तामयत्वादिति भावः। अमी जलापूरितसूत्रमार्गाः निश्चला इत्यर्थः। रशना एव कलापा भूषाः। 'कलापो भूषणे बर्हे' इत्यमरः। मौनं निःशब्दतामित्यर्थः, भजन्ते ॥

৬৫। এই কামিনীগণের মুক্তাময়ী কাঞ্চী বসনসংলিপ্ত নিতম্বদেশে জ্যোৎস্নান্তরিত তারকারাজীর ন্যায় সুশোভিত হইতেছে এবং সলিলদ্বারা উহার সূত্রপ্রবেশপথ রুদ্ধ হওয়ায় উহা আর ধ্বনিত হইতেছে না।

**एताः करोत्पीडितवारिधारा**
**दर्पात् सखीभिर्वदनेषु सिक्ताः।**

वक्रेतराग्रैरलकैस्तरुण्य-
श्चूर्णारुणान् वारिलवान् वमन्ति ॥ ६६

६६ अ:। दर्पात् करोत्पीड़ितवारिधाराः सखीभिः वदनेषु सिक्ताः एताः तरुण्यः वक्रेतराग्रैः अलकैः चूर्णारुणान् वारिलवान् वमन्ति।

६६। दर्पात् सखीजनं प्रति करैरुत्पीड़िता उत्सारिता वारिधारा याभिस्ताः स्वयमपि पुनस्तथैव सखीभिर्वदनेषु सिक्ता एतास्तरुण्यो वक्रेतराग्रैर्जलसेकात् ऋज्वग्रैरलकैः करणैश्चूर्णैः कुङ्कुमादिभिः अरुणान् वारिलवान् उदकबिन्दून् वमन्ति वर्षन्ति ॥

৬৬। ঐ দেখ, এক কামিনী সখীর প্রতি গর্ব্বপ্রকাশপূর্ব্বক করপল্লবদ্বারা তাহার শরীরে সলিলনিক্ষেপ করাতে ঐ সখীও আবার উহার মুখে জলসেক করিতেছে। এইরূপে কামিনীগণ অবক্র অলকাগ্রে সংলগ্ন কুঙ্কুমাদিচূর্ণে অরুণবর্ণ জলকণা সকল বর্ষণ করিতেছে।

उद्बन्धकेशश्च्युतपत्रलेखो
विश्लेषिमुक्ताफलपत्रवेष्टः।
मनोज्ञ एव प्रमदामुखाना-
मम्भोविहाराकुलितोऽपि वेशः ॥ ६७

६७ अ:। उद्बन्धकेशः च्युतपत्रलेखः विश्लेषिमुक्ताफलपत्रवेष्टः अम्भोविहाराकुलितः अपि प्रमदामुखानां वेशः मनोज्ञः एव ॥

६७। उद्बन्धा उद्भ्रष्टाः केशा यस्मिन् सः, च्युतपत्रलेखः च्युतपत्ररचनः, विश्लेषिणो विस्रंसिनो मुक्ताफलपत्रवेष्टाः मुक्तामयताड़ङ्का यस्मिन् सः, एवमम्भो विहाराकुलितोऽपि प्रमदामुखानां वेषो नेपथ्यं मनोज्ञ एव। रम्याणां विकृतिरपि श्रियं तनोति इति भावः ॥

৬৭। প্রমদাগণের কেশবন্ধন শিথিল, মুখকমলের পত্ররচনা বিলুপ্ত এবং মুক্তাফলের বেষ্টন সকল পরিভ্রষ্ট হইয়াছে; এইরূপে জলবিহারে উহাদিগের কেশরচনা ভিন্ন ভিন্ন হইলেও উহাদিগের শোভার ন্যূনতা হয় নাই।

स नौविमानादवतीर्य्य रेमे विलोलहारः सह ताभिरप्सु।
स्कन्धावलग्नोद्धृतपद्मिनीकः करेणुभिर्वन्य इव द्विपेन्द्रः ॥६८

६८ अ:। सः नौविमानात् अवतीर्य्य विलोलहारः (सन्) ताभिः सह, करेणुभिः (सह) स्कन्धावलग्नोद्धृतपद्मिनीकः वन्यः द्विपेन्द्रः इव अप्सु रेमे ॥

६८। स कुशो नौर्विमानमिव नौविमानम्। उपमितसमासः।

तस्मादवतीर्य्य विलोलहार: सन् ताभि: स्त्रीभि: सह करेणुभि: सह स्कन्धावलग्ना उद्धृतपद्मिनी उत्पाटितनलिनी यस्य स तथोक्त: सन्। 'नद्यृतश्च' इति कप्रत्यय:। वन्यो द्विपेन्द्र इव अप्सु रेमे ॥

৬৮। মহীপতি কুশ কিরাতরমণীকে এইরূপ কহিয়া স্বয়ং নৌকা হইতে অবতরণ পূর্ব্বক বন্য মাতঙ্গ যেরূপ উন্মূলিত নলিনীকে স্কন্ধদেশে ধারণ করিয়া করিণীর সহিত বিহার করে, সেইরূপ বক্ষঃস্থলে হারযষ্টি আন্দোলিত করতঃ কামিনীগণের সহিত বিহার করিতে আরম্ভ করিলেন।

ततो नृपेणानुगता: स्त्रियस्ता
भ्राजिष्णुना सातिशयं विरेजु:।
प्रागेव मुक्ता नयनाभिरामा:
प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥ ६९

६९ अ:। तत: भ्राजिष्णुना नृपेण अनुगता: ता: स्त्रिय: सातिशयं विरेजु:, प्रागेव मुक्ता: नयनाभिरामा:, उन्मयूखम् प्राप्य किमुत ?

६९। ततो भ्राजिष्णुना प्रकाशनशीलेन। 'भुवश्च' इति चकारादिष्णुच्। नृपेण अनुगता: सङ्गतास्ता: स्त्रिय: सातिशयं यथा तथा विरेजु:। प्रागेव इन्द्रनीलयोगात् पूर्वमेव केवला अपीत्यर्थ:। मुक्ता मणयो नयनाभिरामा: उन्मयूखमिन्द्रनीलं प्राप्य किमुत, अभिरामा इति किमु वक्तव्यमित्यर्थ: ॥

৬৯। প্রমদাগণ দীপ্যমান নরপতি কুশের সহিত মিলিত হইয়া সাতিশয় শোভা পাইতে লাগিল; মুক্তা নিজেই নয়নমনোরম, তাহাতে আবার উজ্জ্বল ইন্দ্রনীলমণির সহিত সংযুক্ত হইলে যে অপূর্ব্ব শোভা ধারণ করিবে, তাহাতে আর বৈচিত্র্য কি?

वर्णोदकै: काञ्चनशृङ्गमुक्तैस्तमायताक्ष्य: प्रणयादसिञ्चन्।
तथागत: सोऽतितरां बभासे सधातुनिष्यन्द इवाद्रिराज: ॥ ७०

७० अ:। आयताक्ष्य: तं काञ्चनशृङ्गमुक्तै: वर्णोदकै: प्रणयात् असिञ्चन्, तथागत: स: सधातुनिष्यन्द: अद्रिराज: इव अतितरां बभासे ॥

७०। तं कुशमायताक्ष्य: काञ्चनस्य शृङ्गैर्मुक्तानि तैर्वर्णोदकै: कुङ्कुमादिवर्णद्रव्यसहितोदकै: प्रणयात् स्नेहात् असिञ्चन्। तथागतस्तथा स्थित: वर्णोदकसिक्त इत्यर्थ:। स कुश: सधातुनिष्यन्दो गैरिकद्रवयुक्तोऽद्रिराज इव अतितरां बभासे अत्यर्थं चकासे ॥

पि धरित्र्या धुरं भुवो भारम् अनुभावात् सामर्थ्यात् बिभराम्बभूव भार। 'भीह्रीभृहुवां श्लुवच्च' इति विकल्पादाम्प्रत्ययः ॥

৪৫। শিরীষকুসুম হইতেও অধিকতর সুকুমার রাজকুমার, ভূষণভারবহনে ক্লেশ অনুভব করিতেন, কিন্তু ভূভার অতীব গুরুতর হইলেও স্বীয় প্রভাববলে অনায়াসে তাহা বহন করিতে সমর্থ হইয়াছিলেন।

न्यस्ताक्षरामक्षरभूमिकायां
कार्त्स्न्येन गृह्णाति लिपिं न यावत् ।
सर्वाणि तावच्छ्रुतवृद्धयोगात्
फलान्युपायुङ्क्त स दण्डनीतेः ॥ ४६

४६ अः। अक्षरभूमिकायां न्यस्ताक्षरां लिपिं कार्त्स्न्येन यावत् न गृह्णाति, सः तावत् श्रुतवृद्धयोगात् सर्वाणि दण्डनीतेः फलानि उपायुङ्क्त ॥

४६। अक्षरभूमिकायाम् अक्षरलेखनस्थले न्यस्ताक्षरां रचिताक्षरपङ्क्तिरेखान्यासां लिपिं पञ्चाशद्वर्णात्मिकां मातृकां कार्त्स्न्येन यावत् न गृह्णाति, स सुदर्शनस्तावत् श्रुतवृद्धयोगात् विद्यावृद्धसंसर्गात् सर्वाणि दण्डनीतेः दण्डशास्त्रस्य फलानि उपायुङ्क्त अन्वभूत्। प्रागेव बद्धफलस्य तस्य पश्चादभ्यस्यमानं शास्त्रं संवादार्थमिव अभवदित्यर्थः ॥

৪৬। তাঁহার সম্যক্ বর্ণপরিচয় না হইতেই জ্ঞানবৃদ্ধ অমাত্যগণের সাহায্যে তিনি সমগ্র দণ্ডনীতি অভ্যাস করিয়াছিলেন।

उरस्यपर्य्याप्तनिवेशभागा प्रौढीभविष्यन्तमुदीक्षमाणा ।
सञ्जातलज्जेव तमातपत्रच्छायाच्छलेनोपजुगूह लक्ष्मीः ॥४७

४७ अः। उरसि अपर्य्याप्तनिवेशभागा प्रौढीभविष्यन्तम् उदीक्षमाणा लक्ष्मीः सञ्जातलज्जा इव तम् आतपत्रच्छायाच्छलेन उपजुगूह ॥

४७। उरसि अपर्य्याप्तो निवेशभागो निवासावकाशो यस्याः सा, अतएव प्रौढीभविष्यन्तं वर्द्धिष्यमाणमुदीक्षमाणा प्रौढवपुष्मान् भविष्यतीति प्रतीक्षमाणा लक्ष्मीः सञ्जातलज्जा इव साक्षादालिङ्गितुं लज्जिता इव तं सुदर्शनमातपत्रच्छायाच्छलेन उपजुगूह आलिलिङ्ग। छत्रच्छाया लक्ष्मीरूपेति प्रसिद्धिः। प्रौढाङ्गनायाः प्रौढपुरुषालाभे लज्जा भवतीति ध्वनिः ॥

৪৭। রাজলক্ষ্মী তাঁহার অপ্রশস্ত বক্ষঃস্থলে আশ্রয়স্থান প্রাপ্ত না হইয়া তাঁহার প্রৌঢ়াবস্থা প্রতীক্ষা করিতে লাগিলেন এবং সম্প্রতি যেন লজ্জাবশতঃ আতপত্রচ্ছায়াচ্ছলে তাঁহাকে আলিঙ্গন করিতে থাকিলেন।

अनाप्नुवानेन युगोपमानमाबद्धमौर्वीकिणलाञ्छनेन।
अस्पृष्टखड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः ॥४८

४८ अ:। युगोपमानम् अनाप्नुवानेन अबद्धमौर्वीकिणलाञ्छनेन अस्पृष्टखड्गत्सरुणा च अपि तस्य भुजेन भूमिः रक्षावती आसीत् ॥

४८। युगोपमानं युगसादृश्यमनाप्नुवानेन अप्राप्नुवता। आबद्धो मौर्वीकिणो ज्याघातग्रन्थिरेव लाञ्छनं यस्य तेन, अस्पृष्टः खड्गत्सरुः खड्गमुष्टिर्येन तेन, 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः। एवंविधेनापि च तस्य सुदर्शनस्य भुजेन भूमिः रक्षावती आसीत्। शिशोरपि तस्य तेजः तादृगित्यर्थः ॥

৪৮। তাঁহার ভুজদ্বয় আজিও জ্যাঘাতচিহ্নিত হয় নাই, করমুষ্টিও খড়্গস্পর্শ করে নাই কিংবা বাহুযুগলও যুগপরিমাণতা প্রাপ্ত হয় নাই; তথাপি সেই বাহুদ্বারা বসুধা রক্ষা করিয়াছিলেন।

न केवलं गच्छति तस्य काले
ययुः शरीरावयवा विवृद्धिम्।
वंश्या गुणाः खल्वपि लोककान्ताः
प्रारम्भसूक्ष्माः प्रथिमानमापुः ॥ ४९

४९ अ:। काले गच्छति (सति) तस्य केवलं शरीरावयवाः विवृद्धिं न ययुः, (किन्तु) वंश्याः लोककान्ताः प्रारम्भसूक्ष्माः तस्य गुणाः अपि प्रथिमानम् आपुः खलु ॥

४९। काले गच्छति सति तस्य केवलं शरीरावयवा एव विवृद्धिं प्रसारं न ययुः, किन्तु वंशे भवाः वंश्या लोककान्ता जनप्रियाः प्रारम्भे आदौ सूक्ष्मास्तस्य गुणाः शौर्य्यौदार्य्यादयोऽपि प्रथिमानं पृथुत्वमापुः खलु ॥

৪৯। কালক্রমে কেবল তাঁহার শরীরই যে বৃদ্ধি পাইয়াছিল এমন নয়, জনমনোহর বংশপরম্পরাগত ঔদার্য্য শৌর্য্য প্রভৃতি যে সকল গুণ তাঁহার শরীরে প্রচ্ছন্নভাবে অবস্থিত ছিল, তাহারাও ক্রমশঃ বৃদ্ধিপ্রাপ্ত হইয়াছিল।

स पूर्वजन्मान्तरदृष्टपाराः
स्मरन्निवाक्लेशकरो गुरूणाम्।
तिस्रस्त्रिवर्गाधिगमस्य मूलं
जग्राह विद्याः प्रकृतीश्च पित्र्याः ॥ ५०

५०। सः पूर्वजन्मान्तरदृष्टपाराः स्मरन् इव गुरूणाम् अक्लेशकरः (सन्) त्रिवर्गाधिगमस्य मूलं तिस्रः विद्याः पित्र्याः प्रकृतीः च जग्राह ॥

५०। सः सुदर्शनः पूर्वस्मिन् जन्मान्तरे जन्मविशेषे दृष्टपाराः सारस्विकगणाम् अक्लेशकरः सन् त्रयाणां धर्मार्थकामानां वर्गस्त्रिवर्गः तस्य अविकस्य प्राप्तेर्मूलं तिस्रो विद्याः त्रयीवार्त्तादण्डनीतीः पितराः पित्र्यस्विनीः प्रकृतीः प्रजाश्च जग्राह स्वायत्तीचकार। अत्र कौटिल्यः— धर्माधर्मौ त्रय्याम् अर्थानर्थौ वार्त्तायां नयानयौ दण्डनीत्याम्' इति। अत्र दण्डनीतिः नयद्वारा काममूलमिति द्रष्टव्यम्। आन्वीक्षिक्या अनुपादानं अन्तर्भावपक्षमाश्रित्य। यथाह कामन्दकः—"त्रयी वार्त्ता दण्डनीतिस्तिस्रो विद्या मनोमताः। त्रय्या एव विभागोऽयं येन साऽन्वीक्षिकी मता॥" इति॥

৫০। গুরুজনপ্রিয় সুদর্শন জন্মান্তরে যে সকল বিদ্যায় পারদর্শী ছিলেন, এক্ষণে ত্রিবর্গলাভের নিদানস্বরূপ সেই সকল যেন তাঁহার স্মৃতিপথে উদিত হইতে লাগিল এবং তিনি পৈতৃক প্রকৃতিসমূহকে স্ববশে আনয়ন করিলেন।

**व्यूह्य स्थितः किञ्चिदिवोत्तरार्द्धमुन्नद्धचूडोऽञ्चितसव्यजानुः।**
**आकर्णमाकृष्टसबाणधन्वा व्यरोचतास्त्रेषु विनीयमानः॥५१**

५१ अ:। अस्त्रेषु विनीयमानः उत्तरार्द्धं किञ्चित् इव व्यूह्य स्थितः उन्नद्धचूडः अञ्चितसव्यजानुः आकर्णम् आकृष्टसबाणधन्वा (सन्) व्यरोचत॥

५१। अस्त्रेषु धनुर्विद्यायां विनीयमानः शिक्षमाणः अतएव उत्तरार्द्धं कायं किञ्चिदिव व्यूह्य विस्तार्य्य स्थितः उन्नद्धचूडः ऊर्द्धम् उत्क्षिप्त केशः अञ्चितम् आकुञ्चितं सव्यं जानु यस्य सः आकर्णम् आकृष्टं सबाणं धनुर्धन्व वा येन स तथोक्तः सन् व्यरोचत अशोभत॥

৫১। তিনি ধনুর্বিদ্যা শিক্ষাকালে ঊর্দ্ধে কেশবন্ধন, শরীরের পূর্ব্বার্দ্ধবিস্তৃত ও বামজানু কুঞ্চিত করিয়া যখন সশর শরাসন আকর্ষণ করিতেন, তখন তাঁহার এক অভূতপূর্ব্ব শোভা হইত।

**अथ मधु वनितानां नेत्रनिर्वेशनीय-**
**मनसिजतरुपुष्पं रागबन्धप्रवालम्।**
**अकृतकविधि सर्वाङ्गीणमाकल्पजातं**
**विलसितपदमाद्यं यौवनं स प्रपेदे॥ ५२**

५२ अ:। अथ सः वनितानां नेत्रनिर्वेशनीयं मधु रागबद्धप्रबालं मनसिजतरुपुष्पं अकृतकविधि सर्वाङ्गीणम् आकल्पजातम् आद्यं विलसितपदं यौवनं प्रपेदे॥

५२। अथ सः सुदर्शनो वनितानां नेत्रैः निर्वेशनीयं भोग्यं नेत्रपेयम् अर्थः। 'निर्वेशो भृतिभोगयोः' इत्यमरः। मधु चोद्रं रागबन्धः अनुरागसन्तानम् एव प्रबालः पल्लवो यस्य, तं मनसिज एव तरुस्तस्य पुष्प

पुष्पसूतम् अकृतकविधि अकृत्रिमसम्पादनं, सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणम् । 'तत्सर्वादेः'—इत्यादिना खप्रत्ययः । आकल्पजातम् आभरणसमूहभूतम्, आद्यं विलसितपदं विलासस्थानं यौवनं प्रपेदे । विशिष्टमधुपुष्पाकल्पजातविलासपदत्वेन यौवनस्य चतुर्द्धाकरणात् सविशेषणमालारूपकमेतत् ॥

৫২। অনন্তর তিনি কামিনীগণের নয়নাভিরাম মধুস্বরূপ, অনুরাগবন্ধনরূপ পল্লবসম্পন্ন, মনোভব-তরুর কুসুমস্বরূপ, সর্ব্বাঙ্গব্যাপী, স্বভাবজাত, আভরণরূপ, একমাত্র বিলাসস্থান যৌবন প্রাপ্ত হইলেন।

प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥ ५३

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ वंशानुक्रमो नाम अष्टादशः सर्गः ॥ १८

५३ अ: । दूतिसन्दर्शिताभ्यः प्रतिकृतिरचनाभ्यः समधिकतररूपाः शुद्धसन्तानकामैः अमात्यैः आहृताः राजकन्याः यूनः तस्य प्रथमपरिगृहीते श्रीभुवौ अधिविविदुः ॥

५३ । दूतिभिः कन्यापरीक्षणार्थं प्रेषिताभिः सन्दर्शिताभ्यो दूतिसन्दर्शिताभ्यः, प्रतिकृतीनां तूलिकादिलिखितकन्याप्रतिमानां रचनाभ्यो विन्यासेभ्यः, 'पञ्चमी विभक्ते' इति पञ्चमी । समधिकतररूपाः चित्रनिर्म्माणादपि रमणीयनिर्म्माणा इत्यर्थः । शुद्धसन्तानकामैः अमात्यैः आहृता आनीता राजकन्या यूनस्तस्य सुदर्शनस्य सम्बन्धिन्यौ प्रथमपरिगृहीते श्रीभुवौ श्रीश्च भूश्च ते अधिविविदुरधिविन्ने चक्रुः । आत्मनः सपत्नीभावं चक्रुरित्यर्थः । 'कृतसापत्निकाध्यूढाधिविन्ना' इत्यमरः ॥

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया समेतो महाकवि—श्रीकालिदासकृतौ रघुवंशे महाकाव्ये वंशानुक्रमो नाम अष्टादशः सर्गः ॥ १८

৫৩। মন্ত্রিগণ তদীয় সৎপুত্রকামনায় দূতিসন্দর্শিত চিত্রিত রমণী প্রতিকৃতি হইতেও অধিকতর সুন্দরী রাজকন্যা আনয়ন করিলেন, সেই রাজনন্দিনী অভিনব যৌবনসম্পন্ন রাজকুমার সুদর্শনের অঙ্কলক্ষ্মী হইয়া প্রথম পরিগৃহীতা রাজলক্ষ্মীও বসুন্ধরার সপত্নীভাব অবলম্বন করিয়াছিলেন।

অষ্টাদশ সর্গ সমাপ্ত ॥ ১৮

# ऊनविंशः सर्गः ।

—००%००—

अग्निवर्णमभिषिच्य राघवः स्वे पदे तनयमग्नितेजसम् ।
शिश्रिये श्रुतवतामपश्चिमः पश्चिमे वयसि नैमिषं वशी ॥ १

१ अ: । श्रुतवताम् अपश्चिमः वशी राघवः पश्चिमे वयसि स्वे पदे अग्नितेजसं तनयम् अग्निवर्णम् अभिषिच्य नैमिषं शिश्रिये ॥

मनसो मम संसारबन्धमुच्छेत्तुमिच्छतः ।
रामचन्द्रपदाम्भोजयुगलं निविड़ायताम् ॥

१। श्रुतवतां श्रुतसम्पन्नानाम् अपश्चिमः प्रथमो वशी जितेन्द्रियो राघवः सुदर्शनः पश्चिमे वयसि वार्द्धके स्वे पदे स्थाने अग्नितेजसं तनयम् अग्निवर्णम् अभिषिच्य नैमिषं नैमिषारण्यं शिश्रिये श्रितवान् ॥

১। জ্ঞানিগণের অগ্রগণ্য রঘুবংশসম্ভব জিতেন্দ্রিয় রাজা সুদর্শন অন্তিমদশায় অগ্নিতুল্য তেজস্বী তনয় অগ্নিবর্ণকে স্বপদে অভিষিক্ত করিয়া নৈমিষারণ্য আশ্রয় করিলেন।

तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः ।
सौधवासमुटजेन विस्मृतः सञ्चिकाय फलनिस्पृहस्तपः ॥ २

२ अ: । तत्र तीर्थसलिलेन दीर्घिकाः, अन्तरितभुमिभिः कुशैः तल्पम्, उटजेन सौधवासं विस्मृतः सः फलनिःस्पृहः ( सन् ) तपः सञ्चिकाय ॥

२। तत्र नैमिषे तीर्थसलिलेन दीर्घिकाः विहारवापीः, अन्तरितभूमिभिः कुशैस्तल्पं शय्याम्, उटजेन पर्णशालया सौधवासं विस्मृतः, विस्मृतवान् सः । कर्त्तरि क्तः । फले स्वर्गादिफले निस्पृहस्तपः सञ्चिकाय सञ्चितवान् ॥

২। তিনি তথায় তীর্থসলিলদ্বারা গৃহদীর্ঘিকা, ভূমিতলে আস্তীর্ণ কুশদ্বারা শয্যা এবং পর্ণকুটীরদ্বারা প্রাসাদ বিস্মৃত হইয়া কামনাবিহীনচিত্তে তপোঽনুষ্ঠান করিতে লাগিলেন।

लब्धपालनविधौ न तत्सुतः खेदमाप गुरुणा हि मेदिनी ।
भोक्तुमेव भुजनिर्जितद्विषा न प्रसाधयितुमस्य कल्पिता ॥ ३

३ अ:। तत्सुत: लब्धपालनविधौ खेदं न आप, हि (यस्मात्) भुजनिर्जितद्विषा गुरुणा मेदिनी अस्य भोक्तुम् एव कल्पिता, प्रसाधयितुं न॥

३। तत्सुत: सुदर्शनपुत्त्र: अग्निवर्णो लब्धपालनविधौ लब्धस्य राज्यस्य पालनकर्म्मणि खेदं न आप, अक्लेशेन, अपालयत् इत्यर्थ:। कुत: ? हि यस्मात् भुजनिर्जितद्विषा गुरुणा पित्रा मेदिनी अस्य अग्निवर्णस्य भोक्तुमेव कल्पिता, प्रसाधयितुं न। प्रसाधनं कण्टकशोधनम् अलङ्कृतिर्ध्वन्यते। तथाच—'यथालङ्कृता नीता युवति: केवलमुपभुज्यते' तद्वदिति भाव:॥

৩। অগ্নিবর্ণ রাজ্যপ্রাপ্ত হইয়া তৎপালনে কোন কষ্ট অনুভব করেন নাই, কারণ তাঁহার জনক সুদর্শন নিজভুজবলে শত্রুকুল নির্ম্মূল করিয়া কেবল উপভোগার্থই তাঁহাকে পৃথিবী প্রদান করিয়া গিয়াছিলেন; কোন কণ্টক উদ্ধার করিতে হইবে, এরূপ কিছুই তিনি রাখিয়া যান নাই।

**सोऽधिकारमभिक: कुलोचितं काश्चन स्वयमवर्त्तयत् समा:।**
**सन्निवेश्य सचिवेष्वत:परं स्त्रीविधेयनवयौवनोऽभवत्॥ ४**

४ अ:। अभिक: स: कुलोचितम् अधिकारं काश्चन समा: स्वयम् अवर्त्तयत्, अत:परं सचिवेषु सन्निवेश्य स्त्रीविधेयनवयौवन: अभवत॥

४। अभिक: कामुक: 'अनुकाभिकाभीक: कमिता' इति निपात:। 'कम्र: कामयिताभीक: कमन: कामनोऽभिक:' इत्यमर:। स: अग्निवर्ण: कुलोचितम् अधिकारं प्रजापालनं काश्चन समा: कतिचित् वत्सरान् स्वयम् अवर्त्तयत् अकरोत्। अत:परं सचिवेषु सन्निवेश्य निधाय स्त्रीविधेयं स्त्र्यधीनं नवं यौवनं यस्य स: अभवत्। स्त्र्यासक्त: अभूदित्यर्थ:॥

৪। ভোগাভিলাষী অগ্নিবর্ণ কয়েকবৎসর স্বয়ং কুলোচিত রাজ্যপালন করিয়া অমাত্যগণের প্রতি রাজ্যভার সমর্পণপূর্ব্বক একান্ত নারীপরায়ণ হইয়া পড়িলেন।

**कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदङ्गनादिषु।**
**ऋद्धिमन्तमधिकर्द्धिरुत्तर: पूर्वमुत्सवमपोहदुत्सव:॥ ५**

५ अ:। कामिनीसहचरस्य कामिन: तस्य मृदङ्गनादिषु वेश्मसु अधिकर्द्धि: उत्तर: उत्सव: ऋद्धिमन्तं पूर्वम् उत्सवम् अपोहत्॥

५। कामिनीसहचरस्य कामिनस्तस्य मृदङ्गनादिषु मृदङ्गनादवत्सु वेश्मसु अधिकर्द्धि: पूर्वस्मादधिकसम्भार उत्तर उत्सव: ऋद्धिमन्तं साधनसम्पन्नं पूर्वम् उत्सवम् अपोहत् अपानुदत्। उत्तरोत्तरमधिका तस्योत्सवपरम्परा वृत्तेत्यर्थ:॥

৫। সেই বিলাসী অগ্নিবর্ণ সতত কামিনীজনসংসর্গে কালাতিপাত করিতে গিলেন, তাঁহার মৃদঙ্গনাদপ্রতিধ্বনিত গৃহে উত্তরোত্তর সমধিক সমৃদ্ধিসম্পন্ন উৎসবে তাঁর পূর্ব্বপুরুষগণের অতিসমৃদ্ধ উৎসব সকলও সমাচ্ছাদিত হইয়া গেল।

न्द्रियार्थपरिशून्यमक्षमः सोढुमेकमपि स क्षणान्तरम् ।
न्तरेव विहरन् दिवानिशं न व्यपेक्षत समुत्सुकाः प्रजाः ॥ ६

६ अः। इन्द्रियार्थपरिशून्यम् एकम् अपि क्षणान्तरं सोढुम् अक्षमः सः दिवानिशम् अन्तः एव हरन् समुत्सुकाः प्रजा न व्यपेक्षत ॥

६। इन्द्रियार्थपरिशून्यं शब्दादिविषयरहितमेकमपि क्षणान्तरं क्षण- ं सोढुम् अक्षमः अशक्तः सः अग्निवर्णः दिवानिशम् अन्तरेव विहरन् मुत्सुका दर्शनाकाङ्क्षिणीः प्रजा न व्यपेक्षत न अपेक्षितवान् ॥

৬। তিনি নিরন্তর অন্তঃপুরমধ্যে বিহার করিতেন এবং ভোগ্যবস্তু উপভোগ- তিরেকে ক্ষণকালও অতিক্রম করিতে পারিতেন না; এমন কি, তদীয় দর্শনবাসনায় াগত প্রজাগণের কথা একবারও মনে করিতেন না।

ौरवाद्यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकाङ्क्षितं ददौ ।
द्गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् ॥ ७

७ अः। जातु मन्त्रिणां गौरवात् प्रकृतिकाङ्क्षितं यत् अपि दर्शनं ददौ, तत् गवाक्षविवरा- लम्बिना केवलेन चरणेन कल्पितम् ॥

७। जातु कदाचित् मन्त्रिणां गौरवात् गुरुत्वाद्धेतोः मन्त्रिवचना- रोधादित्यर्थः। प्रकृतिभिः प्रजाभिः काङ्क्षितं यत् अपि दर्शनं ददौ त् अपि गवाक्षविवरावलम्बिना केवलेन चरणेन चरणमात्रेण कल्पितं म्पादितम्। न तु मुखावलोकनप्रदानेन इत्यर्थः ॥

৭। যদি বা কখন সম্মানার্হ মন্ত্রিগণের অনুরোধে প্রজাদিগের অভিলষিত দর্শন- ন করিতেন, তাহাও কেবল গবাক্ষদ্বারে চরণরক্ষিত করিয়া তদ্দ্বারাই সম্পন্ন রিতেন, প্রজাগণ তাঁহার মুখ কখনও দেখিতে পাইত না।

कृतप्रणतयोऽनुजीविनः कोमलात्मनखरागरूषितम् ।
जिरे नवदिवाकरातपस्पृष्टपङ्कजतुलाधिरोहणम् ॥ ८

८ अः। कोमलात्मनखरागरूषितम् (अतएव) नवदिवाकरातपस्पृष्टपङ्कजतुलाधिरोहणं तम् नुजीविनः कृतप्रणतयः (सन्तः) भेजिरे।

८। कोमलेन मृदुलेन आत्मनखानां रागेणारुण्येन छुरितम्। अत-

एव नवदिवाकरातपेन स्पृष्टं व्याप्तं तत् पङ्कजं तस्य तुलां साम्यमधिरोहति प्राप्नोतीति तुलाधिरोहणम् तं चरणम् अनुजीविनः कृतप्रणतयः कृतनमस्काराः सन्तो भेजिरे सिषेविरे ॥

৮। অনুজীবিগণ বালাতপস্পৃষ্ট কমলের ন্যায় কোমল নখরাগরঞ্জিত তদীয় চরণে প্রণামপূর্ব্বক ভজনা করিত।

**यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः ।**
**गूढ़मोहनगृहास्तदम्बुभिः स व्यगाहत विगाढ़मन्मथः ॥ ९**

९ अ:। विगाढ़मन्मथः सः यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाः तदम्बुभिः गूढ़मोहनगृहा च दीर्घिकाः व्यगाहत ॥

९। विगाढ़मन्मथः प्रौढ़मदनः सोऽग्निवर्णो यौवनेन हेतुना उन्नतानां विलासिनीस्तनानां क्षोभेण आघातेन लोलानि चञ्चलानि कमलानि यासां ताः। तदम्बुभिस्तासां दीर्घिकाणामम्बुभिः गूढ़ानि अन्तरितानि मोहनगृहाणि सुरतभवनानि यासु, ताश्च दीर्घिका व्यगाहत। स्त्रीभिः सह दीर्घिकासु विजहारेत्यर्थः ॥

৯। কামোন্মত্ত অগ্নিবর্ণ যখন কামিনীগণসহ দীর্ঘিকাসলিলে বিহার করিতে লাগিলেন, তখন প্রমদাগণের উন্নত কুচকুম্ভদ্বারা জল আলোড়িত হওয়ায় কমলদল চঞ্চল হইতে লাগিল। ঐ সকল দীর্ঘিকাসলিল মধ্যে যে সকল গূঢ় সুরতগৃহ নির্ম্মিত হইয়াছিল, তথায় তাঁহার বিহারক্রীড়া সম্পাদিত হইত।

**तत्र सेकहृतलोचनाञ्जनैर्धौतरागपरिपाटलाधरैः ।**
**अङ्गनास्तमधिकं व्यलोभयन्नर्पितप्रकृतकान्तिभिर्मुखैः ॥ १०**

१० अ:। तत्र अङ्गनाः सेकहृतलोचनाञ्जनैः धौतरागपरिपाटलाधरैः (अतएव) अर्पितप्रकृतकान्तिभिः (एवम्भूतैः) मुखैः तम् अधिकं व्यलोभयन् ॥

१०। तत्र दीर्घिकास्वङ्गनाः सेकेन हृतं लोचनाञ्जनं नेत्रकज्जलं येषां तैः। रज्यतेऽनेनेति रागः रागद्रव्यं लाक्षादिरागस्य परिपाटलोऽङ्गगुणः। 'गुणे शुक्लादयः पुंसि' इत्यमरः। धौतो रागपरिपाटलो येषां ते तयोक्ताः अधरा येषां तैः। निवृत्तसाङ्क्रमिकरागैरित्यर्थः अतएव अर्पितप्रकृतकान्तिभिः अभिव्यञ्जितस्वाभाविकरागैरित्यर्थः। एवम्भूतैः मुखैः तमग्निवर्णमधिकं व्यलोभयन् प्रलोभितवत्यः ॥

১০। জলবিহারকালে জলসেচনহেতু অবলাকুলের লোচনকজ্জল ও অধররাগ বিধৌত হওয়াতে ঐ জল পাটলবর্ণ ধারণ করিয়াছিল, সুতরাং তৎকালে প্রমদাগণের বদনমণ্ডলের প্রকৃতশোভা সন্দর্শনে নরপতি অধিকতর প্রলোভিত হইয়াছিলেন।

घ्राणकान्तमधुगन्धकर्षिणीः
पानभूमिरचनाः प्रियासखः ।
अभ्यपद्यत स वासितासखः
पुष्पिताः कमलिनीरिव द्विपः ॥ ११

११ अ: । प्रियासखः सः घ्राणकान्तमधुगन्धकर्षिणीः पानभूमिरचनाः वासितासखः द्विपः पुष्पिताः [क]मलिनीः इव अभ्यपद्यत ॥

११ । प्रियासखः सः अग्निवर्णः घ्राणकान्तेन घ्राणतर्पणेन मधुगन्धेन [क]र्षिणीः मनोहारिणीः, रच्यन्त इति रचनाः पानभूमय एव रचनाः, [र]चिताः पानभूमय इत्यर्थः । वासितासखः करिणीसहचरः । 'वासिता [स्त्]रीकरिण्योश्च' इत्यमरः । द्विपः पुष्पिताः कमलिनीरिव अभ्यपद्यत [अ]भिगतः ॥

১১। করী যেরূপ করিণীসহায় হইয়া বিকসিত কমলদল উপভোগ করে, রাজা [অগ্নি]বর্ণ তদ্রূপ নারীগণসহ সুরচিত পানভূমিতে গমন করিয়া ঘ্রাণেন্দ্রিয়তৃপ্তিকর মধুগন্ধ [মদ্য] পান করিতেন।

[स]ातिरेकमदकारणं रहस्तेन दत्तमभिलेषुरङ्गनाः ।
[त]ाभिरप्युपहृतं मुखासवं सोऽपिबत् बकुलतुल्यदोहदः ॥ १२

१२ अ: । अङ्गनाः रहः सातिरेकमदकारणं तेन दत्तं मुखासवम् अभिलेषुः, बकुलतुल्यदोहदः [सो]ऽपि ताभिः उपहृतम् ( मुखासवं ) अपिबत् ॥

१२ । अङ्गनाः रहो रहसि सातिरेकस्य सातिशयस्य मदस्य कारणं [ते]न अग्निवर्णेन दत्तं मुखासवम् अभिलेषुः । बकुलेन तुल्यदोहदः तुल्या-[भि]लाषः 'अथ दोहदम् । इच्छाकाङ्क्षा स्पृहेहा तृट्' इत्यमरः । बकुल-[स्]य अङ्गनामद्यार्थित्वात् तुल्याभिलाषित्वम् । सोऽपि ताभिः अङ्गनाभिः [उप]हृतं दत्तं मुखासवम् अपिबत् ॥

১২। মহিলাগণ মদাতিশয্যের নিদানভূত মহীপতিপ্রদত্ত মুখাসব নির্জ্জনে অভিলাষ [করি]ত, বকুলের ন্যায় অভিলাষী মহীপতিও তাহাদিগের মুখমদ্য পান করিতেন।

[अ]ङ्कमङ्कपरिवर्त्तनोचिते तस्य निन्यतुरशून्यतामुभे ।
[वल्ल]की च हृदयङ्गमस्वना वल्गुवागपि च वामलोचना ॥ १३

१३ अ: । हृदयङ्गमस्वना वल्लकी च, वल्गुवाक् वामलोचना अपि च अङ्कपरिवर्त्तनोचिते उभे [त]स्य अङ्कम् अशून्यतां निन्यतुः ॥

१३। अङ्कपरिवर्त्तनोचिते उत्सङ्गविहारार्थे उभे तस्य अग्निवर्णस्य अङ्कम् अशून्यतां पूर्णतां निन्यतुः ? के उभे ? हृदयङ्गमस्वना मनोहर-ध्वनिः वल्लकी वीणा च, वल्गुवाक् मधुरभाषिणी वामलोचना कामिन्यपि च। हृदयं गच्छतीति हृदयङ्गमः। 'खच् प्रकरणे गमेः सुप्युपसंख्यानात्' इति खच्प्रत्ययः। अङ्काधिरोपितयोः वीणावामाक्ष्योः वाद्यगीताभ्याम् अरंस्तेत्यर्थः॥

১৩। মধুরনাদিনী বীণা ও বল্গুভাষিণী ললনা—এই দুইটী উৎসঙ্গ বিহারার্থ নিরন্তর তাঁহার ক্রোড়ে বিরাজিত থাকিত, তিনি ক্রোড়াধিরোপিত বীণার ধ্বনি ও কামিনীর গীতশ্রবণে সুখানুভব করিতেন।

**स स्वयं प्रहतपुष्करः कृती लोलमाल्यवलयो हरन्मनः।**
**नर्त्तकीरभिनयातिलङ्घिनीः पार्श्ववर्त्तिषु गुरुष्वलज्जयत्॥१४**

१४ अः। कृती स्वयंप्रहतपुष्करः लोलमाल्यवलयः मनः हरन् सः अभिनयातिलङ्घिनीः नर्त्तकीः गुरुषु पार्श्ववर्त्तिषु (सत्सु) अलज्जयत्॥

१४। कृती कुशलः स्वयंप्रहतपुष्करो वादितवाद्यमुखो लोलानि माल्यानि वलयानि च यस्य स तथोक्तः मनो हरन् नर्त्तकीनामिति शेषः। सोऽग्निवर्णः अभिनयातिलङ्घिनीः अभिनयेषु स्खलन्तीरित्यर्थः। नर्त्तकीः विलासिनीः 'शिल्पिनि ष्वुन्' इति ष्वुन्प्रत्ययः। 'षिद्गौरादिभ्यश्च' इति ङीष्। 'नर्त्तकीलासिके समे' इत्यमरः। गुरुषु नाट्याचार्य्येषु पार्श्ववर्त्तिषु समीपस्थेषु सत्सु एव अलज्जयत् लज्जाम् अगमयत्॥

১৪। নর্ত্তকীগণ নৃত্য করিতে থাকিলে কলাবিদ্যাকুশল অগ্নিবর্ণ স্বয়ং বলয় ও মাল্য আন্দোলিত করত বাদ্যবাদন করিয়া তাহাদিগের চিত্ত হরণ করিতেন, তৎকালে তাহারা অভিনয় নিয়ম হইতে স্খলিত হওয়ায় পার্শ্ববর্ত্তী নাট্যাচার্য্যগণের সমক্ষে লজ্জাপ্রাপ্ত হইত।

**चारु नृत्यविगमे च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात्।**
**प्रेमदत्तवदनानिलः पिबन्नत्यजीवदमरालकेश्वरौ॥ १५**

१५ अः। (किञ्च) चारु नृत्यविगमे परिश्रमात् स्वेदभिन्नतिलकं तन्मुखं प्रेमदत्तवदनानिलः पिबन् अमरालकेश्वरौ अत्यजीवत्॥

१५। किञ्च, चारु सुन्दरं नृत्यविगमे लास्यावसाने परिश्रमात् नर्त्तनप्रयासात् स्वेदेन भिन्नतिलकं विशीर्णतिलकं तन्मुखं नर्त्तकीमुखं प्रेम्णा दत्तवदनानिलः प्रवर्त्तितमुखमारुतः पिबन् अमराणामलकायाश्च ईश्वरौ इन्द्रकुवेरौ अत्यजीवत् अतिक्रम्य अजीवत्। ततोऽप्युत्कृष्टजीवित आसीदित्यर्थः। इन्द्रादेरपि दुर्लभमीदृशं सौभाग्यमिति भावः॥

১৫। নৃত্যাবসানে শ্রান্তিনিবন্ধন নর্ত্তকীগণের মুখ হইতে মন্দ মন্দ স্বেদবিন্দু নির্গত হইয়া তাহাদের তিলকাবলী বিলুপ্ত করিত। মহীপতি তখন প্রেমবশে তাহাদিগের সুচারুবদনে স্বীয় মুখসমীরণ প্রদান করিতে করিতে তাহাদিগের মুখচুম্বন করিয়া আপনাকে অমরাবতী ও অলকাপুরীর অধীশ্বর ইন্দ্র এবং কুবের অপেক্ষাও অধিকতর সৌভাগ্যশালী মনে করিতেন।

**तस्य सावरणदृष्टसन्धयः काम्यवस्तुषु नवेषु सङ्गिनः।**
**वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः ॥ १६**

१६ अः। उपसृत्य नवेषु काम्यवस्तुषु सङ्गिनः (सतः) तस्य सावरणदृष्टसन्धयः समागमाः वल्लभाभिः सामिभुक्तविषयाः चक्रिरे ॥

**१६। उपसृत्य अन्यत्र गत्वा नवेषु नूतनेषु काम्यवस्तुषु शब्दादिषु इन्द्रियार्थेषु सङ्गिन आसक्तिमतः सतस्तस्य सावरणाः प्रच्छन्नाः दृष्टाः प्रकाशाश्च सन्धयः साधनानि येषु ते समागमाः सङ्गमाः वल्लभाभिः प्रेयसीभिः सामिभुक्तविषया अर्द्धोपभुक्तेन्द्रियार्थाश्चक्रिरे। यथेष्टं भुक्तश्चेत् तर्हि अयं निःस्पृहः सन् अस्मत्समीपं न आयास्यतीति भावः। अत्र गोनर्द्दीयः "सन्धिर्द्विविधः—सावरणः प्रकाशश्च। सावरणो भिक्षुकादिना, प्रकाशः स्वयमुपेत्य केनापि' इति। 'दूतः स्वयमुपसृत्य विशेषार्थं तत्र स्थितोऽनुपजापं स्वयं सन्धेयः' इति वात्स्यायनः। अन्यत्र गतं कथञ्चित् सन्धाय पुनरनुपगमार्द्धोपभोगेन अनिवृत्ततृष्णं चक्रुरित्यर्थः ॥**

১৬। প্রমদাগণ, অন্যত্র গমন করিয়া নূতন নূতন কাম্য বস্তুতে আসক্ত ভূপতিকে কখন গুপ্তভাবে কখনো ব্যক্তভাবে সন্ধানপূর্ব্বক আনয়ন করিয়া উপভোগ্য বিষয় সকল অর্দ্ধোপভোগ করাইত। 'যথেষ্ট উপভোগে নিস্পৃহ হইয়া ইনি আমাদিগের নিকটে আর আসিবেন না' এই আশঙ্কায়ই তাহারা ঐরূপ করিত।

**अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलञ्च वीक्षितम्।**
**मेखलाभिरसकृच्च बन्धनं वञ्चयन् प्रणयिनीरवाप सः ॥ १७**

१७ अः। सः प्रणयिनीः वञ्चयन् अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम्, असकृत् मेखलाभिः बन्धनं च अवाप ॥

**१७। सः अग्निवर्णः प्रणयिनीः प्रेयसीर्वञ्चयन् अन्यत्र गच्छन् अङ्गुल्यः किसलयानि तेषामग्राणि तैः तर्जनं भर्त्सनं भ्रूभेदेन कुटिलं वक्रं वीक्षितं वीक्षणञ्च असकृत् मेखलाभिः बन्धनञ्च अवाप। अपराधिनो दण्ड्या इति भावः॥**

১৭। নৃপতি অন্য রমণীর নিকট গমন করিয়া প্রণয়িনীদিগকে বঞ্চনা করিতেন, এজন্য তাহারাও অঙ্গুলি-কিসলয়াগ্র দ্বারা তর্জ্জন, ভ্রূকুটীদ্বারা কুটিল নিরীক্ষণ এবং মেখলানিগড় দ্বারা বারংবার তাঁহাকে বন্ধন করিত।

**तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवाररात्रिषु।**
**शुश्रुवे प्रियजनस्य कातरं विप्रलम्भपरिशङ्किनो वचः॥ १८**

१८ अः। सुरतवाररात्रिषु दूतिविदितं पृष्ठतः निषेदुषा तेन विप्रलम्भपरिशङ्किनः प्रियजनस्य कातरं वचः शुश्रुवे॥

१८। सुरतस्य वारो वासरः तस्य रात्रिषु दूतीनां विदितं यथा तथा पृष्ठतः प्रियजनस्य पश्चाद्भागे निषेदुषा तेन अग्निवर्णेन विप्रलम्भपरिशङ्किनो विरहशङ्किनः प्रियश्चासौ जनश्च प्रियजनः तस्य कातरं वचः प्रियाननि मां पाहि इत्येवमादि दीनवचनं शुश्रुवे॥

১৮। তিনি পর্য্যায়াগত সুরতরাত্রে বিরহাশঙ্কিনী প্রেয়সীর পশ্চাদ্ভাগে দূতীর জ্ঞাতসারে অবস্থানপূর্ব্বক প্রিয়ামুখে "আমাকে রক্ষা কর" ইত্যাদি কাতরবাক্য শ্রবণ করিতেন।

**लौल्यमेत्य गृहिणीपरिग्रहान्नर्त्तकीष्वसुलभासु तद्वपुः।**
**वर्त्तते स्म स कथञ्चिदालिखन्नङ्गुलीक्षरणसन्नवर्त्तिकः॥ १९**

१९ अः। गृहिणीपरिग्रहात् नर्त्तकीषु असुलभासु (सतीषु) लौल्यम् एत्य अङ्गुलीक्षरणसन्नवर्त्तिकः सः तद्वपुः आलिखन् कथञ्चित् वर्त्तते स्म।

१९। गृहिणीपरिग्रहात् राज्ञीभिः समागमात् हेतोः नर्त्तकीषु वेश्यासु असुलभासु दुर्लभासु सतीषु लौल्यम् औत्सुक्यम् एत्य प्राप्य अङ्गुल्योः क्षरणेन स्वेदनेन सन्नवर्त्तिको विगलितशलाकः सः अग्निवर्णस्तासां नर्त्तकीनां वपुस्तद्वपुः आलिखन् कथञ्चित् वर्त्तते स्म अवर्त्तत॥

১৯। তিনি যখন মহিষীগণ সমভিব্যাহারে থাকিতেন, তখন নর্ত্তকীদিগের প্রতি তাঁহার ঔৎসুক্য জন্মিলে তাহাদিগের সম্ভোগে বঞ্চিত হইতেন; তৎকালে তাহাদের বিরহে অধীর হইয়া স্বেদাপ্লুত অঙ্গুলি হইতে স্খলিত চিত্রশলাকা দ্বারা তাহাদের প্রতিকৃতি চিত্রিত করত অতিকষ্টে ধৈর্য্যধারণ করিতেন।

**प्रेमगर्वितविपक्षमत्सरादायताच्च मदनान्महीक्षितम्।**
**निन्युरुत्सवविधिच्छलेन तं देव्य उज्झितरुषः कृतार्थताम्॥ २०**

२० अः। प्रेमगर्वितविपक्षमत्सरात् आयतात् मदनाच्च देव्यः उज्झितरुषः (सत्यः) तम् उत्सवविधिच्छलेन कृतार्थतां निन्युः॥

२०। प्रेम्णा स्वविषयेण प्रियस्य अनुरागेण हेतुना गर्विते विपक्षे सपत्नीजने मत्सरात् वैरात् आयतात् प्रवृद्धात् मदनाच्च हेतोः देव्यो राज्ञ्य उज्झितरुषः त्यक्तरोषाः सत्यस्तं महीक्षितम् उत्सवविधिच्छलेन महोत्सव-

कर्म्मव्याजेन कृतः अर्थः प्रयोजनं येन स कृतार्थः तस्य भावस्तत्तां निन्युः । मदनमहोत्सवव्याजात् नीतेन तेन स्वमनोरथं कारयामासुरित्यर्थः ॥

২০। মহিষীগণ অনঙ্গজ্বালায় উন্মত্ত হইয়া মহীপতির প্রেমলাভে গর্ব্বিত প্রমদাগণের প্রতি ঈর্ষ্যা ও দুঃসহ রোষ পরিহারপূর্ব্বক মদনমহোৎসব-ব্যপদেশে মহারাজকে আনয়ন করিয়া আপনাদের অভীষ্টসিদ্ধি করিয়া লইতেন।

प्रातरेत्य परिभोगशोभिना
दर्शनेन कृतखण्डनव्यथाः ।
प्राञ्जलिः प्रणयिनीः प्रसादयन्
सोऽदुनोत् प्रणयमन्थरः पुनः ॥ २१

२१ अः। सः प्रातः एत्य परिभोगशोभिना दर्शनेन कृतखण्डनव्यथाः प्रणयिनीः प्राञ्जलिः प्रसादयन् ( तथापि ) प्रणयमन्थरः ( सन् ) पुनः अदुनोत् ॥

२१। सः अग्निवर्णः प्रातरेत्य आगत्य परिभोगशोभिना दर्शनेन हेतुना दृष्टैर्य्न्तामुरट् । कृता खण्डनव्यथा यासां ताः तथोक्ताः खण्डिता इत्यर्थः। तदुक्तम्—'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति। प्रणयिनीः प्राञ्जलिः प्रसादयन् तथापि प्रणयमन्थरः प्रणयेन नर्त्तकीगतेन मन्थरः अलसः अत्र शिथिलप्रयत्नः सन् इत्यर्थः। पुनरदुनोत् पर्य्यतापयत् ॥

২১। অগ্নিবর্ণ প্রভাতকালে গৃহে আগমন করিলে অপর রমণীর উপভোগচিহ্ন সন্দর্শন করিয়া মহিষীরা অভিমানিনী হইতেন; তখন তিনি কৃতাঞ্জলিপুটে বিনম্র-ব্যবহারে তাঁহাদিগের ব্যথা দূর করিতেন; কিন্তু প্রণয়শৈথিল্য প্রদর্শন করিয়া পুনরায় স্বয়ংও ব্যথিত হইতেন।

स्वप्नकीर्त्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम् ।
प्रच्छदान्तगलिताश्रुबिन्दुभिः क्रोधभिन्नवलयैर्विवर्त्तनैः ॥२२

२२ अः। अङ्गनाः स्वप्नकीर्त्तितविपक्षम् तम् अवदन्त्यः एव प्रच्छदान्तगलिताश्रुबिन्दुभिः क्रोधभिन्नवलयैः विवर्त्तनैः प्रत्यभैत्सुः ॥

२२। स्वप्ने कीर्त्तितो विपक्षः सपत्नजनो येन तं, तमग्निवर्णम् अवदन्त्य एव त्वया गोत्रस्खलनं कृतमित्यनुपालभमाना एव प्रच्छदस्य आस्तरणपटस्य अन्ते मध्ये गलिता अश्रुबिन्दवो येषु तैः, क्रोधेन भिन्नानि भग्नानि वलयानि येषु तैः विवर्त्तनैः पराग्विलम्बनैः प्रत्यभैत्सुः प्रतिचक्रुरित्यर्थः ॥

২২। নৃপতি স্বপ্নবশে কখনও কোন রমণীর নাম উচ্চারণ করিলে অঙ্গনাগণ

বাক্যালাপ না করিয়াই পার্শ্বপরিবর্ত্তনপূর্ব্বক অশ্রুজলে শয্যা সিক্ত করিত; তখন ক্রোধভরে তাহাদিগের বলয় চূর্ণ হইয়া যাইত এবং তাহারা রাজাকে ভর্ৎসনা করিত।

**ক্লৃপ্তপুষ্পশয়নান্ লতাগৃহানেত্য দূতিকৃতমার্গদর্শনঃ।**
**অন্বভূৎ পরিজনাঙ্গনারতং সোঽবরোধভয়বেপথূত্তরম্ ॥ ২৩**

২৩ অঃ। সঃ দূতিকৃতমার্গদর্শনঃ (সন্) ক্লৃপ্তপুষ্পশয়নান্ লতাগৃহান্ এত্য অবরোধভয়বেপথূত্তরং পরিজনাঙ্গনারতম্ অন্বভূৎ ॥

২৩। সঃ অগ্নিবর্ণো দূতিভিঃ কৃতমার্গদর্শনঃ সন্ ক্লৃপ্তপুষ্পশয়নান্ লতাগৃহান্ এত্য অবরোধাদন্তঃপুরজনাদ্ভয়েন যো বেপথুঃ কম্পস্তদুত্তরং তৎ-প্রধানং যথা তথা পরিজনাঙ্গনারতং দাসীরতম্ অন্বভূৎ। পরিজনস্য অসৌ অঙ্গনা চ ইতি বিগ্রহঃ। অত্র ঙীবন্তস্যাপি দূতীশব্দস্য ছন্দো-ভঙ্গভয়াৎ হ্রস্বত্বং কৃতম্। 'অপি মাষং মষং কুর্য্যাচ্ছন্দোভঙ্গং ত্যজেদ্গিরাম্' ইত্যুপদেশাৎ ॥

২৩। যখন তিনি দূতীপ্রদর্শিত পথে কুসুমশয্যাশোভিত লতাকুঞ্জে আসিয়া রমণীগণের সহিত বিহার করিতেন, তখন অন্তঃপুরকামিনীদিগের ভয়ে তাঁহার কলেবর কম্পিত হইত।

**নাম বল্লভজনস্য তে ময়া প্রাপ্য ভাগ্যমপি তস্য কাঙ্ক্ষ্যতে।**
**লোলুপং ননু মনো মমেতি যং গোত্রবিস্খলিতমূচুরঙ্গনাঃ॥ ২৪**

২৪ অঃ। ময়া তে বল্লভজনস্য নাম প্রাপ্য তস্য ভাগম্ অপি কাঙ্ক্ষ্যতে। ননু মম মনঃ লোলুপম্ ইতি গোত্রবিস্খলিতম্ অঙ্গনাঃ ঊচুঃ ॥

২৪। ময়া তে বল্লভজনস্য প্রিয়জনস্য নাম প্রাপ্য তন্নাম্না আহ্বানং লব্ধ্বা তস্য ত্বদ্বল্লভজনস্য যদ্ভাগ্যং, তৎ পরিহাসকারণম্ ইতি শেষঃ। তদপি কাঙ্ক্ষ্যতে। ননু বত মম মনো লোলুপং গৃধ্নু ইতি অনেন প্রকারেণ গোত্রে নাম্নি বিস্খলিতং স্খলিতবন্তং তম্ অগ্নিবর্ণম্ ঊচুঃ। 'গোত্রং নাম্নি কুলেঽচলে' ইতি যাদবঃ। তন্নামলাভে সতি তদ্ভাগ্যমপি কাঙ্ক্ষিণো মনঃ অহো তৃষ্ণেতি সোল্লুণ্ঠমুপালভন্ত ইত্যর্থঃ ॥

২৪। মহীপতির মুখে যদি কখন কোন কামিনীর নাম উচ্চারিত হইত, তখনি তাঁহার অঙ্গনাগণ বলিত,—হে কামুক! আমি তোমার প্রেয়সীর নাম জানিলাম, এক্ষণে তাঁহার সৌভাগ্য পাইবার জন্য আমার মন একান্ত লোলুপ হইয়াছে।

**চূর্ণবভ্রু লুলিতস্রগাকুলং ছিন্নমেখলমলক্তকাঙ্কিতম্।**
**উত্থিতস্য শয়নং বিলাসিনস্তস্য বিভ্রমরতান্যপাবৃণোৎ॥ ২৫**

२५ अः। चूर्णबभ्रु लुलितस्रगाकुलं छिन्नमेखलम् अलक्तकाङ्कितं शयनं ( कर्तृ ) उत्थितस्य [विला]सिनः तस्य विभ्रमरतानि अपावृणोत् ॥

२५। चूर्णबभ्रू चूर्णैः व्यानतकरणैः अधोमुखावस्थितायाः स्त्रियाः [अल]कुरगलितैः कुङ्कुमादिभिः बभ्रु पिङ्गलं 'बभ्रु स्यात् पिङ्गले त्रिषु' इत्य-[मर]ः। लुलितस्रगाकुलं करिपदाख्यबन्धे स्त्रिया भूमिगतमस्तकतया [लु]लिताभिः लुलितस्रग्भिः आकुलं, छिन्नमेखलं हरिविक्रमकरणैः स्त्रिया [उत्]क्षिप्तैकचरणत्वात् गलितमेखलम्, अलक्तकाङ्कितं धेनुकबन्धे भूतल-[नि]हितकान्ताचरणत्वात् लाक्षारागरूषितं शयनं कर्तृ, उत्थितस्य शयना-[दि]ति भावः। विलासिनस्तस्य अग्निवर्णस्य विभ्रमरतानि लीलारतानि [र]तबन्धविशेषानित्यर्थः। अपावृणोत् स्फुटीचकार। व्यानतादीनां लक्षणं [र]तिरहस्ये—"व्यानतं रतमिदं प्रिया यदि स्यादधोमुखचतुष्पदाकृतिः। [त]त्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंस्थितस्थितिः॥ भूगतस्तन-[भु]जास्यमस्तकामुन्नतां स्वयमधोमुखीं स्त्रियम्। क्रामति स्वकरकृष्टमेहने [व]ल्लभे करिपदं तदुच्यते॥ योषिदेकचरणे समुत्थिते जायते हि हरि-[वि]क्रमाह्वयः। न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढवल्लभा॥ [य]तो यदि शनैरधोमुखो धेनुकं वृषवदुन्नते प्रिये॥" इति॥

২৫। অগ্নিবর্ণ যখন শয্যা হইতে গাত্রোত্থান করিতেন, তখন তাঁহার শয্যার [কো]নস্থলে অলক্তচিহ্ন, কোথাও ছিন্নকাঞ্চী, কোথাও কুঙ্কুমের পিঙ্গলরাগ, কোনস্থলে বিলুলিত মাল্য প্রভৃতি তদীয় বিবিধ রতিলীলা ব্যক্ত করিত।

स स्वयं चरणरागमादधे योषितां न च तथा समाहितः।
लोभ्यमाननयनः श्लथांशुकैर्मेखलागुणपदैर्नितम्बिभिः॥२६

२६ अः। सः स्वयं योषितां चरणरागम् आदधे, ( किन्तु ) श्लथांशुकैः नितम्बिभिः मेखलागुण-[पदै]ः लोभ्यमाननयनः ( सन् ) तथा समाहितः न ( आदधे )॥

२६। सः अग्निवर्णः स्वयमेव योषितां चरणयोः रागं लाक्षारसमादधे [अ]र्पयामास। किन्तु, श्लथांशुकैः प्रियाङ्गस्पर्शादिति भावः, नितम्बिभिः [प्रश]स्तनितम्बवद्भिः मेखलागुणपदैः जघनैः 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु [ज]घनं पुरः' इत्यमरः। लोभ्यमाननयन आकृष्यमाणदृष्टिः सन्, तथा [स]माहितोऽवहितो न आदधे, सम्यक्रागरचना स्यादिति भावः॥

২৬। তিনি স্বহস্তে রমণীগণের চরণ অলক্তরাগে রঞ্জিত করিতেন, কিন্তু যখন [তাঁ]হার মন তাহাদিগের প্রতি আকৃষ্ট হইত, তখন আর রাগরচনায় মন স্থির [থা]কিত না।

चुम्बने विपरिवर्त्तिताधरं हस्तरोधि रसनाविघट्टने।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम्॥ २७

२७ অ:। चुम्बने विपरिवर्त्तिताधरं रसनाविघट्टने हस्तरोधि सर्वतः विघ्नितेच्छं वधूरतं तस्य मन्मथेन्धनम् अभूत्॥

२७। चुम्बने प्रवृत्ते सति विपरिवर्त्तिताधरं परिहृतोष्ठं रशनाविघट्टने ग्रन्थिविस्रंसने प्रसक्ते सति हस्तं रुणद्धि वारयतीति हस्तरोधि इत्थं सर्वतः सर्वत्र विघ्नितेच्छं प्रतिहतमनोरथमपि वधूनां रतं सुरतं तस्य अग्निवर्णस्य मन्मथेन्धनं कामोद्दीपनम् अभूत्॥

২৭। তিনি রমণীগণের মুখচুম্বনে উদ্যত হইলে তাহারা মুখ পরিবর্ত্তিত করিত, বস্ত্রাকর্ষণে প্রবৃত্ত হইলে তাঁহার হস্তরোধ করিত—এইরূপে তাহারা নৃপতির অভিলাষ-পূরণের বিঘ্ন আচরণ করিতে থাকিলে উহা যেন মদনবহ্নির ইন্ধনস্বরূপ হইত।

दर्पणेषु परिभोगदर्शिनी-
र्नर्मपूर्वमनुपृष्ठसंस्थितः।
छायया स्मितमनोज्ञया वधू-
र्ह्रीनिमीलितमुखीश्चकार सः॥ २

२८ অ:। सः दर्पणेषु परिभोगदर्शिनीः वधूः नर्मपूर्वम् अनुपृष्ठसंस्थितः (सन्) स्मितमनोज्ञया छायया ह्रीनिमीलितमुखीः चकार॥

२८। सः अग्निवर्णो दर्पणेषु परिभोगदर्शिनीः सम्भोगचिह्नानि पश्यन्तीः वधूर्नर्म्मपूर्वं परिहासपूर्वम् अनुपृष्ठं तासां पृष्ठभागे संस्थितः सन् स्मितेन मनोज्ञया छायया दर्पणगतेन स्वप्रतिबिम्बेन ह्रीनिमीलितमुखीः लज्जावनतमुखीश्चकार, तमागतं दृष्ट्वा लज्जिता इत्यर्थः॥

২৮। বিলাসিনীগণ যখন দর্পণপ্রতিবিম্বে স্বস্ব উপভোগচিহ্ন দর্শন করিত, রাজা তখন তাহাদের পশ্চাদ্ভাগে আসিয়া উপস্থিত হইতেন, তখন তাহারা ভূপতির মৃদুহাস মনোরম আদর্শচ্ছায়াগত দর্শনে লজ্জাবনতমুখী হইত।

कण्ठसक्तमृदुबाहुबन्धनं न्यस्तपादतलमग्रपादयोः।
प्रार्थयन्त शयनोत्थितं प्रियास्तं निशात्ययविसर्गचुम्बनम्॥ २९

२९ অ:। प्रियाः शयनोत्थितं तं कण्ठसक्तमृदुबाहुबन्धनम् अग्रपादयोः न्यस्तपादतलं निशात्यय-विसर्गचुम्बनं प्रार्थयन्त॥

२९। प्रिया: शयनादुत्थितं तमग्निवर्णं कण्ठसक्तं कण्ठार्पितं मृदु-बाहुबन्धनं यस्मिन् तत् अग्रपादयो: स्वकीययोर्न्यस्ते पादतले यस्मिन् तत् निशात्यये विसर्गं विसृज्य गमनं, तत्र यत् चुम्बनं तत् प्रार्थयन्त। 'दुह्याच्'—इत्यादिना द्विकर्म्मकत्वम्। अत्र गोनर्दीय:—"रतावसाने यदि चुम्बनादि प्रयुज्य यायान्मदनोऽस्य वास:" इति॥

২৯। নিশাবসানে অবনীপতি অগ্নিবর্ণ যখন শয্যাপরিত্যাগ করিতেন, বিলাসিনী-গণ তখন কোমল বাহুপাশদ্বারা তাঁহার কণ্ঠদেশ আবদ্ধ ও চরণের উপর চরণ বিন্যস্ত করিয়া তাঁহার মুখচুম্বন কামনা করিত।

प्रेक्ष्य दर्पणतलस्थमात्मनो
राजवेषमतिशक्रशोभिनम्।
पिप्रिये न स तथा यथा युवा
व्यक्तलक्ष्म परिभोगमण्डनम्॥ ३०

३० अ:। युवा स: अतिशक्रशोभिनं दर्पणतलस्थम् आत्मन: राजवेषं प्रेक्ष्य तथा न पिप्रिये, यथा व्यक्तलक्ष्म परिभोगमण्डनम् (प्रेक्ष्य)॥

३०। युवा स: अग्निवर्ण: अतिशक्रं यथा तथा शोभमानम् अतिशक्र-शोभिनं दर्पणतलस्थं दर्पणसंक्रान्तम् आत्मनो राजवेषं प्रेक्ष्य तथा न पिप्रिये न तुतोष, यथा व्यक्तलक्ष्म प्रकटचिह्नं परिभोगमण्डनं प्रेक्ष्य पिप्रिये॥

৩০। যুবা নৃপতি অগ্নিবর্ণ, দর্পণতলে সুস্পষ্টলক্ষ্য সম্ভোগচিহ্নরূপ ভূষণে আপনাকে বিভূষিত দেখিয়া যেরূপ প্রীতিলাভ করিতেন, বুঝি বা ইন্দ্রশোভাবিনিন্দিত স্বীয় রাজবেশ দর্শন করিয়াও তদ্রূপ প্রীতিপ্রাপ্ত হইতেন না।

मित्रकृत्यमपदिश्य पार्श्वत: प्रस्थितं तमनवस्थितं प्रिया:।
विद्म हे शठ पलायनच्छलान्यञ्जसेति रुरुधु: कचग्रहै:॥ ३१

३१ अ:। मित्रकृत्यम् अपदिश्य पार्श्वत: प्रस्थितम् अनवस्थितं तं प्रिया: हे शठ! पलायन-च्छलानि अञ्जसा विद्म इति कचग्रहै: रुरुधु:॥

३१। मित्रकृत्यं सुहृत्कार्य्यम् अपदिश्य व्याजीकृत्य पार्श्वत: प्रस्थितम् अन्यतो गन्तुमुद्युक्तम् अनवस्थितम् अवस्थातुमक्षमं तम् अग्निवर्णं प्रिया: हे शठ! हे गूढ़विप्रियकारिन्! 'गूढ़विप्रियकृच्छठ:' इति दशरूपके। तव पलायनस्य छलानि अञ्जसा तत्त्वत: 'तत्त्वे त्वद्धाञ्जसा द्वयम्' इत्यमर:। विद्म जानीम:। 'विदो लटो वा' इति वैकल्पिक आदेश:। इति उक्त्वा इति शेष:। कचग्रहै: केशाकर्षणै: रुरुधु:। अत्र गोनर्दीय:—'ऋतुस्नाताभिगमने मित्रकार्य्ये तथापदि। त्रिष्वेतेषु प्रियतम: चन्तव्यो वारगस्यया॥' इति

অঞ্জসা বিরক্তলক্ষণপ্রস্তাবে বাৎস্যায়নঃ—'মিত্রকৃত্যং চাপদিশ্যান্যত্র শেতে' ইতি ॥

৩১। সুহৃৎকার্য্যচ্ছলে অগ্নিবর্ণ যখন পার্শ্বদেশ হইতে প্রস্থানোদ্যত হইতেন, তখন প্রমদাগণ "হে শঠ ! আমরা তোমার পলায়নের ছল বুঝিতে পারিয়াছি" এইরূপ বলিয়া কেশপাশ গ্রহণপূর্ব্বক তাঁহাকে অবরোধ করিত।

**তস্য নির্দয়রতিশ্রমালসাঃ কণ্ঠসূত্রমপদিশ্য যোষিতঃ ।**
**অধ্যশেরত বৃহদ্ভুজান্তরং পীবরস্তনবিলুপ্তচন্দনম্ ॥ ৩২**

৩২ অ:। নির্দয়রতিশ্রমালসাঃ যোষিতঃ কণ্ঠসূত্রম্ অপদিশ্য পীবরস্তনবিলুপ্তচন্দনং তস্য বৃহদ্ভুজান্তরম্ অধ্যশেরত ॥

৩২। নির্দয়রতিশ্রমেণ অলসা নিশ্চেষ্টা যোষিতঃ কণ্ঠসূত্রম্ আলিঙ্গনবিশেষমপদিশ্য ব্যাজীকৃত্য পীবরস্তনাভ্যাং বিলুপ্তচন্দনং প্রমৃষ্টাঙ্গরাগং তস্য অগ্নিবর্ণস্য বৃহদ্ভুজান্তরমধ্যশেরত বক্ষঃস্থলে শেরতে স্ম। কণ্ঠসূত্রলক্ষণন্তু—'যাঃ কুর্বতে বক্ষসি বল্লভস্য স্তনাভিঘাতং নিবিড়োপগূহাৎ। পরিশ্রমার্থং শনকৈর্বিদগ্ধাস্তৎ কণ্ঠসূত্রং প্রবদন্তি সন্তঃ ॥' ইদমেব রতিরহস্যে, স্তনালিঙ্গনমিত্যুক্তম্। তথাচ—'উরসি চ প্রিয়মুক্তৈরাদিশন্তী বরাঙ্গী স্তনযুগমুপধত্তে যৎ স্তনালিঙ্গনং তৎ' ইতি ॥

৩২। রাজার নির্দ্দয় রতিশ্রমহেতু অবসন্নাঙ্গী অঙ্গনাগণ কণ্ঠসূত্র নামক আলিঙ্গনচ্ছলে তাঁহার বিশাল বাহুবিশিষ্ট বক্ষঃস্থলে শয়ন করিত, তখন উহাদের স্থূল স্তনযুগলের আঘাতে তাঁহার অঙ্গরাগ বিলুপ্ত হইত।

**সঙ্গমায় নিশি গূঢ়চারিণং চারদূতিকথিতং পুরোগতাঃ ।**
**বঞ্চয়িষ্যসি কুতস্তমোবৃতঃ কামুকেতি চকৃষুস্তমঙ্গনাঃ ॥ ৩৩**

৩৩। সঙ্গমায় নিশি গূঢ়চারিণং চারদূতিকথিতং (তম্) অঙ্গনাঃ পুরোগতাঃ (সত্যঃ) (হে) কামুক ! তমোবৃতঃ (সন্) কুতঃ বঞ্চয়িষ্যসি ইতি চকৃষুঃ ॥

৩৩। সঙ্গমায় সুরতার্থং নিশি গূঢ়মজ্ঞাতং চরতি ইষ্টগৃহং প্রতি গচ্ছতীতি গূঢ়চারী তং চারদূতিকথিতং, চরন্তীতি চারা গূঢ়চারিণ্যঃ, 'জ্বলিতি কসন্তেভ্যো ণঃ' ইতি ণপ্রত্যয়ঃ; চারাশ্চ তাঃ দূতয়শ্চ চারদূতয়ঃ, তাভিঃ কথিতং নিবেদিতং তমগ্নিবর্ণম্ অঙ্গনাঃ পুরঃ অগ্রে গতাঃ অবরুদ্ধমার্গাঃ সত্য ইত্যর্থঃ। হে কামুক ! তমসা বৃতো গূঢ়ঃ সন্ কুতো বঞ্চয়িষ্যসীতি উপালভ্যেতি শেষঃ, চকৃষুঃ, স্বাবাসং নিন্যুরিত্যর্থঃ ॥

৩৩। তিনি যখন কোন রমণীর সঙ্গমকামনায় রজনীতে প্রচ্ছন্নভাবে রতিগৃহে গমন করিতেন, তখন অপর রমণীরা গূঢ়চারিণী দূতিদ্বারা এ সংবাদ বিদিত হইয়া

তাঁহার সম্মুখে অবস্থান করত পথরোধপূর্ব্বক "হে কামুক! আমাদিগকে বঞ্চিত করিয়া কোথায় গিয়া গোপনে যামিনীযাপন করিবে" এইরূপ বলিয়া তাঁহাকে আকর্ষণ-পূর্ব্বক স্ব স্ব গৃহে আনয়ন করিত।

योषितामुडुपतेरिवार्च्चिषां स्पर्शनिर्वृतिमसाववाप्नुवन् ।
आरुरोह कुमुदाकरोपमां रात्रिजागरपरो दिवाशयः ॥ ३४

३४ अ: । उडुपते: अर्च्चिषाम् इव योषितां स्पर्शनिर्वृतिम् अवाप्नुवन्, रात्रिजागरपर: दिवाशय: असौ कुमुदाकरोपमां प्राप ॥

३४ । उडुपतेरिन्दोरर्च्चिषां भासामिव 'ज्वालाभासोर्नपुंस्यर्चि:' इत्य-मर: । योषितां स्पर्शनिर्वृतिं स्पर्शसुखमवाप्नुवन् । किञ्च, रात्रिषु जागर-पर: दिवा दिवसेषु शेते स्वपितीति दिवाशय:, 'अधिकरणे शेते:' इत्यच् प्रत्यय: । असौ अग्निवर्ण: कुमुदाकरस्य उपमां साद्दृश्यमारुरोह प्राप ॥

৩৪। অগ্নিবর্ণ হিমাংশুর অংশুজালের ন্যায় সুখকর রমণীগণের স্পর্শসুখ অনুভব করিয়া যামিনীযোগে জাগরিত ও দিবাভাগে নিদ্রিত থাকিয়া কুমুদাকরের অনুকরণ করিয়াছিলেন।

वेणुना दशनपीड़िताधरा
वीणया नखपदाङ्कितोरव: ।
शिल्पकार्य्य उभयेन वेजिता-
स्तं विजिह्मनयना व्यलोभयन् ॥ ३५

३५ अ: । दशनपीड़िताधरा: नखपदाङ्कितोरव: वेणुना वीणया (च) उभयेन वेजिता: शिल्पकार्य्य: तं विजिह्मनयना: (सत्य:) व्यलोभयन् ॥

३५ । दशनै: पीड़िताधरा दष्टोष्ठा: । नखपदै: नखक्षतै: अङ्कितो-रव: चिह्नितोत्सङ्गा:, व्रणिताधरोरुत्वादक्षमा इत्यर्थ: । तथापि वेणुना वीणया चेत्युभयेन । अधरोरुपीड़ाकारिणेति: । वेजिता: पीड़िता: शिल्पं वेणुवीणावाद्यादिकं कुर्वन्तीति शिल्पकार्य्यो गायिका: । 'कर्म्मण्यण्' इत्यण् । 'टिड्ढाणञ्'—इत्यादिना ङीप् । तं विजिह्मनयना: कुटिल-दृष्टय: सत्य:, स्वं चेष्टितं जानन्नपि वृथा न: पीड़यतीति स्वाभिप्रायं पश्यन्त्य इत्यर्थ: व्यलोभयन् । तथाविधालोकनमपि तस्याकर्षकमेवाभूदिति भाव: ॥

৩৫। তিনি অধরদ্বারা নর্ত্তকীগণের অধরদংশন ও নখদ্বারা বক্ষঃস্থল বিক্ষত করিতেন; কিন্তু তাহারা দষ্ট-অধরদ্বারা বেণুবাদন ও ক্ষত বক্ষঃস্থলে বীণা স্থাপন এই উভয় কার্য্যে নিতান্ত ক্লিষ্ট হইলেও কুটিল-কটাক্ষবিক্ষেপ করিয়া তাঁহার প্রতি অনুরাগপ্রদর্শন করত তাঁহার মন অপহরণ করিত।

**अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्यमुपधाय दर्शयन्।**
**स प्रयोगनिपुणैः प्रयोक्तृभिः सञ्जघर्ष सह मित्रसन्निधौ ॥ ३६**

३६ अ:। अङ्गसत्त्ववचनाश्रयं नृत्यम् मिथः स्त्रीषु उपधाय दर्शयन् सः मित्रसन्निधौ प्रयोगनिपुणैः प्रयोक्तृभिः सह सञ्जघर्ष ॥

३६। अङ्गं हस्तादि, सत्त्वमन्तःकरणं, वचनं गेयञ्च आश्रयः कारणं यस्य तदङ्गसत्त्ववचनाश्रयम्। आङ्गिकसात्त्विकवाचिकरूपेण त्रिविधम् इत्यर्थः। यथाह भरतः—'सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः' इति। नृत्यमभिनयं मिथो रहसि स्त्रीषु नर्त्तकीषु उपधाय निधाय दर्शयन् सः मित्रसन्निधौ सहचरसमक्षं प्रयोगे अभिनये निपुणैः कृतिभिः प्रयोक्तृभिः अभिनयार्थप्रकाशकैः नाट्याचार्य्यैः सह सञ्जघर्ष संघर्षं कृतवान्। संघर्षः पराभिभवेच्छा ॥

৩৬। তিনি নির্জ্জনে নর্ত্তকীগণকে ত্রিবিধ আঙ্গিক বাচিক ও সাত্ত্বিক অভিনয় শিক্ষা দিয়া যখন সুহৃদ্‌গণসমক্ষে তাহাদিগের দ্বারা উহার পরীক্ষাপ্রদর্শন করিতেন, তখন প্রয়োগকলাকুশল নাট্যাচার্য্যগণের সহিত তাঁহার বিষম বাদানুবাদ উপস্থিত হইত।

**अंसलम्बिकुटजार्जुनस्रजस्तस्य नीपरजसाङ्गरागिणः।**
**प्रावृषि प्रमदबर्हिणेष्वभूत् कृत्रिमाद्रिषु विहारविभ्रमः ॥ ३७**

३७। प्रावृषि अंसलम्बिकुटजार्जुनस्रजः नीपरजसाङ्गरागिणः तस्य प्रमदबर्हिणेषु कृत्रिमाद्रिषु विहारविभ्रमः अभूत् ॥

३७। इतः प्रभृति तस्य कृत्रिमादिषु विरचितविहारप्रकारमाह—अंसेति। प्रावृषि अंसलम्बिन्यः कुटजानामर्जुनानां ककुभानाञ्च स्रजो यस्य तस्य। नीपानां कदम्बकुसुमानां रजसा अङ्गरागिणः अङ्गरागवतस्तस्य अग्निवर्णस्य प्रमदबर्हिणेषु उन्मत्तमयूरेषु कृत्रिमाद्रिषु विहार एव विभ्रमो विलासः अभूत् अभवत् ॥

৩৭। রাজা অগ্নিবর্ণ বর্ষাসমাগমে কুটজ ও অর্জ্জুনপুষ্পের মাল্যধারণ এবং কদম্ব-কুসুমের পরাগদ্বারা অঙ্গরাগসম্পাদন করিয়া মত্তময়ূরমুখরিত কৃত্রিমপর্ব্বতে বিহার করিতেন।

**विग्रहाच्च शयने पराङ्मुखी-**
**र्नानुनेतुमबलाः स तत्वरे।**
**आचकाङ्क्ष घनशब्दविक्लवास्ता**
**विवृत्य विशतीर्भुजान्तरम् ॥ ३८**

३८ श्र:। स विग्रहात् च शयने पराङ्मुखी: अबला: अनुनेतुं न तत्वरे, घनशब्दविक्लवा: विवृत्य भुजान्तरं विशती: ता: श्राचकाङ्क्ष॥

३८। प्रावृषीत्यनुषज्यते। सः अग्निवर्णो विग्रहात् प्रणयकलहात् शयने पराङ्मुखीरबला अनुनेतुं न तत्वरे न त्वरितवान्। किन्तु घनशब्देन घनगर्जितेन विक्लवा: चकिता: अतएव विवृत्य स्वयमेवाभिमुखीभूय भुजान्तरं विशती: प्रविशन्ती: 'आच्छीनद्योर्नुम्' इति नुम्विकल्पः। ता अबला आचकाङ्क्ष। स्वयंग्रहादेव साम्मुख्यमैच्छदित्यर्थः॥

৩৮। এই সময়ে তিনি প্রণয়কলহহেতু পরাঙ্মুখশায়িনী কামিনীগণকে অনুনয়-দ্বারা প্রসন্ন করিতে ব্যগ্র হইতেন না; কিন্তু মেঘের ঘনগর্জ্জনে একান্ত বিভ্রান্ত হইয়া তাহারা স্বয়ংই পার্শ্ববিবর্ত্তনপূর্ব্বক তাঁহার বক্ষঃস্থলে প্রবেশের আকাঙ্ক্ষা করিত।

कार्त्तिकीषु सवितानहर्म्यभाग्-
यामिनीषु ललिताङ्गनासखः।
अन्वभुङ्क्त सुरतश्रमापहां
मेघमुक्तविशदां स चन्द्रिकाम्॥ ३९

३९। कार्त्तिकीषु यामिनीषु सवितानहर्म्यभाक् ललिताङ्गनासखः सः सुरतश्रमापहां मेघमुक्तविशदां चन्द्रिकाम् अन्वभुङ्क्त॥

३९। कार्त्तिकस्येमा: कार्त्तिक्यः, 'तस्येदम्' इत्यण्। तासु यामिनीषु निशासु। शरद्रात्रिषु इत्यर्थः। सवितानानि उपरि वस्त्रावृतानि हर्म्याणि भजतीति सवितानहर्म्यभाक्। भजेर्ण्वि प्रत्ययः। हिमवारणार्थं सवितानमुक्तम्। ललिताङ्गनासखः स अग्निवर्णः सुरतश्रमापहां मेघमुक्ता चासौ विशदा च तां बहुलग्रहणात् सविशेषणसमासः। चन्द्रिकामन्वभुङ्क्त॥

৩৯। নরপতি কখনও রমণীগণসহ চন্দ্রাতপসুশোভিত হর্ম্ম্যতলে আরোহণপূর্ব্বক শারদীয় রজনীর সুনির্ম্মল জ্যোৎস্না সেবন করিয়া সুরতশ্রম অপনয়ন করিতেন।

सैकतञ्च सरयूं विवृण्वतीं
श्रोणिबिम्बमिव हंसमेखलम्।
स्वप्रियाविलसितानुकारिणीं
सौधजालविवरैर्व्यलोकयत्॥ ४०

४० श्र:। हंसमेखलं सैकतं श्रोणिबिम्बम् इव विवृण्वतीं स्वप्रियाविलसितानुकारिणीं सरयूं च सौधजालविवरै: व्यलोकयत्।

४०। किञ्च. हंसा एव मेखला यस्य तत् सैकतं पुलिनं श्रोणिबिम्ब-मिव बिभ्रतीम् अतएव स्वप्रियाविलसितानि अनुकरोतीति तद्विधां सरयूं सौधस्य जालानि गवाक्षाः त एव विवराणि तैर्व्यलोकयत् ॥

৪০। হংসরূপ মেখলাদামে শোভিত যে সরযূ, সৈকতরূপ নিতম্ববিস্তারপূর্ব্বক তাঁহার প্রণয়িনীগণের বিলাসানুকারিণী হইয়াছিল, মহীপতি অগ্নিবর্ণ গবাক্ষদ্বারের মধ্য দিয়া তাহা সন্দর্শন করিতেন।

**मर्मरैरगुरुधूपगन्धिभिर्व्यक्तहेमरशनैस्तमेकतः ।**
**जह्रुराग्रथनमोक्षलोलुपं हैमनैर्निवसनैः सुमध्यमाः ॥ ४१**

४१ अ:। मर्मरैः अगुरुधूपगन्धिभिः व्यक्तहेमरशनैः हैमनैः निवसनैः सुमध्यमाः एकतः आग्रथनमोक्षलोलुपं तं जह्रुः ॥

४१। मर्मरैः संस्कारविशेषात् शब्दायमानैः 'अथ मर्मरः। स्वनिते वस्त्रवर्णानाम्' इत्यमरः। अगुरुधूपगन्धिभिः व्यक्तहेमरशनैः लौल्यात् लक्ष्यमाणकनकमेखलागुणैः हैमनैः हेमन्ते भवैः 'सर्वत्राण् च तलोपश्च' इति हेमन्तशब्दादण् प्रत्ययस्तलोपश्च। निवसनैः अंशुकैः सुमध्यमाः स्त्रिय एकतो नितम्बैकदेशे आग्रथनमोक्षयोर्नीवीबन्धविस्रंसनयोः लोलुपम् आसक्तं तं जह्रुराचकृषुः ॥

৪১। সুমধ্যমা রমণীগণ মর্ম্মরধ্বনিসম্পন্ন অগুরু ধূপগন্ধি বর্ষাকালোচিত বসন পরিধান করিয়া বস্ত্রগ্রন্থিমোচনে লোলুপ নৃপতির মন হরণ করিত; তৎকালে বসনের মধ্য হইতে সেই বিলাসিনীগণের হেমময় কাঞ্চী পরিলক্ষিত হইত।

**अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु ।**
**तस्य सर्वसुरतान्तरक्षमाः साक्षितां शिशिररात्रयो ययुः ॥ ४२**

४२ अ:। निवातकुक्षिषु गर्भवेश्मसु अर्पितस्तिमितदीपदृष्टयः सर्वसुरतान्तरक्षमाः शिशिररात्रयः तस्य साक्षितां ययुः ॥

४२। निवाताः वातरहिताः कुक्षयोऽभ्यन्तराणि येषां तेषु गर्भवेश्मसु गृहान्तर्गृहेषु अर्पिताः दत्ताः स्तिमिताः निवातत्वात् निश्चला दीपा एव दृष्टयो याभिस्ताः, अत्र अनिमिषदृष्टित्वं च गम्यते। सर्वसुरतान्तरक्षमाः तापस्वेदापनोदनत्वात् दीर्घकालत्वाच्च सर्वेषां सुरतान्तराणां सुरतभेदानां क्षमाः क्रियार्हाः शिशिररात्रयस्तस्य अग्निवर्णस्य साक्षितां ययुः। विविक्तकालदेशत्वात् यथेच्छं विजहारेत्यर्थः ॥

৪২। যাবতীয় সুরতকার্য্যের উপযোগী শীতযামিনী সকল সমীরণসঞ্চারবিরহিত অন্তর্গৃহমধ্যে দীপরূপ স্তিমিত দৃষ্টি সঞ্চার করিয়া নৃপতি অগ্নিবর্ণের সুরতক্রিয়ার সাক্ষ্য প্রদান করিত।

क्षिणेन पवनेन सम्भृतं प्रेक्ष्य चूतकुसुमं सपल्लवम् ।
न्वनैषुरवधूतविग्रहास्तं दुरुत्सहवियोगमङ्गनाः ॥ ४३

४३ अ: । अङ्गनाः दक्षिणेन पवनेन सम्भृतं सपल्लवं चूतकुसुमं प्रेक्ष्य अवधूतविग्रहाः ( सत्यः ) सहवियोगं तम् अन्वनैषुः ॥

४३ । अङ्गनाः दक्षिणेन पवनेन मलयानिलेन सम्भृतं जनितं सपल्लवं कुसुमं प्रेक्ष्य अवधूतविग्रहाः त्यक्तविरोधाः सत्यो दुरुत्सहवियोगं दुःसह-हं तम् अन्वनैषुः । तद्विरहमसहमानाः स्वयमेव अनुनीतवत्य इत्यर्थः ॥

৪৩। ললনাগণ মলয়মারুতজনিত নবপল্লবশোভিত চূতকুসুম সন্দর্শন করিয়া কলহ ত্যাগপূর্ব্বক বিয়োগবিধুর বসুধাধিপতি অগ্নিবর্ণকে স্বয়ংই অনুনয় করিত।

ताः स्वमङ्कमधिरोप्य दोलया
प्रेङ्खयन् परिजनापविद्धया ।
मुक्तरज्जु निविड़ं भयच्छलात्
कण्ठबन्धनमवाप बाहुभिः ॥ ४४

४४ अ: । ताः स्वम् अङ्कम् अधिरोप्य परिजनापविद्धया दोलया मुक्तरज्जु (यथा तथा) प्रेङ्खयन् छलात् बाहुभिः निविड़ं कण्ठबन्धनम् अवाप ॥

४४ । ताः अङ्गनाः स्वम् अङ्कं स्वकीयमुत्सङ्गमधिरोप्य परिजनेन अप-द्धया सम्प्रेषितया दोलया मुक्तरज्जु त्यक्तदोलासूत्रं यथा तथा प्रेङ्खयन् लयन् भयच्छलात् पतनभयमिषात् बाहुभिः अङ्गनाभुजैः निविड़ं कण्ठ-बन्धनम् अवाप प्राप । स्वयं ग्रहाश्लेषसुखमन्वभूदित्यर्थः ॥

৪৪। তিনি প্রমদাগণকে নিজ ক্রোড়ে আরোপণপূর্ব্বক তাহাদিগকে দোলারজ্জু ত্যাগ করিতে আদেশ দিয়া পরিজনদ্বারা ঐ দোলা সঞ্চালিত করিলে তাহারা ছলে দোলা পরিত্যাগপূর্ব্বক বাহুলতাদ্বারা তাঁহার কণ্ঠ দৃঢ়রূপে আলিঙ্গন করিত।

तं पयोधरनिषिक्तचन्दनै-
र्मौक्तिकग्रथितचारुभूषणैः ।
ग्रीष्मवेषविधिभिः सिषेविरे
श्रोणिलम्बिमणिमेखलैः प्रियाः ॥ ४५

४५ अ: । प्रियाः पयोधरनिषिक्तचन्दनैः मौक्तिकग्रथितचारुभूषणैः श्रोणिलम्बिमणिमेखलैः ग्रीष्म-विधिभिः तं सिषेविरे ॥

४५। प्रिया: पयोधरेषु स्तनेषु निषिक्तम् उचितं चन्दनं येषु तै:, मौक्तिकै: ग्रथितानि प्रोतानि चारुभूषणानि येषु तै:, मुक्ताप्रायाभरणै: इत्यर्थ:। श्रोणिलम्बिन्यो मणिमेखला: मरकतादिमणियुक्तकटिसूत्राणि येषु तादृशै: ग्रीष्मवेषविधिभि: उष्णकालोचितनेपथ्यविधानै: शीतलोपायै: इत्यर्थ:। तम् अग्निवर्णं सिषेविरे॥

४५। निदाघदिনে তদীয় প্রণয়িণীগণ স্তনযুগলে চন্দনলেপন, নিতম্বদেশে লম্বমান কাঞ্চী প্রদান এবং মুক্তাবহুল মনোহর অলঙ্কার ধারণ প্রভৃতি গ্রীষ্মোচিত বেশবিন্যাস করিয়া তাঁহার সেবা করিত।

**यत् स लग्नसहकारमासवं रक्तपाटलसमागमं पपौ।**
**तेन तस्य मधुनिर्गमात् कृशश्चित्तयोनिरभवत् पुनर्नव:॥ ४६**

४६ अ:। स: लग्नसहकारं रक्तपाटलसमागमम् आसवं पपौ (इति) यत्, तेन मधुनिर्गमात् कृश: तस्य चित्तयोनि: पुन: नव: अभवत्॥

४६। स: अग्निवर्णो लग्न: सहकारसूतपल्लवो यस्मिन् तं रक्तपाटलस्य पाटलकुसुमस्य समागमो यस्य तम् आसवं मद्यं पपौ इति यत्, तेन आसवपानेन मधुनिर्गमात् वसन्तापगमात् कृशो मन्दवीर्य्यस्तस्य चित्तयोनि: काम: पुनर्नव: प्रबल: अभवत्॥

৪৬। এই সময়ে মহীপতি অগ্নিবর্ণ রক্তপাটলকুসুমে সুশোভিত সহকারপল্লবযুক্ত আসবপান করিয়া বসন্তাপগমে নিতান্ত কৃশ মনোভবকে যেন পুনরায় নবীন করিয়া তুলিলেন।

**एवमिन्द्रियसुखानि निर्विशन्नन्यकार्य्यविमुख: स पार्थिव:।**
**आत्मलक्षणनिवेदितानृतूनत्यवाहयदनङ्गवाहित:॥ ४७**

४७ अ:। अनङ्गवाहित: अन्यकार्य्यविमुख: स: पार्थिव: एवम् इन्द्रियसुखानि निर्विशन् आत्मलक्षणनिवेदितान् ऋतून् अत्यवाहयत्॥

४७। एवमनङ्गवाहित: कामप्रेरितो अन्यकार्य्यविमुख: स पार्थिव: इन्द्रियाणां सुखानि सुखकराणि शब्दादीनि निर्विशन् अनुभवन् आत्मनो लक्षणै: कुटजस्रग्धारणादिचिह्नै: निवेदितान् अयम् ऋतु: इदानीं वर्त्तत इति ज्ञापितान् ऋतून् वर्षादीन् अत्यवाहयत् अगमयत्॥

৪৭। এইরূপে অনঙ্গকর্ম্মা সেই কামপরায়ণ নৃপতি অগ্নিবর্ণ মদনের প্রবর্ত্তনায় ইন্দ্রিয়সুখে আসক্ত থাকিয়া স্বীয় শরীরধৃত কুটজমালাদি চিহ্নদ্বারা নিবেদিত ঋতুসকল অতিবাহিত করিলেন।

तं प्रमत्तमपि न प्रभावतः
शेकुराक्रमितुमन्यपार्थिवाः ।
आमयस्तु रतिरागसम्भवो
दक्षशाप इव चन्द्रमक्षिणोत् ॥ ४८

४८ अः। प्रमत्तम् अपि तं प्रभावतः अन्यपार्थिवाः आक्रमितुं न शेकुः, रतिरागसम्भवः आमयः तु दक्षशापः चन्द्रम् इव अक्षिणोत् ॥

४८। प्रमत्तं व्यसनासक्तमपि तं नृपं प्रभावतः अन्यपार्थिवा आक्रमितुम् अभिभवितुं न शेकुर्न शक्ताः। रतिरागसम्भव आमयो व्याधिस्तु क्षयरोग इत्यर्थः। दक्षस्य दक्षप्रजापतेः शापः चन्द्रमिव अक्षिणोत् अकर्शयत्। शापोऽपि रतिरागसम्भव इति। तत्र दक्षः किल अन्याः स्वकन्या उपेक्ष्य रोहिण्यामेव रममाणं राजानं सोमं शशाप। स शापश्च अद्यापि क्षयरूपेण तं क्षिणोतीत्युपाख्यायते ॥

৪৮। শত্রুগণ তাঁহাকে এতাদৃশ ব্যসননিরত দেখিয়াও তাঁহার প্রবল পরাক্রমহেতু আক্রমণ করিতে সাহসী হয় নাই, কিন্তু চন্দ্রের দক্ষশাপের ন্যায় স্ত্রীসম্ভোগজনিত ভীষণ ক্ষয়রোগ তাঁহাকে একেবারে ক্ষয় করিয়া ফেলিল।

दृष्टदोषमपि तन्न सोऽत्यजत् सङ्गवस्तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्य्यते ॥४९

४९ अः। भिषजाम् अनाश्रवः सः दृष्टदोषम् अपि तत् सङ्गवस्तु न अत्यजत्, (तथाहि) इन्द्रियगणः स्वादुभिः विषयैः हृतः तु (चेत्) ततः दुःखं निवार्य्यते ॥

४९। भिषजां वैद्यानामनाश्रवो वचसि न स्थितः। 'वचने स्थित आश्रवः' इत्यमरः। अविधेय इत्यर्थः। स दृष्टदोषमपि रोगजननादिति शेषः। तत् सङ्गस्य वस्तु सङ्गवस्तु स्त्रीमद्यादिकं सङ्गजनकं वस्तु न अत्यजत्। तथाहि—इन्द्रियगणः स्वादुभिः विषयैः हृतस्तु हृतश्चेत् ततस्तेभ्यो विषयेभ्यः दुःखं कृच्छ्रेण निवार्य्यते यदि, वार्य्यतेति शेषः। दुस्त्यजाः खलु विषया इत्यर्थः ॥

৪৯। তিনি চিকিৎসকগণের নিষেধে কর্ণপাত করিতেন না এবং রমণী ও সুরা-সম্ভোগের দোষদর্শন করিয়াও তাহা পরিত্যাগ করিতে পারিলেন না। বস্তুতঃ—ইন্দ্রিয়গণ রমণীয় বিষয়দ্বারা একবার আকৃষ্ট হইলে উহাদিগকে তাহা হইতে নিবৃত্ত করা নিতান্ত ক্লেশকর হইয়া থাকে।

तस्य पाण्डुवदनाल्पभूषणा
सावलम्बगमना मृदुस्वना।
राजयक्ष्मपरिहानिराययौ
कामयानसमवस्थया तुलाम्॥ ५०

५० अ:। तस्य पाण्डुवदना अल्पभूषणा सावलम्बगमना मृदुस्वना राजयक्ष्मपरिहानि: कामयान-समवस्थया तुलाम्: आययौ॥

५०। तस्य राज्ञ: पाण्डुवदना अल्पभूषणा परिमिताभरणा सावलम्बं दासादिहस्तावलम्बसहितं गमनं यस्यां सा सावलम्बगमना मृदुस्वना हीनस्वरा राज्ञ: सोमस्य यक्ष्मा राजयक्ष्मा क्षयरोग: तेन या परिहानि: क्षीणावस्था सा, कामयते विषयान् इच्छति कामयान:, कमेर्णिङभावात् शानच्, 'अनित्यमागमशासनम्' इति मुमागमाभाव:। एतदेव अभिप्रेत्य उक्तं वामनेनापि—'कामयानशब्द: सिद्धोऽनादिश्च' इति। तस्य समवस्थया कामुकावस्थया तुलां साम्यमाययौ प्राप कालकृतो विशेषाऽवस्था। 'विशेष: कालिकोऽवस्था' इत्यमर:॥

৫০। তাঁহার মুখমণ্ডল পাণ্ডুবর্ণ ধারণ করিল, আভরণপরিধানে রুচি তিরোহিত হইল, কণ্ঠস্বর ক্ষীণ হইয়া আসিল এবং যষ্টি অবলম্বন ভিন্ন তাঁহার আর গমনাগমনের সামর্থ্য রহিল না। এইরূপ যক্ষ্মা রোগে ক্ষয়প্রাপ্ত হইয়া তিনি কামিজনের তুল্য অবস্থা লাভ করিলেন।

व्योम पश्चिमकलास्थितेन्दु वा
पङ्कशेषमिव घर्म्मपल्वलम्।
राज्ञि तत्कुलमभूत् क्षयातुरे
वामनार्चिरिव दीपभाजनम्॥ ५१

५१ अ:। राज्ञि क्षयातुरे (सति) तत् कुलं पश्चिमकलास्थितेन्दु व्योम वा, पङ्कशेषं घर्म्मपल्वलम् इव, वामनार्चि: दीपभाजनम् इव अभूत्॥

५१। राज्ञि क्षयातुरे सति तत्कुलं रघुकुलं पश्चिमकलायां स्थित इन्दु: यस्मिन् तत् कलावशिष्टेन्दु व्योम वा व्योम इव। वाशब्द इवार्थे। यथाह दण्डी—'इववद् वायथाशब्दौ' इति। पङ्कशेषं घर्मपल्वलमिव वामनार्चि: अल्पशिखं दीपभाजनं दीपपात्रमिव अभूत्॥

৫১। মহীপতি ক্ষয়কাতর হইলে সেই রঘুকুল কলামাত্রাবশিষ্ট শশধরযুক্ত আকাশ-মণ্ডলের ন্যায়, পঙ্কাবশিষ্ট নিদাঘপল্বলের ন্যায় এবং অল্পশিখাসমন্বিত নির্ব্বাণোন্মুখ প্রদীপপাত্রের ন্যায় প্রতীয়মান হইতে লাগিল।

बाढ़मेष दिवसेषु पार्थिवः कर्म्म साधयति पुत्रजन्मने ।
इत्यदर्शितरुजोऽस्य मन्त्रिणः शश्वदूचुरघशङ्किनीः प्रजाः॥५२

५२ अः । बाढ़म् एषः पार्थिवः दिवसेषु पुत्रजन्मने कर्म्म साधयति इति अदर्शितरुजः ( सन्तः ) अस्य मन्त्रिणः अघशङ्किनीः प्रजाः शश्वत् ऊचुः ॥

५२ । बाढ़ं सत्यम् एषः पार्थिवः दिवसेषु पुत्रजन्मने पुत्रोदयार्थं कर्म्म जपादिकं साधयति इत्येवम् अदर्शितरुजो निगूहितरोगाः सन्तः अस्य राज्ञो मन्त्रिणः अघशङ्किनीः व्यसनशङ्किनीः प्रजाः शश्वत् ऊचुः ॥

৫২। পৃথিবীপতি অগ্নিবর্ণের মন্ত্রিগণ অনিষ্টাশঙ্কিনী প্রজাদিগকে “রাজা এক্ষণে সন্তানোৎপাদনের জন্য দিবসে কোন দৈবকার্য্যের অনুষ্ঠান করিতেছেন” এইরূপ বলিয়া তাঁহার পীড়া গোপন করিতেন।

स त्वनेकवनितासखोऽपि सन्
पावनीमनवलोक्य सन्ततिम् ।
वैद्ययत्नपरिभाविनं गदं
न प्रदीप इव वायुमत्यगात् ॥ ५३

५३ अः । सः तु अनेकवनितासखः ( सन् ) अपि पावनीं सन्ततिम् अनवलोक्य वैद्ययत्नपरिभाविनं गदं प्रदीपः वायुम् इव न अत्यगात् ॥

५३ । स तु अग्निवर्णः अनेकवनितासखः सन् अपि पावनीं पितृण-मोचनीं सन्ततिम् अनवलोक्य पुत्त्रमनवाप्येत्यर्थः । वैद्ययत्नपरिभाविनं गदं रोगं प्रदीपो वायुमिव न अत्यगात् न अतिचक्राम, ममारेत्यर्थः ॥

৫৩। নৃপতি অনেক বনিতাসত্ত্বেও কুলপাবন পুত্রের মুখদর্শন করিতে না পারিয়া চিকিৎসার অসাধ্য সেই ক্ষয়রোগে বাতাহত প্রদীপের ন্যায় ইহলীলা সংবরণ করিলেন।

तं गृहोपवन एव सङ्गताः
पश्चिमक्रतुविदा पुरोधसा ।
रोगशान्तिमपदिश्य मन्त्रिणः
सम्भृते शिखिनि गूढ़मादधुः ॥ ५४

५४ अः । पश्चिमक्रतुविदा पुरोधसा सङ्गताः मन्त्रिणः गृहोपवने एव रोगशान्तिम् अपदिश्य तं सम्भृते शिखिनि गूढ़म् आदधुः ॥

५४। पश्चिमक्रतुविदा अन्त्येष्टिविधिज्ञेन पुरोधसा सङ्गताः सचिवाः मन्त्रिणः गृहोपवन एव गृहाराम एव। 'आरामः स्यादुपवनम्' इत्यमरः। रोगशान्तिमपदिश्य शान्तिकर्म्म व्यपदिश्य तम् अग्निवर्णं सम्भृते समिद्धे शिखिनि अग्नौ गूढम् अप्रकाशम् आदधुर्निदधुः॥

৫৪। অমাত্যগণ অন্ত্যেষ্টিক্রিয়াভিজ্ঞ পুরোহিতের সহিত পরামর্শ করিয়া রোগশান্তিব্যপদেশে তাঁহাকে গৃহোপবনে আনয়নপূর্ব্বক গোপনে রাজার শবদেহ প্রজ্বলিত অগ্নিতে দগ্ধ করিলেন।

तैः कृतप्रकृतिमुख्यसंग्रहैराशु तस्य सहधर्म्मचारिणी।
साधु दृष्टशुभगर्भलक्षणा प्रत्यपद्यत नराधिपश्रियम्॥ ५५

५५ अः। आशु कृतप्रकृतिमुख्यसंग्रहैः तैः मन्त्रिभिः साधु दृष्टशुभगर्भलक्षणा तस्य सहधर्म्मचारिणी नराधिपश्रियं प्रत्यपद्यत॥

५५। आशु शीघ्रं कृतं प्रकृतिमुख्यानां पौरजनप्रधानानां संग्रहः सन्निपातनं यैः तादृशैः तैः मन्त्रिभिः साधु निपुणं दृष्टशुभगर्भलक्षणा परीक्षितशुभगर्भचिह्ना तस्य अग्निवर्णस्य सहधर्म्मचारिणी नराधिपश्रियं प्रत्यपद्यत राजलक्ष्मीं प्राप॥

৫৫। অনন্তর মন্ত্রিগণ সত্বর প্রধান প্রধান পুররমণীগণকে আনয়নপূর্ব্বক পরীক্ষা করিয়া প্রত্যক্ষদৃষ্ট শুভ গর্ভলক্ষণা তদীয় প্রধানা মহিষীকে রাজলক্ষ্মী অর্পণ করিলেন।

तस्यास्तथाविधनरेन्द्रविपत्तिशोका-
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः।
निर्वापितः कनककुम्भमुखोज्झितेन
वंशाभिषेकविधिना शिशिरेण गर्भः॥ ५६

५६ अः। तथाविधनरेन्द्रविपत्तिशोकात् उष्णैः विलोचनजलैः प्रथमाभितप्तः तस्याः गर्भः कनककुम्भमुखोज्झितेन शिशिरेण वंशाभिषेकविधिना निर्वापितः॥

५६। तथाविधया नरेन्द्रविपत्त्या यः शोकः तस्मात् उष्णैः विलोचनजलैः प्रथमाभितप्तः तस्या गर्भः कनककुम्भानां मुखैः धारैः उज्झितेन शिशिरेण शीतलेन वंशाभिषेकविधिना लक्षणया अभिषेकजलेन निर्वापितः आप्यायितः॥

৫৬। মহীপতির বিরহজনিত শোকোষ্ণসলিলে রাজমহিষীর গর্ভ প্রথমত সন্তপ্ত হইল বটে, কিন্তু পরে আবার বংশোচিত সুবর্ণকলসনিঃসৃত শীতল অভিষেকবারিদ্বারা তাহা নির্ব্বাপিত হইল।

